पाराशर्यविजये प्रथमाध्यायप्रथमपादस्य सूत्राणामनुक्रमणिका ।

—(*)—

## अधिकरणसूची ।

श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावळी ।

# पाराशर्यविजयः ।

पाराशर्यो दयालुर्जयति बहुविधान् वेदमार्गप्रतीपान्
सम्यक्तर्काख्यशस्त्रैः प्रतिभटजनतागर्वसर्वङ्कषैस्तैः ।
ब्रह्मण्यैश्वर्यभूती गुणगणविततिं हर्तुकामान् कुतर्कै-
स्तैस्तैर्दुर्लङ्घ्यमायाविततिविरचितैर्न्यायमार्गप्रहीणैः ॥

वेदापहारिणं दैत्यं मीनरूपी निराकरोत् ।
तदर्थहारिणस्सर्वान् व्यासरूपी महेश्वरः ॥
पाराशर्यजयोऽस्माभिः ख्याप्यतेऽद्य सतां मुदे ।
वाधूलश्रीनिवासार्यगुरूणामनुकम्पया ॥

श्रियःपतिरवाप्तसमस्तकामस्समस्तकल्याणगुणगणभूषितो भगवानात्मतनूजाय ब्रह्मणे वितीर्णं ब्रह्मशेवधिं वेदबृन्दं दैत्येनापहृतं मीनरूपेणावतीर्य दैत्यं तं संहृत्य पुनर्ब्रह्मणे प्रदाय तदर्थं कुदृष्टिभिरपहृतं पुनर्व्यासरूपेणावतीर्य कुदृशो निर्जित्य विबुधेभ्यः प्रददौ ।

तत्र तावदिदं विचार्यते- किं ब्रह्ममीमांसाशास्त्रं द्वैतविषयं उताद्वैतविषयमिति ? द्वैतविषयमिति केचित् । शुद्धाद्वैतविषयमिति परे । विशिष्टाद्वैतविषयमिति वेदान्तिनः । तत्र पूर्ववादिनः "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यादिसूत्रविरोधात्तत्समानार्थकश्रुतिविरोधाच्च निरस्ताः। परे प्रष्टव्याः, किं सूत्रस्वारस्यादद्वैतविषयत्वं उत तस्यैव तात्विकत्वात् ?

उच्यते — 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र ब्रह्मणि प्रपञ्चाध्यासो न केनापि पदेन प्रतीयते ; चिदचितोरभेदासम्भवात् आध्यासिकाभेदपरो ऽनन्यत्वशब्दो वाच्यः, सच ब्रह्मणि प्रपञ्चाध्यासाधीन इत्येवमध्यासपरत्वं सूत्रस्येति चेन्न; - तात्त्विकाभेदपरत्वे सम्भवति काल्पनिकाभेदपरत्वासम्भवात् । तत्सम्भवश्च वक्ष्यते । 'तद्गुणसारत्वात्' 'यथा च तक्षोभयथे' ति सूत्रद्वयेपि मिथ्यात्वगन्धोपि नाघ्रायते, स्वोत्प्रेक्षितार्थे सूत्रयोर्यथाकथञ्चिदाकर्षणं च निरसिष्यते । 'अंशोनानाव्यपदेशा' दित्यत्र नानात्वेन व्यपदेशो हि भेदव्यपदेशः, तत्र प्रकृतत्वाद्ब्रह्म प्रतियोगि, तस्माद्ब्रह्मणो भेदव्यपदेशादित्यर्थः । एवं च ब्रह्मणो भेदव्यपदेशे कथं ब्रह्मांशत्वसिद्धिः । नहि घटाकाश आकाशादन्यः । विस्तरस्तु तत्सूत्रव्याख्यानावसरे । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे' त्यत्र आत्मशब्दो ऽन्तर्यामिपरः । तस्मात्किमपि सूत्रमद्वैतविषयं न पश्यामः ।

नाप्युपनिषदामद्वैतविषयता । 'सदेवे' त्यत्र अग्र इत्युक्तेर्नाद्वैतसिद्धि । 'तदैक्षत बहुस्यामि' त्येतदुपयुक्तार्थश्च पूर्ववाक्ये वक्तुमुचित', सच कार्याभाव एव । 'यदेवेह तदमुत्रे' त्यत्र खण्डादौ 'पराञ्चि खानि व्यतृणत्स्वयम्भू' तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि' ति जीवात्मस्वरूपं प्रतिपाद्य, तमेवार्थं 'पराचः कामाननुयन्ति बालाः ते मृत्योर्यान्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्वथ न प्रार्थयन्ते ॥' इति विवृत्य, उत्तरग्रन्थेन ब्रह्मस्वरूपं प्रतिपाद्यते । प्रतीचो ज्ञानोपायः क इत्यत्राह—

'येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥
एतद्वै तदि' ति ।

एवं विभागः प्रत्यक्पदानुसारात्कृतः । स्वयमेव हि प्रत्यगात्मान्तरमपि स्वापेक्षया परागेव । कृत्स्नमपि भगवत्परमेववा, अन्तरात्मपदानुसारात् । प्रत्यगात्मशब्दः तदन्तर्यामिपरः, येनैकेनैवानन्तो जीवलोकः- रूपादीन् विजानाति तदधीनो जानाति । अत्र रूपादिसकलदर्शनहेतुभूते अस्मिन् विद्यमाने किं परिशिष्यते, तत्प्रसादेन दुर्विज्ञेयमपि ज्ञास्यत एवेत्यर्थः । ' येने ' ति परांचि खानीत्येतदर्थोनूदितः । किं तादृशं वस्त्वित्यत्राह ' एतद्वै तदि ' ति, रूपादिसकलदर्शनहेतुभूतं वस्तु ' तद्विष्णोः परमं पदमि ' ति पूर्वोक्तमित्यर्थः । शङ्करेणाप्येवमेव व्याख्यातम् ।

' स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
य इदं मध्वदं वेद आत्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥
एतद्वै तदि ' ति ।

स्वप्नान्तम्— स्वप्नमध्यगत पदार्थम्, जागरितान्तम्— जागरितमध्यगतं पदार्थम्, अन्तशब्दस्य निश्चयार्थस्य तद्विषयलक्षकत्वात्; यद्वा स्वप्नस्य— निद्रायाः, अन्त - अवधि, जागरितम्, तस्यान्तः- स्वप्नः, अन्तशब्दस्तत्सम्बन्धिपदार्थपरः, एवं पूर्वोक्तं रूपादिकमेव द्वेधा विभज्य दर्शितम् । तं महान्तं इत्यन्वयः । अनेन ' किमत्र परिशिष्यत ' इत्येतद्विवृतम् । य, मध्वदम् - कर्मफलभोक्ता जीवः, विभक्तिव्यत्ययश्छान्दसः। इदम्-आत्मानम्, इदंशब्देपि लिङ्गव्यत्ययश्छान्दसः, यद्वा, मध्वदम्-निरतिशयानन्दतृप्तम्, यएवंविधं भूतभव्येशानं परमात्मानं वेद स ततो भूतभव्यान्न विजुगुप्सते, भगवदात्मकतया सर्वं तस्योपादेयमिति भावः ।

'य पूर्वं तपसो जातमद्भ्य पूर्वमजायत ।
गुहा प्रविश्य तिष्ठन्त यद्भूतेभिर्व्यपश्यत ॥
एतद्व तदि' ति ।

य परमात्मा, पूर्वम्-सर्गाद्यकाले, तपस-सङ्कल्पात्, जातम् चतुर्मुखम् अद्भ्य अबुपलक्षितभुवनेभ्य, पूर्वमजीजनत्, करणकळे बरयोगेन हृदयगुहा प्रविश्य भूतेम्सह तिष्ठन्तम्, अपश्यत भगवानेव पूर्वं चतुर्मुखं सृष्ट्वा स्वानुग्रहलब्धशक्तिविशेषेण भूतै स्वकार्यभूत भुवनादिभिस्सह तिष्ठन्तमपश्यदित्यर्थ । एतद्वै तत् पूर्ववत् ।

'या प्राणेन सम्भवत्यदितिर्देवतामयी ।
गुहा प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥
एतद्व तदि' ति ।

हृदयगुहा प्रविश्य तिष्ठन्ती परदेवतारूपा अदिति, प्राणेन जीवेन, सम्भवति तद्द्वारा ज्ञानविकासशरीरसम्बन्धरूपस्थूलावस्थाभाग्भवति, भूतेभि भूतेश्च, स्थूलावस्थाभाग्भवति । यद्वा जीवद्वारक सम्भवे वा हेतूपन्यास । भूतेभिरिति विशिष्टोपादानत्वमुक्तम् । एतद्वै तदिति पूर्ववत् । बृहदारण्यके तृतीये अध्याये द्वितीये ब्राह्मणे 'स यद्यदेवा सृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्व सर्वस्यैतस्यात्ता भवति सर्वमस्यान्न भवति य एवमदितेरदितित्वं वेद' ति परमात्मन्यदिति शब्दनिर्वचनात् एव व्याख्यातम् । यद्वा कर्मफलान्यत्तीत्यदितिर्जीव अत्तीत्यदिति रिति बृहदारण्यकनिरुक्त्यनुसारादेव, एवहि प्राणशब्द स्वरसार्थ, मयट्प्रत्ययश्च स्वार्थ, अन्यथा हि मयडस्वार्थिकतया व्यर्थ स्यात् । ततश्च, देवतामयी इन्द्रियप्रचुरा, इन्द्रियाधीनभोगेति तात्पर्यम् । 'या भूतेभिर्व्यजायते' त्युक्त शरीरसम्बन्धनिबन्धन जन्म च जीवस्यैव प्रसिद्धम् । एतद्वतदिति तत्त्वमसीतिवत् ।

अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।
दिवे दिव ईड्यो जागृवद्भिः हविष्मद्भिर्मनुष्येभिरग्निः ॥
'एतद्वै तदि' ति ।

अनेन गुहां प्रविश्य स्थितो दृष्टान्त उच्यते; अन्तर्यामित्वे वा । गर्भिणीभिस्सुभृतो गर्भ इवारण्योर्निहितो जातवेदश्शब्दवाच्योऽग्निः, जागृवद्भिः - अवहितैः, हविष्मद्भिः - प्रशस्तसोमादिहविर्युक्तैः, मनुष्येभिः - मनुष्यैः, दिवेदिवे - तत्तत्स्वर्गमुद्दिश्य, ईड्यः । दिने दिन इत्यपरे । गुहास्थे अन्तर्यामिणि वा दार्ष्टान्तिके तात्पर्यम् । इदं वाक्यं अग्न्यन्तर्यामिपरं वा । एतद्वै तत्, पूर्ववत् ।

यतश्चोदेति सूर्योऽस्तं गच्छति यत्र च ।
तं देवास्सर्वेऽर्पिताः तदु नात्येति कश्चन ॥
एतद्वै तदि' ति ।

तद्वस्तु, ब्रह्मरुद्रादिः कोऽपि नात्येति, तदर्पिततया तन्नियाम्यत्वात् । एतद्वै तत् - पूर्ववत् ।

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥
मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।
मृत्योस्स मृत्यु गच्छति य इह नानेव पश्यति ॥
अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥
एतद्वै तदि' ति ।

एवं सर्वप्रपञ्चाधिष्ठातृतया वर्तमानं वस्त्वेव, अमुत्र- मुक्तप्राप्यं च । 'यदमुत्रे' ति तात्पर्यातिरेकव्यापनाय । यस्त्वस्मात्प्राप्यस्य भेदं

पश्यति स पुनरससायेव भवति । मनसैव - ज्ञानेनैव, इद वस्त्वाप्तव्यम्. इह प्रपञ्चे, नानाभूतम् तेन विनाभूतम्, स्वतन्त्र वस्तु किमपि नास्तीत्यर्थ, 'यतश्चोदेति सूर्यो त गच्छति यत्र च । त देवास्सर्वेऽर्पिता तदु नात्येति कश्चने' ति अपृथक्सिद्धत्वावगमात्, अतोनान्यत्र कुत्रचिताद शत्वशङ्कावकाश इति भाव । यद्वा - 'मनसैवेदमाप्तव्यम्' इति भगवत्प्राप्तिसाधनस्य प्रस्तुतत्वान्मोक्षसाधने यो नानात्व पश्यति कर्मणोन्यस्य वा साधनत्व पश्यतीति भाव । एतद्वै तत् पूर्ववत् । एतद्वैतदित्यभ्यास देवतान्तरस्य परत्वशङ्कानिरासाय । बृहदारण्यके 'नेह नानास्ति किञ्चने' ति वाक्यमप्युक्तार्थकम्, तत्रैव 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित ।' इत्यपृथक्सिद्धत्वावगमात् ।

यस्तु सर्वाणि भूतानी' त्यत्र, 'यस्मिन् यदा, तत्र तदा. एकत्वमनुपश्यत -सर्वव्यापके एकत्व पश्यत, सर्वव्यापक वस्त्वन्तर नास्तीति पश्यत इत्यर्थ ।

'इद ब्रह्मेद क्षत्र' मित्यत्र ब्रह्मक्षत्रादिवत्सर्वदेवताना भगवद्विभूतित्वान्नान्यत्र तत्तुल्यत्वशङ्कावकाश इति भाव । 'यत्रहि द्वैतमिव भवती' त्यत्र यत्र यदा, द्वैत भवति द्वैतबुद्धिर्भवति, तत् तदा, इतर स्वतन्त्र, इतरेण स्वतन्त्रकरणेन, इतरम् स्वतन्त्रम्, जिघ्रति। 'केने' त्युत्तरत्र वक्ष्यमाणत्वात् इतरेणेत्यध्याहार्यम् । स्वतन्त्रोह स्वतन्त्रकरणेन स्वतन्त्र वस्तु जिघ्रामीति बुद्धिर्भवतीति तात्पर्यम् । एवमुत्तरत्रापि योज्यम् । यत्र यदा, अस्य ज्ञातु, सर्वमात्मैवाभूत् परतन्त्रत्वेन ज्ञातमभूदिति । इद वाक्य मितरमिथ्यात्वपरमिति पक्षे, यदा द्वैतबुद्धिर्भवति तदा इतर इतर जिघ्रति यदा सर्वमात्मैवेत्यद्वैतबुद्धिर्भवति तदा सर्वस्य निवृत्ते केन क जिघ्रेत्, करणाभावात् ज्ञेयाभावाच्चेति नार्थ, सर्वमात्मैवाभूदित्यस्याभेदपरत्वे अविदुषे बाधात्, याथार्थ्यपरत्वे विदुषे बाधात्। यद्वा-यदा द्वैतबुद्धिर्भवति, तदा इतरोहमितरेणेतर जिघ्रामीति बुद्धिर्भवति यदात्वद्वैतबुद्धिर्भवति तदा इतरोहमितरेण

इतरं जिघ्रामीति बुद्धिर्न भवतीत्यपि नार्थः, 'यत्रत्वस्य सर्वमि' तिं दोषतादवस्थ्यात्; अद्वैतज्ञानिनोपि मिथ्यात्वेन ब्रह्मणोन्यमेव गन्धन्त थाभूतेनैव घ्राणेनैव जिघ्रामीति ज्ञानाच्च । 'यत्र त्वस्य सर्वमात्मैवाभूदि' त्युक्तसार्वात्म्यबुद्धिः केन भवतीत्यत्राह 'येनेदमि' ति । ततोन्येन केन विजानीयात् तेनैव विजानीयादिति भावः । पश्यतीत्यादिना प्रकृतं जीवस्य ज्ञानमपि तेनैवेत्याह 'विज्ञातार' मिति । भगवत्प्रसादादृते स्वस्वरूपमपि केन विजानीयादित्यर्थः । पूर्वत्र 'स यथा सैन्धवखिल्य' इति मोक्षे भेदप्रतिपादनादिदं वाक्यं यथोक्तार्थपरमेव ।

"अदृष्टो द्रष्टे" त्यत्रापि अदृष्टो द्रष्टा इतोन्यो नास्तीत्येवं योज्यम् । अनेनान्यस्य परत्वनिषेधसिद्धेः चिदचिद्वैशिष्ट्यमपि नान्यस्येति फलितम् ।

"ब्रह्मा नारायण" इत्यत्रापि एतादृशसर्वप्रपञ्चविभूतिको द्वितीयो नास्तीत्यर्थः ।

"अद्वयोह्ययमात्मे" त्यत्रापि, अद्वय - स्वतुल्यद्वितीयरहित इत्यर्थ । "नह्यस्ति द्वैतसिद्धि" रित्यत्रापि अद्वितीयशब्द स्वतुल्यद्वितीयराहित्य एव स्वरस, तत्रैव भूरिप्रयोगात् । ननु द्वितीयनिषेधमात्रे, तद्विवक्षाया हि द्वितीय नेत्येवोच्येत, नत्वद्वितीय इति, अन्योपसर्जनतया प्रतिपादने प्रयोजनाभावात् । तस्मान्निस्समत्वप्रतिपादनार्थमेवाद्वितीयपदप्रयोग । स्वाभिलषितार्थपरत्वे अस्वारस्यात् । एवंच "नह्यस्ति द्वैतसिद्धि" रित्यपि तत्परमेव ।

"सएष मायापरिमोहितात्मे" त्यत्रापि 'सएवे' ति 'आत्मान मरणिं कृत्वा प्रणव चोत्तरारणिम् । ध्याननिर्मथनादेव पाश दहति पण्डित' इति पूर्ववाक्ये पण्डितशब्देन प्रकृतो जीवः परामृश्यते । 'स्वप्नेतु जीव' इत्यत्र निर्दिष्टो जीवशब्दस्स इत्यनेन सम्"यते । अनेन

तस्यैव पाशबन्धप्रकार उच्यते । 'स्वमायये' ति । स्वगोचरमाययेत्यर्थः, नतु स्वाधीनमाययेत्यर्थः । जीवलोकः- स्वाप्रमित्रादिलोकः । 'तमोभिभूत' इति । तमसाभिभवेन ज्ञानसङ्कोचात् परमात्मनि लीनो भवतीत्यर्थः । 'जन्मान्तरे' ति । जन्मान्तरारम्भककर्मयोगवशात्, स्वपिति- म्रियते, सकलः-प्रबुद्धः,अनेन स्वपितीति निर्दिष्टमरणप्रतिसम्बन्धिभूतजीवनं लक्ष्यते। पुरत्रयम्- जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयम्, तत्तद्दशायां जीवाश्रयभूतप्रदेश विशेषो वा । 'शरीरमास्थाय करोति सर्वमि' त्यनेन प्रसक्तं स्वातन्त्र्यं वारयितुमाह 'तत्सुजातमि' ति । सर्वाधारे आनन्दमये सर्वज्ञे यस्मिन् पुरत्रयोपलक्षितो जीवः लयं याति तत एवास्य जीवस्य भोग्यभोगोपकरणभोगस्थानरूपेण तदवान्तरवैजात्येन च विचित्रं सकलमपि वस्तुजातं सम्यगेव निष्पन्नम् । 'एतस्मात्' — तत इत्यादिना निर्दिष्टात्परमात्मनः । एतच्च जगत्कारणत्वं विशिष्टोपादानत्वात्मकमिति तत्वमसीतिवदुपसंहरति 'तत्त्वमेव त्वमेवतदि' ति ।

" अनादिमायये " ति । अनादिसिद्धदृढतरप्रकृतिसम्बन्धाधीन देहात्माभिमानेन तद्विवेकशून्यः देवोहं मनुष्योहमिति भ्रान्तः यदा तद्विवेकवान् भवति तदा जन्मादिविकाराणां सोपाधिकत्वपरिज्ञाने स्वत स्तच्छून्यतया देवादिभेदमपश्यन् उक्ताकारैस्समानरूपमेवात्ममात्रं पश्यतीत्यर्थः । प्रबोधानन्तरं किं देवादिभेदमपञ्चोत्र निवर्तते येन प्रबोध स्सप्रयोजनस्स्यादित्यत्राह 'प्रपञ्चो यदी' ति । देवत्वादिभेदप्रपञ्चो यद्यात्मनि विद्येत तदा स तत्र निवर्तेत, नच भेदप्रपञ्चस्तत्र वर्तते, किन्तु देवत्वादिद्वैतमात्मनि. मायामात्रमेव- आरोपविषयमात्रमेव, अद्वैतम्य- ज्ञानानन्दात्मकतयैकरूपस्यास्य पारमार्थ्यात्; अतो न निवर्तेत इत्यर्थः । कथं तर्हि प्रबोधस्सप्रयोजन इत्यत्राह— " विकल्प " इति । विकल्पः- विपरीतकल्पः, भ्रमः, यदि केनचित्कल्पितः- उत्पादितः, स निवर्तेतैव, अतोत्र कल्पितो देवत्वादिभ्रमो निवर्तत इति

भावः । "विकल्पो यदी" ति व्याप्तिप्रदर्शनपरम् । एतदपेक्षयैवेयं प्रसिद्धिरित्याह 'उपदेशादि' ति । उपदेशात्, आत्मस्वरूपे ज्ञाते द्वैतं न विद्यत इत्ययं वादो भ्रमनिवृत्तिनिबन्धन इति भावः । पूर्वत्र "बहिः प्रज्ञो विभुर्विश्वोह्यन्तःप्रज्ञस्तु तैजसः । धनप्रज्ञस्तथा प्राज्ञः एक एव त्रिधा स्मृत" इति विश्वतैजसप्राज्ञतुरीयाणां पादत्वकीर्तनप्रयुक्त भेदशङ्काव्यावृत्तये विश्वतैजसप्राज्ञानामेकत्वमभिधाय उत्तरत्र "सर्वं जनयति प्राणश्चेतोंशून् पुरुषः पृथगि" ति पादत्रयत्वेन कीर्तिता ज्जीवाद्भेदेन कीर्तनाद्द्वैतपरैवेयमुपनिषत् । पृथक्- पृथग्भूत इत्यर्थः । प्रकरणादवस्थात्रयवतः प्रतियोगितया लाभः । ननु पूर्वत्र 'अयमात्मा ब्रह्मे' त्यभेदः प्रतिपन्न इति चेन्न;- "यच्चान्यत्त्रिकालातीतं तद प्योङ्कार एवे" ति आदावेवात्राभेदोपदेशस्य स्तुत्यर्थत्वावगमात् । यद्यपि माण्डूक्योपनिषदि श्लोका गौडपादीया एव, तथापि कैश्चिच्छ्रुति-त्वाभ्युपगमात्तदनुसारेण व्याख्यातम् ।

एवं न क्वाप्यद्वैतप्रमितिसिद्धिः ।

द्वैतन्तु तात्त्विकमेव, मोक्षदशायामपि भेदस्य भेदज्ञानान्मोक्षस्य च श्रूयमाणत्वात् ।

तथाहि- कठवल्ल्यां चतुर्थे खण्डे- "यथोदकं शुद्धे शुद्धमा-सिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवती" ति । ब्रह्म प्राप्तस्तत्साम्यमुपैतीत्यर्थः ।

मुण्डके पञ्चमे खण्डे- "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्य मुपैती" ति । अत्राह कश्चित्परममूर्खः- साम्यस्य पारम्येन विशेष-णादैक्यसिद्धिरिति; तन्न, पारम्येन विशेषणे मौर्ख्य इव भेदघटित

साम्य एव अतिशयसिद्धौ भेदे धर्मे वातिशयस्सिध्येत्, ' नतु भेद निरासः । षष्ठे- ' यथा नद्यः स्यन्दमानास्समुद्रे ऽस्तं गच्छन्ति नाम रूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ सयो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति । " । अत्र एवशब्द इवार्थः, परमं साम्यमुपैतीति पूर्वानुसारात्; वाक्यशेषानुसाराच्च । तत्र हि नदीसमुद्रदृष्टान्तः प्रतिपादितः । नहि तत्राभेदोस्ति, किन्तु नामरूपकृतभेदाभाव एव, ' स्पर्धमानो विष्णुरेव भूत्वेमांल्लोकानभिजयती ' तिवत्, ' विष्णुक्रमान् क्रमते विष्णुरेव भूत्वेमांल्लोकानभिजयती- तिवच्च । नहि तत्र पदवालम्बनादिमात्राद्विष्णुतादात्म्यमुपपद्यते । ' इवव- द्वैवमेवे ' ति नैघण्टुकाश्च पठन्ति । अन्यथा नैरर्थक्यात् । वस्तुतस्तु अवधारणार्थ एवायमेवकारः, स्वारस्यात् । परमसाम्यश्रुत्यनुग्रहाच्च । सौसादृश्यविवक्षया हि सेनान्यां राजैवायमिति त्वरिता वक्तारो भवन्ति । अवधारणार्थ एवकारस्सौसादृश्यपरः ।

दहरविद्यायां ' परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत ' इति, बृहदारण्यके चतुर्थे अध्याये चतुर्थे ब्राह्मणे ' स यथा सैन्धव- खिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेव, एवं वा अरे इदंमहद्भूतमनन्तमपारं विज्ञानघन एव, एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति, न प्रेत्य संज्ञास्तीति ' ति । अनेन वाक्येन मुक्त्यवस्था प्रतिपाद्यते । विज्ञानघनोजीवः, पञ्चभूत- मयं देहं विसृज्य तद्विशरणानन्तरक्षण एव, सर्वस्य गतिभूते पर- मात्मनि, नश्यति - लीनो भवति, देवादिनामरूपपरिग्रहाद्यादित्यर्थः । अवि- लम्बित प्रतिपादनाय नान्यन्वित्युक्तिः । जीववियोगोत्तरक्षण एव शरीर विशरणं भवति, तदुत्तरक्षण एव ब्रह्मप्राप्तिर्भवति, न विलम्ब इति भावः । देवादिदेजात्यग्रहाणान् परमसाम्यापत्तेश्चात्यन्तवैधर्म्याग्रहणं शेषत्वा- दिकतिपयधर्मैर्वैधर्म्यग्रहणं चाभिप्रेत्य तदनुगुणं दृष्टान्तमाह ' स यथा

सैन्धवखिल्य ' इति । सैन्धवखिल्यः - सैन्धवघनः लवणपिण्डः, अस्य– प्रासितुः । अत्र लयप्रतिपादनेन रूपतो वैधर्म्यग्रहणाभावः प्रतिपादितः । यदोयत इति आदिमध्यान्तानामेषु रसतो वैधर्म्यं गृह्यत इति भावः । उद्ग्रहणायोग्यत्वप्रतिपादनेन अपुनरावृत्तिर्व्यज्यते । ' असे ' ति । संयोजकस्यापि न पृथग्भावकरणसामर्थ्यमिति प्रतिपादनेन स्वप्राप्तिप्रदस्यापि भगवतः पुनरावृत्तौ न सामर्थ्यमिति गम्यते । अस्य वाक्यस्याभेदपरत्वे दृष्टान्तवैधर्म्यम् , ' नमेत्ये ' त्यादिवाक्यवैय्यर्थ्यञ्च ।

तापनीये पञ्चमोपनिषदि —

" तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम् , तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते, विष्णोर्यत्परमम्पदमि ' ति ।

मैत्रायणीयोपनिषदि—

" तस्मिन्नेव यजमानास्सैन्धवघन इव लीयन्त्येषा वै ब्रह्मैकता नाम अत्रहि सर्वे कामास्समाहिताः । " इति ।

' सैन्धवघनइवे ' ति । यथा सैन्धवघन उदके प्राप्तस्तत्र लयं प्राप्नोति तत्समानरूपतया दुर्ग्रहविवेको भवति, रसविशेषेण विवेक्तुं च योग्यः, तद्वद्ब्रह्मणि लीनोपीति भाव । अत्र च ब्रह्मैकतानुवादेन लयरूपताविधिः प्रतीयते, तदयं भावः – सर्वेषु मोक्षप्रकरणेषु ' ब्रह्मवेद ब्रह्मैव भवती " त्यादिरूपेणाभेदप्रतिपादकत्वेन प्रतीयमानानां वाक्यानामयमेवार्थ इति ।

श्वेताश्वतरे—

" पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति " इति ,

भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तन्त्रिविधं ब्रह्ममेतन " ।

" समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥" इति ।

प्रपञ्चमिथ्यात्वजीवब्रह्मभेदतन्मूलाविद्यानिरासश्च वेदान्तविजये प्रपञ्चितोऽस्माभिः । तस्माच्छुद्धाद्वैतं सूत्रभ्वारस्याभावात्, श्रुतितात्पर्याभावाद्युक्तिविरोधाच्च न ब्रह्ममीमांसाशास्त्रविषयः ।

सूत्रस्वारस्यादुपनिषदनुरोधादनुपपत्त्यभावाच्च विशिष्टाद्वैतन्तद्विषयः ।

तथाहि सूत्रस्वारस्यन्तावत्— "ईक्षतेर्नाशब्दं" 'तदनन्यत्वमारम्भणशब्दादिभ्यः ।' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ।' इत्यादिषु । 'ईक्षतेर्नाशब्दमि' ति बहुस्यामितीक्षणानुसारात् प्रकृतिनिरासः कृतः, अयं कथमुपपद्यताम् ? न तावत्स्वरूपपरिणामात्, निर्विकारत्वश्रुतिविरोधात्, सकलहेयास्पदत्वप्रसङ्गेन निर्दोषत्वश्रुतिविरोधाच्च, नापि प्रपञ्चमिथ्यात्वात्, चैतन्यमात्रे ईक्षणासम्भवात्, सदेवब्रह्माधिष्ठानम्, अधिष्ठानेनैव चाध्यासिकाभेदसम्भवः, नचाविद्याशबळस्याधिष्ठानत्वम्, अविद्याया दोषतया परिणामितयावोपयोगेऽप्यधिष्ठानत्वासिद्धेः, नन्वविद्याशबलित ईश्वरः, तस्यैवायमविद्यावृत्तिरूपस्सङ्कल्पः, अधिष्ठानभूतचैतन्यस्येश्वरानुस्यूतेरीश्वराभेदनिर्देशोपपत्तिरिति चेन्न;— 'हन्ताहमिमास्तिस्रो-देवता' इति वाक्ये अहमिति निर्देशेन तन्मते ईश्वरादीनामीश्वरगतत्वासम्भवात् । 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र चिदचिदात्मकस्य प्रपञ्चस्य ब्रह्माभेदः प्रतिपाद्यते, स च सदेव सोम्येदमग्र आसीदित्यत्र इदंशब्दस्य चिदचिद्विशिष्टब्रह्मपरत्वनिबन्धनः, अन्यथा सामानाधिकरण्यानुपपत्तेः, नच बाधार्थं सामानाधिकरण्यम्, 'अग्र' इति निर्देशविरोधात् । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि' त्यत्र ब्रह्मण उपादानत्वमुच्यते, उपादानत्वं च कार्याभेद एव, पूर्वोत्तरावस्थायोगनियन्तृत्वादुपादानोपादेयभावव्यपदेशस्य, नच विवर्ताधिष्ठानत्वेनोपादानत्वम्,

पटत्वेन घटत्वमितिवदयोग्यार्थत्वात्; नच शुक्तौ रजतोपादानतया लोकसिद्धा ।

उपनिषदनुरोधश्च । सद्विद्या हि विशिष्टोपादानत्वं प्रतिपाद यति । तथाहि- तत्रोपोद्घातेन प्रथमखण्डेन पितापुत्राख्यायिकया प्रति पिपादयिषितार्थोवतार्यते । अनन्तरं षड्भिः खण्डैः प्रतिपिपादयिषि तार्थः प्रतिपाद्यते । अनन्तरं च नवभिस्स एव स्थाप्यते । केन सिद्धोयं विभागः ? उच्यते, सद्विद्यान्त इव सप्तमखण्डान्तेपि "तद्धास्य विजज्ञाविति" ति पित्रा पुत्रस्योत्पिपादयिषितं ज्ञानं सम्यगेव निर्वृत्त मिति ह्यवगम्यते । नचेदमवान्तरार्थस्य ज्ञाततापरम्, पूर्वोत्तरखण्डेष्व वान्तरार्थेषु तददर्शनात्; 'उद्दालकोहारुणि' रिति पुनरुपदेशारम्भ प्रतीतेश्च पूर्वप्रक्रान्त उपदेशः परिसमाप्त इत्यवगम्यते । तस्मात्प्रथम खण्डो नवखण्डी च मध्यषट्कशेषभूतौ ।

तत्र विवक्षितार्थस्य साधिष्ठताज्ञापनार्थं पितापुत्राख्यायिकामाह (श्वेतकेतुरित्यादि) "अननूच्य"— अनुक्तिः, स्वाध्यायानध्ययनम्, स्वाध्यायमनधीत्येत्यर्थः । 'सः-' श्वेतकेतुः । 'उपेत्य' त्युपनीतत्वं गम्यते, 'उपनयीते' ति प्रयोजकव्यापारान्तर्गतप्रयोज्यव्यापारस्य उपपूर्वेणेतिना प्रत्यभिज्ञानेन गुरुकुलान्युपेत्येत्यवगमात् । 'महामनाः'— कर्ममीमांसोपचितमनाः । 'अनूचान' - अधीतवेदाङ्गः । 'स्तब्धः'— अव्यापारः, अलम्पटः, परिपूर्णः । उद्दालकः पुत्रस्नेहेन ब्रह्मोपदिदिक्षु स्तस्य ब्रह्मजिज्ञासामुत्पादयितुमाह ("श्वेतकेतवि" त्यादि) 'तमादेशम्'- प्रसिद्धनियन्तारम् । उत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वात्तच्छब्दः प्रसिद्धिपरः । 'एतस्य वा अक्षरस्य प्रशासने गार्गि' 'यः पृथिवीमन्तरो यमयति' 'तमो वा इदमास, तत् परेणेरितं विषमत्वं प्रयाती' त्यादिषु प्रसिद्धिर्द्रष्टव्या । आदेश इति कर्तुरपि साधकतमत्वात् स्वात- न्त्र्यमविवक्षित्वा साधकतमत्वविवक्षया । वस्तुतः कर्तर्येव करणे घञ्,

" विवक्षातः कारकाणि भवन्ती " तिन्यायात्; कर्मणिघञ्प्रकारेणोपदेश्य परत्वाभ्युपगमे प्रकृत्यस्वारस्यम्, आङ्पूर्वस्य दिशेः प्रशासनार्थत्वात् । किञ्च — धर्मादेरप्युपदेश्यत्वेन तस्य ब्रह्मासाधारण्यासिद्धेः अग्राह्य इत्यनेनैवोपदेश्यत्वसिद्धेश्चादेशशब्दो व्यर्थः । किञ्च- ' सदेव सोम्येद ' मिति वक्ष्यमाणत्वेन नपुंसकान्तेन पदान्तरेण निर्देशे स्वरसेपि पुलिङ्गनिर्देशो-नियन्तृप्रतीत्यर्थएव, नियन्तृपरस्यादेशशब्दस्य 'एषत आत्मान्तर्याम्यमृत.'- ' एषे सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण ' इत्यत्र पर्यवसानेन तत्प्रसिद्धिसापेक्षस्य निर्देशस्य पुलिङ्गत्वोपपत्तेः । किञ्चात्र तच्छब्दे' प्रसिद्धिपर इत्युक्तमेव । नियन्तृत्वमेव हि बहुश उपदिश्यते, न तयैपदेश्यत्वम् । अतो नियन्तैवादेशशब्दार्थः । प्रकरणानुसारादपि नियन्तृपरत्वमेव युक्तम्, अत्रोपादानमात्रप्रतिज्ञायां ' तदैक्षत ' ' असृजते ' त्येव वक्तव्य स्यात्, ' तत्तेजोभवदित्यादि ' हि वाच्यम्, अत उत्तरत्र कर्तृत्वस्याभिधानादिहापि तदुक्तेरपेक्षितत्वादपेक्षितविधानन्यायेन तदभिधानमेव युक्तम् । ' उत तमादेश ' मित्याक्षेपाभिप्रायम् । ब्रह्मज्ञानं हि स्वज्ञताहेतु', तदभावेपि सा विस्मयनीयेति भावः । ( येनाश्रुत मिति ) ' आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इद सर्व . विज्ञातं भवती ' ति मैत्रायणीयश्रुत्यनुसारादुपादानप्रकरणानुगुण्याच्च ' येन श्रुतेनाश्रुतं श्रुतं भवति येन मतेनामतं मतं भवति येन विज्ञातेनाविज्ञातं विज्ञातं भवती-त्यर्थ । अत्र श्रुतत्वादिकं साध्यम् । श्रुतादिः करणत्वेन निर्दिश्यते । एवं च श्रवणादे करणत्वे तात्पर्यम् । यच्छ्रवणमेव यच्छ्रवणं भवतीति पर्यवसितोर्थः । अश्रुतत्व स्थूलाकारविशिष्टरूपेण, श्रुतत्व सूक्ष्मरूपेण, धर्म्यैक्याच्छ्रुतत्वाश्रुतत्वयोस्सामानाधिकरण्यम् । आवृत्त्या ज्ञातता दर्शयितु श्रवणादित्रयमुपन्यस्तम् । इति पितोवाचेत्यन्वय । अन्यज्ञानेनान्यस्य ज्ञातत्वासम्भवम्मन्वान पुत्र पृच्छति ( कथन्विति ) गुरुराह ( यथेत्यादि ) अत्रापि मृत्पिण्डादेर्ज्ञातत्वं विवक्षितम् । रूपभेदान्नामभेदाच्च कार्यद्रव्यस्य कारणद्रव्याद्भिन्नत्वेन दृष्टान्तेप्यनन्यत्वाशङ्का परिहरति (वाचारम्भणमिति)

अध्ययनेन वसतीति वत् प्रयोजनतया हेतुत्वं वाचेति विवक्षितम् । विकारग्रहणाज्जलाहरणादिव्यवहारो ऽप्युपलक्ष्यते । वाग्व्यवहारार्थं जलाहरणादिव्यवहारार्थं च पृथुबुध्नोदराकारादिविकारो घटादिनामधेयञ्च मृदा स्पृश्यते । आरम्भणमिति कर्मणि ल्युट् । तत्र प्रत्यभिज्ञां युक्तिमाह (मृत्तिकेत्येवेति) प्रातर्या मृत्तिका मयोपलब्धा सैवेदानीं घटादिरभूदिति प्रत्यभिज्ञानं दृश्यते, तच्च अबाधितमित्यर्थः । इतिकरणेनानुकरण रूपता एवकारोपश्लेषात्प्रत्यभिज्ञावाक्यानुकरणरूपताच प्रतीयते । इत्यन्तेन व्यवहारानुकरणेन तद्धेतुभूता प्रत्यभिज्ञा विवक्षिता । सत्यम्—अबाधितम् । मृत्तिकैवेति प्रत्यभिज्ञानमबाधितमित्यर्थः । यद्वा - अनुकरणेनानुकार्यमुपस्थाप्य तस्यैवाबाधितत्वमुच्यते । लोहमणिः—स्वर्णपिण्डः । नखनिकृन्तनमिति चिकीर्षिताकारप्रागवस्थाकारसाम्यादभिधीयते । प्रतिज्ञा वाक्ये कर्तृत्वं विशिष्टोपादानत्वसिद्धये ब्रह्मज्ञानेन कृत्स्नस्य ज्ञातत्वंच प्रतिज्ञातम् , तत्र द्वितीये शङ्का दृष्टान्तेन परिहृता । पुनर्गुरुकुल प्रस्थापनशङ्कयाह (नवै इति) (महति) निजकुमारेभ्योऽप्यतिशायितव्यामोहविषयाय मह्यमित्यर्थः । (तद्ब्रवीत्विति) दृष्टान्ते उपादानोपादेय भावाद्युज्यते, इह कथमिति भाव' ।

एवं प्रथमखण्डेन द्विविधं कारणत्वमवतारितम् । अथ कारणत्व माह (सदेवेति) समष्टिव्यष्टिसर्गौ व्यष्टिसर्गार्थं त्रिवृत्करणं विकारस्य नामधेयस्य च स्वपर्यन्तत्वसिद्धये नामरूपव्याकरणयोरनुप्रवेशाधीनतां जीवस्य कार्यत्वसिद्धयेऽनुप्रवेशस्य जीवद्वारकतान्त्रिवृत्करणोपपत्तिं जीवस्य शरीरद्वारकसत्कार्यत्वसिद्धये शरीरस्य भूतत्रयमयत्वं सूक्ष्मनिर्गममाप्यायितत्वञ्चोपपाद्य, विशिष्टोपादानत्वं प्रसाध्योपसंहरति षड्भिः खण्डैः ।

द्वितीयखण्डेन समष्टिसृष्टिमाह (सदेवेति) अप्ययपूर्वकत्वात सृष्टेः प्रथमतो लयमाह । अनेन सर्गप्रलययोः प्रवाहानादित्वं सूच्यते । तेन द्रव्यानादित्वसिद्धेरसत्कार्यनिरासः, कारणस्यैव कार्यभावस्य प्रमाहा-

नादितावगमात् । इदम् - परिदृश्यमान चेतनाचेतनात्मकं विभक्तनाम-
रूप स्थूलकार्यम् , सर्गात्प्राचीने प्रळयकाले, अद्वितीयम् - कर्त्रन्तरनिर-
पेक्षम् , एकम् - अविभक्तनामरूपतया कार्यावस्थानिबन्धनबहुत्वशून्यम् ,
सदासीदित्यर्थ । सत एव कर्तृत्वस्य कार्यरूपेण बहुभवनस्य च वक्ष्य-
माणत्वात् - प्रकरणानुसारेणैकाद्वितीयपदयोरर्थ उक्त । प्रतिज्ञायामादेश
पदेन नियन्तृतयावगतस्यैवोपादानत्वोक्तेरिदमिति प्रसिद्धकार्यनिर्देशाच्च
श्वेतकेतुर्महामना सदेवेति विशिष्टग्रहणमिति स्वयमेव ज्ञास्यतीत्यभि-
प्रायेण वैशिष्ट्यन्न कण्ठरवेणोक्तम् । ततश्चेद सदासीदित्यस्य स्थूल
चिदचिद्विशिष्ट सूक्ष्मचिदचिद्विशिष्टमासीदिति पर्यवसितार्थ । सच्छब्देन
निर्देशो वादिनिराकरणार्थ । मिथ्यावादिमतमनूद्य दूषयति ( तद्धैक इति )
तत् - तत्र, इदम् , अद्वितीयम् कार्यशून्यम् , अत एवैकम् , सद्विलक्षण
मज्ञानमासीत् , तस्मादसतोऽज्ञानात्प्रातिभासिकाद्व्यावहारिकसत्त्वाशून्यात् ,
व्यावहारिकसज्जायत इत्यर्थ । "कथमसतस्सज्जायत" इति अज्ञान-
स्यैवासिद्धिरसतस्सदुत्पत्त्यसम्भवश्च विवक्षितौ । सच्छब्देन मिथ्यात्व-
निरासोभिमेत । 'असदेवेदमग्रआसी' दिति तन्त्राश्रयन्यतरेण नैय्या-
यिकमतानुवाद , 'कुतस्तु खलु सोम्ये' ति तन्निरासश्चाभिमेत ।
शून्यवादानुवादस्तु न सम्भवति, असत्त्वस्य कालविशेषानपेक्षत्वात् ,
सज्जायत इति तैरनङ्गीकाराच्च । स्यउक्त , अथ कर्तृत्वमुपादानत्व
चाह ( तदैक्षतेति ) ईक्षणात्स्यामितिचोभयसिद्धि । तरसत् - सूक्ष्मचिद
चिद्विशिष्ट ब्रह्म, तेज - तेजोऽम्भम् , 'बहुस्याम्' 'तत्तेज ऐक्षते' ति
पूर्वोत्तरानुसारात् , तस्मादित्यौचित्यद्योतनम् ।

इद सदासीदिति स्थूलस्य लय उक्त, सृष्टिरप्यस्यैव वाच्या,
तत्कथम्भूता सृष्टिरुच्यत इति शङ्का परिहरन् व्यष्टिसृष्टिमाह तृतीय
खण्डेन ( तेषामिति ) आण्डज जीवजमुद्भिज्जमित्येतेषाम् , भूतानाम्
कार्याणाम् , बीजानि, त्रीण्येव - तेजोबन्नान्येव । व्यष्टिसृष्टयर्थमेव

भूतसृष्टिरुक्तेति भावः । व्यष्टिसृष्टिसङ्कल्पमाह ( सेयमिति ) ननु सत ईक्षणमनुपपन्नम्, अचेतनत्वात्, चेतनत्वेपि निरुक्तेक्षणानुपपत्तिरिति शङ्कां देवताशब्देन परिहरति । सा- आदेशपदेन निर्दिष्टा, इयम्- सत्पदेन निर्दिष्टा, तिस्रो देवताः - अत्र देवताशब्देन देवताशरीरत्वा- न्नूतान्युच्यन्ते, यथा देवाधिष्ठितत्वाद्देवशब्देनेन्द्रियाणि । नामरूपयोः स्वपर्यन्तत्वसिद्धये अनुप्रवेशकीर्तनम्, अनुप्रवेशस्य नामरूपव्याकरणार्थत्व द्योतनार्थं ल्यपा समानकर्तृकत्वनिर्देशः । अनुप्रवेशस्य हि तादर्थ्यंन्नामरूपयो स्स्वपर्यन्तत्व एव हि सिद्ध्यति । अत एव हि श्रुत्यन्तरम् - " तन्नामरूपाभ्यां व्याक्रियत " इति । जीवस्यापि कार्यत्वसिद्धये तद्द्वारकमनुप्रवेशमाह ( अनेनेति ) अनेन जीवेनात्मनानुप्रविश्याहं व्याक- रवाणीत्यन्वयः । जीवपदं स्वपर्यन्तम्, अतः स्वपर्यायेणात्मशब्देन सामानाधिकरण्योपपत्तिः । अनेन जीवानुप्रवेशस्तद्द्वारकस्वानुप्रवेशश्च विवक्षितः । " नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नु वन्प्रजास्स्रष्टुमसमागम्य कृत्स्नशः ॥ " इति त्रिवृत्करणं विना भूतानां कार्याक्षमत्वान्नामरूपव्याकरणार्थं त्रिवृत्करणसङ्कल्पमकरोदित्याह ( तासा- मिति ) कार्यसङ्कल्पानन्तरं कारणसङ्कल्पो युक्त एव । ' सेय न्देवते ' त्यत्र पाठक्रमो न क्रमनियामकः, किन्त्वर्थस्वभाव एव, सच कार्यकारणभावः । व्याकरणस्य कार्यत्वं सङ्कल्पप्राथम्यादवगतमेव । एवमनुप्रवेशकथनात् सद्वारकावस्थाश्रयतयोपादानत्वमुक्तम् । अचितः कार्यत्वमवस्थाद्वारकम्, चितः कार्यत्वमवस्थावद्द्वारकम्, परमचेतनस्य तदु- भयद्वारकम् । सद्वारकत्वाकारणत्ववत् सद्वारकमाश्रयत्व चास्त्येव, सट्वायां शयनेपि प्रासादे शेत इत्यभिधानात्; जलपूर्णकुम्भवहने श्रमाधि- क्योपलम्भाच्च, उह्यमानगुरुत्वस्यैव श्रमप्रयोजकताया यथाप्रमाणमन्यत्र क्लृप्तत्वेन स्वैरमेव प्रयोजकान्तरकल्पनस्यानवकाशत्वात् । नच भूतलस्य घटाद्यस्थाश्रयत्वप्रसङ्गः, यथादर्शनं पृथक्सिद्धस्य पृथक्सिद्धं प्रति- अपृ- थक्सिद्धस्यैवापृथक्सिद्धं प्रति च द्वारत्वात् । एव च ब्रह्मणस्सद्वारक

वस्थाश्रयत्वान्न निर्विकारश्रुतिविरोधोपि। सर्वत्रापि हि निषेधो यथाप्रसक्ति, अचेतने ज्ञानन्नेत्युक्ते यत्सम्बन्धश्चेतने दृष्टस्तत्सम्बन्धेनाचेतनेपि प्रसक्तौ तेन संसर्गेण निषेधः क्रियते, लौकिकेष्वेव ज्ञानन्न शास्त्रार्थेष्वित्युक्तौ लौकिकेषु दृष्टविषयविषयिभावसम्बन्धेनैव वैदिकेष्वपि प्रसक्तौ तेन संसर्गेण निषेधः क्रियते, एवमिहापि येनाद्वारकसम्बन्धेनाचेतने विकारो दृष्टस्तेनैव सम्बन्धेन निषेधः क्रियते, अन्यथोपादानत्वसर्वाधारत्वश्रुतिविरोधात्। नचाद्वारकसंसर्गप्रतीतौ लक्षणा, प्रतियोग्यधिकरणाभावोपस्थापकपदेषु लक्षणाविरहात्। केन तर्हि तत्प्रतीतिः? प्रतियोगित्वप्रतियोगितावच्छेदकत्वविशिष्टनिषेधकवाक्येनैव। एवं विशिष्टस्योपादानत्वमुपादेयत्वञ्चोक्तम्। यदाह - किमिदं विशिष्टोपादानत्वम्? न तावदुभयोः, निर्विकारत्वश्रुतिविरोधात्; विकाराश्रयत्वं ह्युपादानत्वम्; अत एव न विशेष्यस्य; नापि विशेषणस्य, ब्रह्मणोनुपादानत्वप्रसङ्गादिति;- तन्न, उभयोपादानत्वस्यैव विवक्षितत्वात् - विशेषणं विशेषणोपादानं विशेष्यं विशेष्योपादानमिति। उक्तरीत्या ब्रह्मणि विकाराश्रयतायां द्वारसापेक्षत्वादपि विशिष्टोपादानत्वव्यपदेशः। एवञ्चेदमिति स्थूलचिदचिद्विशिष्टब्रह्मरूपं कार्यन्निर्दिश्य सदासीदिति तस्य स्थूलावस्थाप्रहाणेन सूक्ष्मचिदचिद्विशिष्टकारणरूपता प्रतिपाद्यते। एतत्सर्वमभिप्रेत्य नामरूपव्याकरणमनुप्रवेशप्रयोज्यमुक्तम्। प्रयोजकत्वं च रूपाश्रयत्वनामवाच्यत्वाभ्यामेव सिद्ध्यति। नहि पितृकुलालयोरनुप्रवेशो नामरूपव्याकरणे हेतुतया दृष्टः। कार्यप्रयोजकमेव हि त्रिवृत्करणमिह कीर्त्यते। अतः प्रकरणावगतञ्च प्रयोजकत्वम्। अन्यथा भूतसृष्ट्यनन्तरं कार्यसृष्टिं वक्तुं प्रथमतत्सामान्येन कार्यवैविध्यमुखेन कार्यमुपक्षिप्य 'हन्ताहमिमा' इत्यादिना कार्यसृष्टिं प्रतिपादयितुं प्रवृत्तस्य मध्येनुप्रवेशकीर्तनं प्रधान् गच्छतो मार्गवर्त्मपयःपानवदप्रकृतमेव स्यात्। एवंदृष्टान्ते विकारो

नामधेयं च स्पृश्यते न तु द्रव्यगुणयत्न इति यत्पूर्वमुक्तम्, तदार्ष्टान्तिके स्पष्टीकृतम्। एवन्तृतीयखण्डे व्यष्टिसृष्टिरुपपादिता।

एवन्त्रिवृत्करणमन्यस्य कार्यद्रव्यस्याभावञ्च संवादयति चतुर्थखण्डेन (यदग्नेरित्यादि) (अपागादिति) अग्नित्वेन पराभिमतात् कारणादन्यस्मात् अग्नित्वमपागादित्यर्थः। पूर्वोक्तामुपपत्तिं स्मारयति (वाचारम्भणमिति) भूतत्रयरूपाण्येवाग्नौ प्रत्यभिज्ञायन्ते, सा च प्रत्यभिज्ञा साधिता, रूपान्तरानुपलम्भादिति भावः। गुर्वन्तरसंवादमाह (एतद्धस्मेति) तत् - कार्यकारणयोरनन्यत्वम्, एतत् - त्रिवृत्करणम्, विद्वांसः, आहुरित्यर्थः। तेभ्यस्सकाशादन्ये केचनेममर्थमवेदिषुरित्याह (पूर्वे महाशाला महाश्रोत्रिया न नोद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुरिति) महाशालाः- यज्वानः, महाश्रोत्रियाः- श्रुतवेदान्ताः, अविज्ञातम् - भूतत्रयातिरिक्तं कार्यद्रव्यम्, नकश्चिदपि, नः - अस्माकम्, अस्मत्पुरतः, उदाहर्तुं शक्नोतीतीममर्थम्, एभ्यः- विद्वांस इति निर्दिष्टेभ्य, विदाञ्चक्रुरित्यर्थः।

जीवस्य शरीरद्वारकं कार्यत्वमभिप्रयन् तस्य कार्यत्वसिद्धये शरीरस्य भूतत्रयमयत्वमाह पञ्चमखण्डेन (अन्नमशितमिति) 'तन्मन' इति आयुर्घृतमितिवद्व्यपदेशः। तेनाप्यायितमित्यर्थः। सूक्ष्मस्य सारांशस्य कथन्ततो निर्गम इत्यभिप्रायेणाह (भूय इति)

सूक्ष्मनिर्गममुपपादयति षष्ठखण्डेन। आप्यायकत्वमुपपादयेत्याह (भूय इति)

आप्यायकत्वमुपपादयति सप्तमखण्डेन (षोडशेति) (अभ्याहितस्येति) वह्नेरिति शेषः। एतर्हि- इदानीम् (तद्धास्येति) आचार्येण प्रतिपिपादयिषित 'तमादेशमि' ति प्रतिज्ञातं कार्यकारणयो

रनन्यत्वं कर्तुरुपादानत्वं चिदचिद्विशिष्टस्योपादानोपादेयभावञ्च. विशिष्य सोपपत्तिकं कुदृष्टिनिरसनपूर्वकं ज्ञातवानित्यर्थः । 'हे' ति कुदृष्टिनिरसन प्रयुक्तहर्षो द्योत्यते । श्वेतकेतोस्स्वेनोत्पादितां भगवतस्सर्वोपादनत्वबुद्धि मवेदान्तिनोपहरेयुरिति पुत्रस्नेहेनापायमाशङ्क्य स्वेनोत्पादितां बुद्धिं विशिष्टोपादानत्वं सोपपत्तिकं नवकृत्वोऽप्यस्य दृढयति नवभिः खण्डैः ।

जीवविशिष्टस्य परमात्मनः कार्यता द्विविधा, एका ज्ञानावस्था द्वारिका, अपरा शरीरद्वारिका, द्विविधामपि तामुपपादयति अष्टमखण्डेन (स्वमान्तमिति) स्वप्नस्यान्तः— सुषुप्त्यवस्था, यत्र - यदा, सुषुप्त्य वस्थायाम्, पुरुषशब्दो ब्रह्मपर्यन्तः, सता सम्पन्नो भवति — ज्ञान विकासरूपस्थूलावस्थाप्रहाणेन सूक्ष्मचिदचिद्विशिष्टब्रह्मणि लीनो भवति । " आचक्षत ' इति वैदिकप्रसिद्ध्यभिप्रायम् । स्थूलावस्थाप्रहाणमुपपाद यति ( यथा शकुनिरिति ) प्राणोर्जीवः । द्वितीयं कार्यत्वमुपपादयति ( अशनायेत्यादिना ) तत्र स्वपितीति प्रसिद्धवेवाशनायापिपासाप्रसिद्धिभ्यां विवक्षितं साधयति । किन्तत इत्यत्राह ( तत्रैतादिति ) तत्र— अश नावस्थायाम्, एतत्— एतत्कालीनो विकार', शुङ्गम्- अङ्कुरम् — कारणानुमापकमित्यर्थः ( तस्येति ) अद्भिर्नीतम्, क्षीणमन्नम्, तत्कारण मित्यर्थः ( अन्नेनेति ) उक्तरीत्या तन्नेतृत्वात् कारणत्वाचेति भावः । ( सन्मूला इति ) यत एव भूतत्रयात्मकत्वं शरीरस्य भूतानाञ्च सन्मू लत्वम्, अतः प्रजा भूतत्रयात्मशरीरसंसृष्टाः, सन्मूलाः— सत्कार्यभूताः । सदायतना इति स्थितिरुक्ता, सत्प्रतिष्ठा इति लयः ( यत्रैतत्पुरुषः पिपासतीति नामेति ) पूर्ववद्योज्यम् । जीवस्य ब्रह्मकार्यत्वसिद्धये शरी रस्य भूतत्रयात्मकत्वमुक्त्वा तदपि त्रिवृत्कृतभूतत्रयात्मकत्वमेवेत्यभिप्रायेण त्रिवृत्करणोपपादनं स्मारयति (यथात्विति) भूतावस्थाद्वारकं लयमुपपादयति (अस्य सोम्येति) एवमुपादानत्वमुपपद्यत एवेत्यभिप्रायेणोपसंहरति (स य इति) यस्सआदेशः, सएषसदित्युक्तः, अयमणिमेत्यर्थः । एतदात्म्यमिदसर्वम् —

एतदात्मकं सदादेशस्वरूपं स्थूलचिदचिद्विशिष्टं ब्रह्म सूक्ष्मचिदचिद्विशिष्ट ब्रह्माभिन्नमित्यर्थः । कुदृष्टिभिरविचाल्यत्वाभिप्रायेणाह ( तत्सत्यमिति ) स्वरूपाभेदबुद्धिं वारयति ( स आत्मेति ) तस्यान्तर्यामित्वेन स्थूलसूक्ष्मा वस्थाद्वययोगादयं भेदव्यपदेश इत्यर्थः । तत्त्वमसीति विशिष्टोपादानो पादेयभावे श्वेतकेतुमेवोदाहृत्योपसंहरति दाढ्यार्थम् । 'स त आत्मान्तर्याम्यमृत' इति वत्, 'तत्त्व' मिति पदद्वयमपि परमात्मपर्यन्तम् । श्वेतकेतुपदन्तु न तथा, सम्बोधनत्वात् । युष्मदुपपदत्वान्मध्यमपुरुषः । कथन्तर्ह्यहमनेन सम्पन्न इति सम्परग्रहणमित्यभिप्रायेण पृच्छति ( भूय इति ) ननु-'स्वाप्ययादि' ति सूत्रे 'सता सोम्ये' त्युक्ता सत्सम्पत्तिः प्रकृति निरासहेतुतयोच्यते, तस्याश्च तद्धेतुत्वं 'स्वमपीतोभवती' ति रात्सम्पत्तेः स्वस्मिन् लयरूपत्वोपपादनात्; जीवस्य सति लयः तथाहि स्वस्मिन् लयो भवति , यदि जीवब्रह्मणोरभेदस्स्यात्; स्थूलजीवशरीरकस्य सूक्ष्मजीवशरीरके लयस्यात्र विवक्षायामपि साङ्ख्यान्मति कथमियं युक्तिरुच्येत, ब्रह्मण एव तैरनङ्गीकारात्; इति चेत्? उच्यते, जीवब्रह्माभेदपक्षे जीवस्य ब्रह्मणि लयो हि न मुक्तेः प्राक्सम्भवति, सुषुप्तिकाले हि अन्तःकरणस्य सूक्ष्मरूपतापत्त्या स्थूलस्य जीवस्य सूक्ष्मे जीवे लय इति स्यात्, तस्माज्जीवस्य प्रकृतौ लयासम्भवाज्जीवब्रह्माभेदेपि लयप्रतिपादनानुपपत्तेश्च उक्तरीत्यैव स्वाप्ययविवक्षया साङ्ख्यनिरासोभिप्रेतः ।

अग्रहणमुपपादयति नवमखण्डेन ( यथासोम्येति ) 'पुरुषः स्वपिति' 'नविदुरि' ति एकवचनबहुवचनाभ्यां पूर्वत्र ब्रह्मपर्यन्ततां उत्तरत्र जीवपर्यवसानञ्च स्फोरयति । तेन जीवस्य ब्रह्मसम्पत्तिः स्थूलावस्थावियुक्तब्रह्मण्यवस्थानम् । ( अमुष्याहमिति ) अमुष्य, सोहमेभिस्सङ्गतोस्मीति विवेको नेत्यर्थः । सामग्रीविरह एव तस्य तथा ज्ञानाभावनिबन्धनम्, स एवेहापीति भावः । सामग्रीसम्भावनामपि वारयितुं जडदृष्टान्तोपादानम् । ( त इहेति ) यथा पूर्वं सुप्तास्तद्दशा-

यामपि व्याघ्रादयो भवन्त्येव, तथापि तद्रूपत्र जानन्ति. तद्वदिहापीति भावः। सुप्तोत्थितज्ञानं वा विवक्षितम्। 'तदे' ति सुप्तोत्थितकालः परामृश्यते। अत्रापि पक्षे स्वापकाले व्याघ्रादिरूपवदेव सत्संसर्गमपि न जानन्तीत्येव भावः। (सएषोणिमेति) पूर्ववत्। कथमागमनाग्रहण मिति पृच्छति (भूय इति)

तदुपपादयति दशमखण्डेन (इमास्सोम्येति) (इयमहमस्मीति) अस्मात्समुद्रादागताहमस्मीति न जानन्तीत्यर्थः। 'स य एष' इति पूर्ववस्थाविशिष्टस्य लय उक्तः, तत्र जीवस्यैव कथं मरणं वदन्तीत्यभिप्रायेणाह (भूयइति)

तदुपपादयत्येकादशेन (अस्यसोम्येति) 'सय' इति पूर्ववत्। अणिम्नः कथम्महत्वमित्यभिप्रायेणाह (भूय इति)

तदुपपादयति द्वादशेन (न्यग्रोधेति) यदि परमात्मा कार्यकारणानुगतः, कथन्तर्हि तदनुपलम्भः, अनुपलम्भे तस्य तत्रानुगतत्वे किम्मानमित्यभिप्रायेणाह (भूय इति)

तदुपपादयति त्रयोदशेन। 'सय' इति पूर्ववत्। लवणवदिह ज्ञानोपायः क इत्यभिप्रायेणाह (भूय इति)

तदुपपादयति चतुर्दशेन (यथासोम्य पुरुषमिति) (आचार्यवानिति) आचार्यवानुपदेशेन तं सदादेशं वेद, तद्विदो मम सम्पत्तौ शरीरावियोगपर्यन्तमेव विलम्ब इत्यपि जानाति, तदुपासनस्य मोक्षसाधनतया आचार्येणाभिधानादिति भावः। 'न विमोक्ष्य' इति मोक्षतया किं विवक्षितमित्यभिप्रायेणाह (भूयइति)

विवक्षितमाह पञ्चदशेन (पुरुषं सोम्येति) 'सय' इति पूर्ववत्। इतः परमप्युपपादनीयमस्ति चेदुपपादयेत्यभिप्रायेणाह (भूय इति)

इदम्—ब्रह्मण कर्तृत्वं विशिष्टोपादानत्वं च तप्तपरशुग्रहणेन श्रद्धापयितव्यमित्याह चरमखण्डेन ( पुरुषंसोम्येति ) ( सयथेति ) तथा-विशिष्टोपादानवाद्यपि तच्छ्रद्धापनाय तप्तपरशुग्रहणे न दक्षेतेति भावः । 'सय' इति पूर्ववत् ।

कर्तुर्विशिष्टोपादानताया 'आदेशम्' 'येनाश्रुत' मित्युपक्रमः, 'ऐतदात्म्यमिदं सर्वमा'गे' त्युपसंहार', अस्यैवाभ्यास, अपूर्वत्वं प्रसिद्धम्, 'अथ सम्पत्स्य' इति फलम्, आख्यायिकार्थवाद', दृष्टान्तप्रदर्शनानुप्रवेशकथनादिरुपपत्ति, एव षड्विधतात्पर्यलिङ्गोपेतया सद्विद्यया कर्तुर्विशिष्टोपादानभावस्समर्थित' ।

श्रुत्यन्तराण्यपीमामेवानुरुन्धते । 'असद्वा इदमग्र आसीत्'—स्थूलावस्थं ब्रह्म तच्छून्य सूक्ष्मावस्थमासीत् । 'तत'- असत', सूक्ष्मावस्थादित्यर्थ । 'सत्'- स्थूलावस्थम् । कार्यकारणयोरभेदं विशिष्टोपादानत्व कर्तृत्वञ्चाह ( तदात्मान स्वयमकुरुतेति ) अनेन 'तत्तेजो सृजते' त्यादौ तेजआदिपदाना भगवत्पर्यन्तत्वं प्रख्यापितम् । 'तत्'- असत्, सूक्ष्मावस्थम् । एवम् - 'आत्मा वा इदम्' 'ब्रह्म वा इदम्' 'एकोह वै नारायण' 'ब्रह्म वन ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षु' 'आत्मन आकाशस्सम्भूत' 'यतो वा इमानि भूतानि जायन्ते' 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच त्यच्चाभवदि' त्यादिवाक्यान्यप्येतदर्थकानि ।

इम सद्विद्याराद्धान्तमसहमाना प्रकारान्तरमपि उपादानत्वे निर्वोढु मसमर्था केचिदाहु विशेष्यस्य विशेष्यविशेषणयोर्वोपादानत्वे निर्वि-

कारत्वश्रुतिविरोध, विशेषणस्योपादानत्वे तु न ब्रह्मण उपादानत्वसिद्धि-रिति न ब्रह्मोपादानमिति, - तेच सद्विद्यामनुरुन्धाना इव प्राहु: सादृश्यप्राधान्याभ्या प्रतिज्ञादृष्टान्तौ । तथाहि - ( येनाश्रुत मिति ) येन श्रुतेन ब्रह्मणा, अश्रुत ब्रह्मणि ज्ञाते तत्सादृश्यात् सर्वं ज्ञात भवतीत्यर्थ । ब्रह्मज्ञानेन कृत्स्नफलसिद्धेरितरत् सर्व ज्ञातप्रायमित्यर्थ । प्रथमे दृष्टान्तमाह ( यथेति ) अत्रापि सादृश्यात् ज्ञान विवक्षितम् । द्वितीये ' तनूर्वपिष्ठे ' ति वदावृत्तेन ' यथासोम्येकेन मृत्पिण्डेन सर्वं मृण्मय विज्ञात स्यादि ' त्यनेन दृष्टान्तोपन्यास । मृदित्येतस्मिन्पदे ज्ञाते सर्वं मृण्मयमृत्पदापभ्रंशभापापदानि ज्ञातप्रायाणि, भापापदानि ह्य व्यापकानि, संस्कृतन्तु सर्वदेशव्यापकम्, अतस्तत्तद्देशे तेन तेनापभ्रंशेन यो यो व्यवहारो भवति तस्य सर्वस्यापि संस्कृतेनैव करणसम्भवादप भ्रंशो ज्ञातप्राय इत्यर्थ । उक्तार्थमुपपादयति ( वाचारम्भणमिति ) अपभ्रंशभूतन्नामधेय वाचारभ्यते, तस्मादनित्यम्, मृत्तिकेति पदन्तु नित्यम्, अपभ्रंशास्तत्तत्पुरुषवागुपज्ञत्वान्न व्यापका, संस्कृतपदन्त्वपुरुषो पज्ञत्वाद्व्यापकन्नित्यर्थ इति ।

अत्रोच्यते बहुश्रुतिस्मृतिविरुद्ध ब्रह्मणोनुपादानत्वम् । श्रुतय उदाहृता । स्मृतय परिकरविजये द्रष्टव्या । उपादानत्वञ्च निर्व्यूढम् । यश्च वाक्यार्थ उक्त, सोनुपपन्न, सादृश्यस्य साधारणतया तन्नि-बन्धनज्ञानहेतुताया अपि साधारण्येन ब्रह्मणि विशेषाभावात् 'तमादेशमप्राक्ष्य' इत्यसाधारण्येन ब्रह्मनिर्देशानुपपत्ते । दृष्टान्तवैयर्थ्याच्च । सदृशज्ञानात् सदृशज्ञाननियमश्चासिद्ध । तत्सदृश इति ज्ञानस्य तादधीन्यमात्रविव-क्षाप्यनुपपन्ना, विसदृश इति ज्ञानस्यापि तादधीन्येन सादृश्ये निर्द्धा-पाभावात् । ब्रह्मणोत्यन्तविसदृशत्वाच्च । वस्तुत्वादिना सादृश्यस्य सर्व

साधारण्यात् । बहुधर्मैस्सादृश्यस्य घटादावेव सम्भवात्, ब्रह्मणि तद-सम्भवात् । किञ्च - श्रुत मतं विज्ञातमित्युच्यते । अज्ञाने सति कथंचित्सादृश्यात् ज्ञातत्तासम्भवेपि कथं ब्रह्मणि श्रुतत्वादौ सत्यन्यत्र श्रुतत्वादिसम्भवः । प्राधान्यपरत्वे मतविज्ञातपदयोरपि तथात्वे पौनरुक्त्यम् । ब्रह्मण. प्राधान्यात् सर्वस्य श्रुतादिभावत्वविवक्षायामौपचारिकत्वं स्पष्टम् । किञ्च - श्रुतपदेन युगपच्छ्रुतत्वश्रुतप्रायत्वरूपमुख्यामुख्यार्थबोधनासम्भवात् श्रुतपदावृत्तिस्तन्निर्वचनयास्यावृत्तिश्च प्रसजेत् । यथा सोम्येकेनेत्यस्यावृत्तिश्चानुपपन्ना । 'तनूर्वषिष्ठ' त्यत्र तु अयाशयारजाशयेत्यनयोस्साकाङ्क्षत्वादावृत्तिरुपपन्ना । मृदादिशब्दानामशब्दानुशासनत्वादर्थपरत्वेन शब्दपरत्वमनुपपन्नम् । मृत्पिण्डमृण्मयमृत्तिकाशब्दाना लोहमणिलोहमयशब्दयोर्नखनिकृन्तनकार्ष्णायसशब्दयोश्च मिथो व्याघातः । व्याकरणाध्ययनसाध्यत्वात संस्कृतस्य तदेवाव्यापकम् । किञ्च - 'वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्य' मित्यत्र कां गतिं यास्यथ । तन्न उक्तकुसृष्ट्यभावेन तद्वैरूप्यमिहानुपपन्नम् । यच्च - तैरेवोक्तम् - 'बहुस्या' मिति तत्कार्यानुप्रवेशार्थं विग्रहविशिष्टरूपेण बहुभवनमुच्यत इति; तत्तुच्छम्, स्वरूपेण बहुभवनस्य सिद्धे , कार्यविशिष्टबहुभवनस्य वक्तु शक्यत्वाच, 'यस्य पृथिवीशरीर' मित्यादिना सर्वेषा विग्रहत्वसिद्धे कार्यरूपविग्रहविशिष्टरूपेण बहुभवनं सङ्कल्प्यत इति कुतो नेष्यते। किञ्चैवं सति सङ्कल्पसर्गयो परस्परवार्तानभिज्ञत्वप्रसङ्ग ,तथाच 'नामरूपे व्याकरवाणि' 'नामरूपे व्याकरोत्' ' त्रिवृत करवाणि ' ' त्रिवृतमकरोदि ' ति सङ्कल्पितकरणोक्तिप्रकरण विरोध । ' तत्तेज ऐक्षत ' ' बहु स्याम् ' 'ता आप ऐक्षन्त' ' बह्व्यस्स्याम ' इति कथ सङ्कल्पकीर्तनम् । ब्रह्मलक्षणायां स एव दोष । एवमुत्तरत्राप्यस्वारस्य द्रष्टव्यम् ।

अपरेतु - मिथ्याभूतस्य जगतो मिथ्याभूता मायोपादानम्, सालक्षण्यात्, यथा घटस्य मृत् ; ब्रह्माधिष्ठानत्तयोपादानम्, उपादानत्वं च

विकाराश्रयत्वम्, स्वसमानसत्ताकविकाराश्रयत्व परिणामितयोपादानत्वम्, असमानसत्ताकविकाराश्रयत्व विवर्ताधिष्ठानतयोपादानत्वम्, कार्यं च कारणाद्भिन्नम्, कार्यत्वादेव प्रातर्या मृण्मया दृष्टा सैवेदानीं घटादिरभूदिति प्रत्यभिज्ञया कार्यं कारणादभिन्नञ्च, अभेदश्चानिर्वचनीय, तादात्म्य मेववा सामानाधिकरण्यनिमित्तम्, तच्च भिन्नत्वे सत्यभिन्नसत्ताकत्वम्, इद पृथक्सिद्धमात्रसाधारणम्, अत एव शुक्लो घट इति सामानाधिकर ण्यम्, तस्मान्माया ब्रह्मणि उपादानमिति, तेच सद्विद्यामनुरुन्धाना इव स्वोत्प्रेक्षितार्थे कथञ्चित्सद्विद्या पातयन्ति। आदेशशब्द उपदेश्यपर।

(येनाश्रुतमित्यादि) ब्रह्मस्वरूपे ज्ञाते प्रपञ्चस्वरूप ज्ञातमेव, मिथ्या र्थस्याधिष्ठानमेव हि स्वरूपम्, तदतिरिक्तत्वरूपाभावात्, दृष्टान्ते - मृत्पिण्डमृण्मयादीनामपि ब्रह्मण्यध्यस्ततया मृदादिस्वरूपे ज्ञाते तत्कार्य स्वरूपमपि ज्ञातमेव (वाचारम्भणमिति) वागालम्बनम्, व्यावहारिक मित्यर्थ (मृत्तिकेत्येव सत्यमिति) मृत्तिका स्वरूपेणैव सत्यमित्यर्थ, तद्व्यतिरेकेण सत्ताविरहादिति।

तदपि न, अधिष्ठानस्यानुपादानत्वात्। नहि शुक्तीरजतोपादानम्, रजतानाश्रयत्वात्। रजताभेदेन हीदमर्थस्य प्रतीति। कार्याश्रयत्व ह्युपादानत्व त्वयोक्तम्। यच्च भेदाभेदोपपादनम्, तत्तैरेव भेदाभेद निराकरणाद्विरुद्धम्। नच नियमसत्तास्योरङ्गीकारादविरोध, इह भेदा भेदयोर्विषमसत्ताकत्वासिद्धे। ननु भेद पारमार्थिक, अभेदोनिर्वचनीय, नचाद्वैतक्षति, भेदो ब्रह्मस्वरूपमित्यङ्गीकारादिति चेन्न, घटस्यापि पटवद्घट भेदप्रसङ्गात्, भेदवादिनापि तथैव वक्तु शक्यतया भेदखण्डनासम्भवाच्च। नच प्रातिभासिकव्यावहारिकरूपेण भेद, अभेदस्याबाधितप्रत्यभिज्ञासिद्धतया प्रातिभासिकत्वानुपपत्ते। भेदस्य प्रातिभासिकत्वे कार्यत्वानुपपत्ते। नच यौक्तिकत्वात् भेदो व्यावहारिक, अभेद प्रतीतिमात्रसिद्धत्वात् प्रातिभासिक इति वक्तु शक्यम्, वाचारम्भणश्रुत्यैव कार्यभेदसाधकयुक्तिनिरासात्।

साद्विद्यानिपातनद्यानुपपन्नम्। तथाहि - उक्त आदेशशब्दार्थः परोक्तार्थानुपपत्तिश्च। येनाश्रुतमिति अधिष्ठानस्य मिथ्यावस्तुस्वरूपत्वं मानाभावादसिद्धम्। नच स्वरूपान्तराभावो मानम्, मिथ्यावस्तुन एव मिथ्यावस्तुस्वरूपत्वात्। यदि तत्तस्य स्वरूपन्न भवेत्, तर्हि तन्निःस्वरूपमेव स्यात्। नहि वायौ रूपान्तराभावात् पृथिव्यादिरूपमेव तदीय मित्यङ्गीक्रियते, किन्तु नीरूपमित्येव।

किञ्च - मिथ्यात्वादेव यथा मिथ्यार्थस्वरूपन्न स्यात् तथा मिथ्यात्वादेव स्वरूपसापेक्षोपि न स्यात्। अश्रुतामताविज्ञातपदानां स्वरूपे लक्षणा च स्यात्, अश्रुतादिपदार्थात् प्रपञ्चरूपात् ब्रह्मणोन्यत्वा दनृतजडपरिच्छिन्नव्यावृत्तिं ह्यावर्तयसि। यथासोम्येति पिण्डघटयोः कथ मेकसत्ताकत्वम्, भिन्नकार्यत्वात्।

किञ्च - 'कथन्नु भगवस्स आदेश' इति पृष्टवन्तं प्रति ह्ययं दृष्टान्त उच्यते, दृष्टान्तश्च पूर्वं निर्ज्ञात, अद्वैतोपदेशार्थश्चायमारम्भ इति तव मतम्, एवञ्च प्रपञ्चमिथ्यात्वस्य प्रागनवगमात् दृष्टान्ते मृत्पिण्डघटयो' ब्रह्मैव स्वरूपमित्यनवगमात् कथं दृष्टान्त ? दृष्टान्तस्याप्यपरिज्ञानादेव 'वाचारम्भण' मिति तदुपपादत इति चेन्न; — प्रपञ्चमिथ्यात्वज्ञानात् प्राक्त्वदुक्तवाक्यार्थस्याप्यपरिज्ञानात्।

किञ्च - मृत्पिण्डमृण्मयलोहमणिलोहमयनखनिकृन्तनकार्ष्णायसपदानां लक्षणा च स्यात्। तथा मृत्तिकादिपदत्रयस्यापि। ब्रह्मण एव सर्वेषां स्वरूपत्वाद्यस्य कस्यापि स्वरूपे ज्ञाते सर्वेषां स्वरूप ज्ञातमेवेति विशिष्य प्रतिज्ञायुक्तिर्निर्निबन्धना। कारणस्वरूपमेव कार्यस्वरूपमिति चेन्न, विशेषणत्वे मृत्पिण्डस्यापि घटस्वरूपत्वप्रसङ्ग, उपलक्षणत्वे पूर्वोक्तदोषस्तदवस्थ।

किञ्च - ब्रह्मज्ञानेन सर्वस्य स्वरूपज्ञाने प्रतिपादिते ब्रह्मणोधिष्ठानत्वे तत्र प्रपञ्चस्याध्यस्तत्वे च सत्येव ब्रह्मज्ञानेन प्रपञ्चस्वरूपस्य ज्ञातता सेत्स्यतीति बुद्ध्या श्वेतकेतु प्रपञ्चमिथ्यात्वं ज्ञास्यतीति मत्वा

खलु एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्, तत्र कथमस्य दृष्टान्तस्यानुगुण्यम्, यथा सोम्यैकया रज्ज्वा सर्पभूदलनाम्बुधारादि सर्वं विज्ञातं स्यादित्युक्तिर्हि तदनुगुणा ।

किञ्च- मिथ्यात्वे प्रतिपिपादयिषिते 'वाचारम्भण' मित्येवालम्, 'मृत्तिकेत्येव सत्यमि' त्येवं रूपमस्यत्रयं व्यर्थम् । मृत्तिकापदस्य मृत्तिकामात्रपरत्वे एवकारेण घटन्यावृत्तिरनुपपन्ना, मृद्घटयोस्तत्वे विशेषाभावात् । स्वरूपपरत्वेऽपि तथैव मृत्तिकापदं स्वरूपपरम् । व्यावर्त्यं मृण्मयमात्रमित्युक्तौ न मृत्तिकाग्रहणे निमित्तं पश्यामः । यदि तत्कार्यस्य सत्त्वप्रतीतेर्गमनिकोच्यत इति न वैयर्थ्यम्, तर्हि विकारस्वरूपमेव सत्यमित्येव वाच्यम् । ननु कारणसत्यत्वं कार्यस्य मिथ्यात्वञ्च खलु प्रतिज्ञाभिप्रेते, तथैव दृष्टान्तेऽपि विवक्षितमिति दृष्टान्तानुगुण्यमिति चेन्न;— तथा सति मृत्तिका सत्या न घट इत्यनुपपत्तेः, उभयोर्मिथ्यात्वस्य व्यावहारिकत्वस्य चाविशेषात् । इतिपदञ्च व्यर्थम्, मृत्तिका सत्येति हि वाच्यम् । वाचारम्भणपदेन व्यावहारिकत्वलाभश्चातिनिलष्टः । कटकादिकार्यक्षमत्वं हि व्यावहारिकत्वम्, नतु वाग्विषयत्वम्, प्रातिभासिकेऽपि सत्त्वात् । यदि व्यावहारिकपद रूढम्, तदा सुतरां व्यावहारिकपदार्थस्य वाचारम्भणपदेनोपस्थापनासम्भव. । नामधेयश्रवणञ्च व्यर्थम् । सिद्धान्ते तु नामभेदात् कार्यद्रव्यभेदशङ्कानिरासः प्रयोजनम् ।

यच्चेदमुच्यते- ब्रह्मणि ज्ञाने सर्वं मिथ्यात्वेन ज्ञातं भवतीति; तदपि मन्दम्, घटादिज्ञानानामपि ब्रह्मविषयतया तेषु सत्स्वपि मिथ्यात्वज्ञानासिद्धेः । ब्रह्मणोऽद्वितीयत्वज्ञानविवक्षायां मिथ्यात्वज्ञानपर्यवसानादात्माश्रयः । 'कस्मिन्नु खलु विज्ञाते इदं सर्वं विदितं भवती' ति वाक्ये प्रपञ्चस्य ब्रह्मज्ञानविषयतायास्वरसतः प्रतीतेस्तज्ज्ञानसाध्यत्वोक्तिरनुपपन्ना । दृष्टान्तानुपपत्तिश्च स्पष्टा । 'सदेव सोम्येदमग्रआसी' दिति प्रपञ्चमिथ्यात्वमुच्यत इत्यप्यनुपपन्नम्, 'अग्रे इदं सदासी' दिति इदानीं सत्त्वेनावगतस्य पूर्वकालेऽपि सत्त्वप्रतीत्या सर्वकालसत्त्वस्यैव

प्रतिपादनात् । सत्पदेन ब्रह्मोपस्थापने कथन्तदभेदोक्तिः ? यद्यधिष्ठानाध्यस्यमानभावेन तादात्म्यात् सा, तदा अग्र इत्यनुपपन्नम्, इदानीमप्यधिष्ठानाध्यस्यमानभावात् । वस्तुतस्तु इदानीमेवाधिष्ठानाभेदः, अध्यासकाल एव तदभेदात् । तत्वावेदकवाक्यस्य अप्रमोत्पादकत्वञ्चानुपपन्नम् । अग्रे नासीदित्यर्थाङ्गीकारे लक्षणा, मिथ्यात्वासिद्धिश्च । नहि कालविशेषासत्त्वमात्रेण मिथ्यात्वसिद्धिः । नच सजातीयविजातीयस्वगतभेदशून्यवस्तुप्रतिपादनान्मिथ्यात्वसिद्धिः । किं सदनुवादेन सजातीयादिभेदशून्यत्वं विधीयते, किं वा सजातीयादिभेदशून्यवस्त्वनुवादेन प्रपञ्चभेदः ? नाद्यः, तदा खलु सदेवाग्रे एकमेवाद्वितीयमासीन्नान्यदग्रे एकमेवाद्वितीयमासीदित्यर्थस्स्यात्, तत्रेदमिति पदानन्वयः स्पष्टः । सदेवेत्येवकारस्य विधीयमानार्थस्य तत्काले ऽन्यत्र व्यवच्छेदपरतया तस्य त्वदभिलषितार्थपरत्वभङ्गश्च । न द्वितीयः, प्रपञ्चस्य विद्यमानतादशायामेवाधिष्ठानतादात्म्यन्न पूर्वमित्युक्तत्वात् । तस्मात्प्रलयकाले प्रपञ्चजातमेकमेवाद्वितीयं सदासीदित्यर्थः । एकमेव बहुस्यामिति वक्ष्यमाणबहुत्वावस्थाशून्यमेव कर्त्रन्तरनिरपेक्षं सदासीदित्यर्थः । बहुस्यामित्यनुसारादेकशब्दार्थनिर्णयः, उपादानत्वबोधनेन कर्त्रन्तरस्य घटादिवदाकांक्षितत्वात् । अद्वितीयो देवदत्त आस्त इति सजातीयपुरुषान्तरनिषेधवत् सत्पदस्यादेशपदार्थोपस्थापकतया कर्तृपरत्वेनाद्वितीयशब्दस्य कर्त्रन्तरनिषेधपरत्वात् आकाङ्क्षासत्पदाभ्यां अद्वितीयपदस्यार्थनिर्णयः ।

'तद्धैक आहु' रित्यस्य परोक्तार्थपरत्वं प्रागेव निरस्तम् । मिथ्यात्वादिनिराकरणपरत्वं च प्रागेवोक्तम् । बहुस्यामित्यप्यनुपपन्नम् । न तावन्निर्विशेषस्यायं सङ्कल्पः, तत्त्वादेव । नापीश्वरस्य, तस्य भ्रमाभावेन प्रपञ्चे बहुस्यामिति स्वाभेदभ्रमासम्भवात् । 'हन्ताह' मित्यत्राहमिति निर्देशश्च निर्विशेषस्य - ईश्वरस्यचानुपपन्नः । तेजसोपाञ्च ईक्षणकर्तृत्वप्रतिपादनञ्चानुपपन्नम् । किञ्चैवम्मिथ्यात्वतात्पर्ये कर्तृत्वोपवर्णन व्यर्थम् । अत कर्तृत्वोपादानत्वयोः प्रतिपादन

एव तात्पर्यम् । तत्रैव कृत्स्नानुगुण्य प्रागेगोपपादितम् ।

एव प्रथमखण्डे आदेशपिण्डमणिपदत्रयमश्रुतादिपदत्रयम्मृत्पिण्डादिपदत्रय मृण्मयादिपदत्रय वाचारम्भणपदत्रय नामधेयपदत्रय मृत्तिकादिपदत्रयमितिपदत्रयमिति चतुर्विंशतिपदान्यस्वरसानि । अनिर्ज्ञातत्वाद्वैरूप्याच्च दृष्टान्तवाक्यत्रयमस्वरसम् । नहि पराभिलपितार्थानुगुणो दृष्टान्त इत्युक्तमेव ।

द्वितीयखण्डे सत्, इदम्, अग्रे, आसीत्, सञ्जायते, सत्त्वेव इदमग्र आसीत्, तदैक्षत बहुस्या प्रजायेयेति तत्तेजोसृजत, तेज ऐक्षत, बहुस्या प्रजायेयेति, तदपोसृजत, ता आप ऐक्षन्त, बह्व्य स्याम प्रजायेमहीति, ताअसृजन्ते, त्यादिपदान्यस्वरसानि ।

तृतीयखण्डेपि 'अनुप्रविश्य नामरूपे व्याकरणवाणि, अनुप्रविश्य व्याकरोदि' ति ब्रह्मणस्सङ्कल्पकर्तृत्वे अनुपपन्ने इति प्रागेवोक्तम् । ईश्वरस्य तु जीवाद्भिन्नत्वात्समानकर्तृकत्वानुपपत्ति ।

चतुर्थखण्डे 'अपागादग्नेरग्नित्व' मित्यादेर्मिथ्यात्वपरत्वे अग्नेरग्नित्वमपागादिति अग्निमङ्गीकृत्य तत्र धर्मनिषेधो ऽनुपपन्न । 'त्रीणि रूपाणीत्येव सत्यमि' त्यपि न मिथ्यात्वसाधनम्, अनुपपन्नश्च । त्रीणि रूपाणीत्येव सत्यमित्यत्र त्रिरूप्यधिष्ठानसद्विवक्षाया तल्लक्षणेव दोष । कार्याधिष्ठानसतोपि सत्यत्वाद्विशेषोऽस्यम भवश्च ।

'न्यग्रोधफल' मित्यादिद्वादशखण्डे 'श्रद्धत्स्व सोम्ये' त्युच्यते । अतएव तदर्थ एव प्रकरणे प्रतिपाद्यत इत्यवगम्यते । नचात्राधिष्ठानत्व प्रतिपाद्यते, किन्तु परिणामित्वम्, अणिम्नो महान् न्यग्रोधस्तिष्ठतीत्यभिधानात् । न्यग्रोधफलेपि वृक्षो न दृश्यते, नापि तदन्तर्गतास्वण्वीषु धानासु, तस्मादण्व्या धानाया एवाय परिणामो वृक्ष इति—परिणामोपपादने हि तात्पर्य गम्यते । यदि सूक्ष्मस्थूलाध्यासोपपादने तात्पर्य स्यात्तदा हि काचाद्यधीनलिपिस्थूलाध्यासादिरुदाहर्तव्य । तस्मात्पूर्वोक्तस्वारसिकवाक्यार्थानुरोधात् कर्तृविशिष्टोपादानत्वपरा सद्विद्या ।

'असद्वा इदमग्र आसी' दित्यत्रासदिति कार्यस्वरूपासत्त्वमेवोच्यते, 'आत्मानमकुरुते' ति विग्रहविशिष्टरूपेण सृष्टिरुच्यत इति कस्यचिद्व्याख्यानमनुपपन्नम् ; तदित्यसतः परामर्शात्कर्तृत्वानुपपत्ते. । 'आत्मन आकाशस्सम्भूत' इति प्रकृत आत्मा परामृश्यत इति चेन्नः- तदिति नपुंसकत्वानुपपत्तेः । 'सच्च त्यच्चाभवदि' ति सत्त्वादिगुणाभिव्यक्तिपरमित्यप्यनुपपन्नम्, ब्रह्मणस्सत्त्वादिगुणासिद्धेः । सदिति स्वरूपविकारशून्यो जीव उच्यते, त्यदिति स्वरूपविकारवदचेतनमुच्यते, सृष्टिकथनात् सत्त्यद्भावस्यानुप्रवेशाधीनत्वकथनाच्च विवर्ततात्पर्याभावोवगम्यते, सृष्ट्यनुप्रवेशसत्त्यद्भावानां समानकर्तृकत्वमात्रं विवक्षितम् ।

एवं निर्विकारत्वश्रुतेरुपादानत्वश्रुतेश्च सद्वारकमुपादानत्वं सिद्ध्यति, कर्मणोऽपूर्वद्वारा स्वर्गसाधनत्ववत् । एवं विशिष्टोपादानत्वं श्रुतिभिः प्रतिपन्नम् । तथा अपृथक्सिद्धचिदचिद्विशिष्ट्यश्चान्तर्यामिब्राह्मणसुबालोपनिषदादिषु बहुश' प्रतिपन्नम् । तस्मात्सूत्रोपनिषदां सामरस्याद्विशिष्टाद्वैतं ब्रह्ममीमांसाशास्त्रविषय इति सिद्धम् ।

**अथ देवमीमांसा** — अस्मिन् शास्त्रे का देवता प्रतिपाद्येति । रुद्र इति पाशुपततन्त्रानुसारिण' । भगवानेवेति वेदान्तिन ।

पूर्ववादिन आहु - 'शब्दादेव प्रमित' इति सूत्रे शब्दशब्दः श्रुति पर', 'ईशानो भूतभव्यस्ये' ति वाक्यमुदाहरणम्, ततश्च 'शब्दात्' - ईशानश्रुतेरित्यर्थ । श्रुतिश्च रूढि । ईशानशब्दश्च रुद्रे रूढ इति अनेन सूत्रेण तस्यैव ब्रह्मत्वावगमात् कृत्स्नं शास्त्रन्तद्विषयमेवेति ।

वेदान्तिनस्तु - जगत्कारणत्वं ब्रह्मणो लक्षणमभिहितम्, तदेव पूर्वद्विकेन निरूपितम्, तदुपासनन्तृतीये, तत्प्राप्तिश्चतुर्थे, इति कृत्स्नमपि शास्त्रं कारणविषयत्वाद्भगवद्विषयमेवेत्यनुगृह्णन्ति । तेषामयमाशय. ।

' सदेव सोम्येदमग्र ' आसीदिति सद्विद्यायां सतः कारणत्वं प्रतिपन्नम्, ' ब्रह्मवा इदमेकमेवाग्र आसी ' दिति तदेव सद् ब्रह्मत्वेन विशेषितम्, इदमेकमेवाग्र आसीदित्यनुवादः, ब्रह्मेति विधिः, तथा - ' आत्मा वा इदमेक एवाग्र आसी ' दिति तदेवात्मत्वेन विशेषितम्, अत्राप्यात्मेति विधिः, इदमित्यादिरनुवादः, तथा - एतदेव महोपनिषदि - ' एको ह वै नारायण आसी ' दिति नारायणत्वेन विशेषितम्, अत्रापि नारायण इति विधिः, एक इत्यादिरनुवादः । तथा - नारायणोपनिषदि - ' अथ पुरुषो ह वै नारायणो कामयत प्रजास्सृजेयेति, नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रोजायते, नारायणादिन्द्रो जायते, नारायणाद् द्वादशादित्या रुद्रा वसवस्सर्वे देवास्सर्वे ऋषयस्सर्वे लोकास्समुत्पद्यन्ते सर्वाणिच भूतानि, नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते ' इति, महानारायणोपनिषदि च - ' अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेति, अथापस्ससर्ज, नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रोजायते-नारायणात्प्रजापतय प्रजायन्ते, नारायणोदिन्द्रो जायते, नारायणोद्द्वादशादित्या रुद्रावसव· प्रजापतयश्च सर्वा देवतास्समुत्पद्यन्ते सर्वे लोकास्सर्वाणिच भूतानि, नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते ' इति, पैङ्गिरहस्येच - ' एको नारायण आसीन्न ब्रह्मा नच शङ्करः । स मुनिर्भूत्वा समचिन्तयत्, तत एते व्यजायन्त, विश्वे हिरण्यगर्भोऽग्नियम वरुणविष्णुरुद्रेन्द्रा, तस्य हैतस्य परमस्य नारायणस्ये ' त्यादि; सुबालोपनिषदि प्रथमद्विकेन कारण वस्तु प्रतिपाद्य, तृतीयखण्डेन तस्य ब्रह्मत्वं स्फोरयित्वा, उपादानत्वसिद्धये सद्विद्यायामनुप्रवेशवत् पञ्चम खण्डेनान्तर्यामित्व प्रतिपाद्य, देवताविशेषजिज्ञासाया ' नैवेह किंचनाग्र आसीदि ' त्यारभ्य, खण्डद्वयेन कारणत्वमन्तर्यामित्व च भगवत एवेति प्रतिपादितम्; एव देवतानिर्द्धारण एवोपनिषदस्तात्पर्यमिति दर्शयितु मध्ये सम्प्रदायो दर्शित. । यद्यपि श्वेताश्वतरादौ क्वचित्क्वचिद्देव

सान्तरस्य कारणत्वमुच्यत इव, तथाप्युदाहृतश्रुतिवत् सृष्टिलयप्रकारादि प्रतिपादनाभावेन तद्वत्कारणत्वतात्पर्यहेत्वभावात् तद्विरोधाच्च तेषामर्थ वादत्वमेव युक्तम् । वस्तुतस्तु तेष्वपि भगवत एव कारणत्वं स्वरसतो ऽवगम्यते । तथाहि - श्वेताश्वतरे प्रथमे खण्डे- ' ब्रह्म वादिनो वदन्ति, किं कारणं ब्रह्म कुतस्स्म जाता जीवाम केन क्व च सम्प्रतिष्ठाः । अधिष्ठिता- केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्था । कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषान्न त्वात्मभावादात्माप्यनीशस्सुखदुःखहेतोः । ते ध्यान योगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् । ' इत्याद्युक्त्वा, ' तत् ब्रह्मोपनिषत्पर ' मित्युपसंह्रियते । अतः प्रथमखण्ड एव प्रक्रान्तः प्रधानार्थो निर्धारित इत्यवगम्यते । तत्र किं कारणं ब्रह्मेति कारणभूतं वस्तु ब्रह्मवा कालोवा स्वभावो वा नियतिर्वा यदृच्छा वा भूतानि वा पुरुषो वेति- एवं कारणधर्मिको ब्रह्मादिकोटिकस्संशयो न सम्भवति, तदा खलु कारण ब्रह्म किं ब्रह्मवेत्यर्थस्स्यात्, तथा सति कोट्यन्तर मशाब्दं स्यात् । किञ्चैव संशये कालादिवास्यस्य कालाद्याक्षेपपरताया वाच्यत्वात् ' संयोग एषान्नत्वात्मभावादि ' ति वाक्यमनन्वितं स्यात्, कालादीनां कारणत्वं परित्यज्य तत्संयोगस्य हेतुत्वस्य केनाप्यनुक्त्या पृथक्तदाक्षेपायोगात् । अचित कोटित्वे अधिष्ठिता- केनेति चानुपपन्नम्, कोट्यन्तराणामार्थिकत्वमङ्गीकृत्य ब्रह्मादिकोटिकत्वोक्तिः प्राचामभ्युपगम्य- वाद एव । तस्मात्कारणं ब्रह्मेति धर्मिनिर्देशः, किमिति कोटिप्रदर्शनम्; किन्दैवतमित्यर्थः । ब्रह्मा विष्णू रुद्रो वेति विवक्षितम् । एवं किंशब्देनैव नानाकोट्युपस्थापनान्न कोटेरशाब्दत्वदोषः । उत्तरत्र कुतः केन क्व केनेति किं शब्दैरेव नानाकोट्युपस्थापनादिहापि किंशब्देनैव नानाकोट्युप- स्थापनं युक्तम् । इत्थं संशयाद्देवताविषयमेव निर्धारण चिकीर्षितमित्य वगम्यते । पराभिमता च देवतानिर्धारणार्थता । अतः प्रथमखण्ड एव

देवतानिर्धारण वाच्यम् । तत्र पुरुषेशहरपदानि त्रीण्येव श्रूयन्त इति तदन्यतरस्मिन्नेवाय देवतानिर्धारणभार पर्यवसित । तत्र न तावदीश शब्दो निर्धारक, 'व्यक्ताव्यक्तमरत' इत्याधारत्वस्यैव श्रवणात्, कारणत्वस्याश्रवणात् । पृथगात्मानम्' 'उद्गीथमेतदि' ति नियन्तृनियाम्य भेदज्ञानस्य मोक्षसाधनत्व तदनुष्ठानञ्चोक्त्वा तदेव ज्ञानस्य मोक्ष साधनत्व 'सयुक्तमेत' दिति परमात्मनो बन्धकत्वाज्जीवस्य बन्ध्य त्वाचास्य तदुपासनया बन्धनिवृत्तिर्युक्तेत्युपपाद्यते । अत कथमिद वाक्य कारण ब्रह्म किं देवतारूपमित्यस्योत्तर स्यात् । किंच "अनीश श्चात्मा बध्यते भोक्तृभावादि" त्युत्तरवाक्ये समुच्चयासम्भवाच्च स्त्वर्थ । ईशो बिभर्ति, अनीशो बध्यत इतीशनमनीशनञ्च हेतुतया विवक्षिते, अन्यथा रुद्रत्वमात्रविवक्षाया अन्यश्चात्मा बध्यत इत्येतावत एव वाच्यत्वात् । अतो ऽनीश इत्यत्र योगार्थस्य विवक्षितत्वात् पूर्व त्रापि तस्यैव वाच्यतया नात्रेशशब्देन देवतानिर्धारणसम्भव । यत्र च योगोद्भवस्तत्र न रूढिपरिग्रहे निमित्तमस्ति, येनेनापि प्रयोगचारिता स्यात् । अस्येशशब्दस्य विवरणसापेक्षतया हरशब्दस्य तद्विवरण रूपता वदता परेणापीशशब्दस्यानिर्धारकत्वमङ्गीकृतमेव । ईशशब्दस्यो न्मिषितयोगत्वात् भगवति प्रयोगप्राचुर्यात् ब्रह्मण्यपि स्वारस्येन ब्रह्म पदतुल्यतया निर्धारकत्वाभावादपि हि विवरणसापेक्षता । नापि हरशब्दो निर्धारक, "क्षर प्रधानममृताक्षर हर । क्षरात्मानावीशते देव एक" इति श्रूयते, अत्रापि हि कारणत्वञ्च प्रतीयते, किन्तु नियन्तृत्वमात्रम्, तच्चाकारणस्यैव जीवस्य शरीरनियमनवदुपपद्यते । किञ्च अत्राक्षर पदविवरणमेव हरशब्द, भोग्यजात स्वार्थतया हरतीति हरो जीव । ननु 'हरतेरनुद्यमनेजि' ति सोपपदादज्विहित, निरुपपद चेदम्, नच पचाद्यच्, पचाद्यन्तर्भावकल्पने मानाभावादिति चेत्, – पश्यतोहर इत्यादिषु 'वाविवपश्यद्भ्यो गुप्तिदण्डहरेभ्य" इत्यनुविधायस्मृतार्थ

कृतस्य हरशब्दस्य दर्शनेन पचाद्यन्तर्भावकल्पनात् । हरशब्दस्य विव रणसापेक्षत्वात् 'क्षरात्माना' वित्यात्मपदप्रयोगः । तथा – 'संयुक्तमेत त्क्षरमक्षरंचे' त्युक्तक्षराक्षरशब्दयोर्विवरणमिह क्रियते । तत्र 'क्षरं प्रधानमि' ति व्याख्येयं पूर्वमुपादायानन्तरं व्याख्यानादुत्तरत्रापि तथैव वाच्यतया 'अक्षरं हर' इति हरपदेन व्याख्यानं युक्तम्, नह पूर्वेणामृतपदेन । किञ्च – उपक्रमे 'संयुक्तमेतत्क्षरमक्षरंचे' ति भर्तव्ये पृथक्पादेन निर्दिश्य, 'व्यक्ताव्यक्तं भरते विश्वमीश' इति पादान्तरेण भर्ता निर्दिश्यते; तथोत्तरत्र – 'क्षरंत्वविद्या ह्यमृतन्तु विद्ये' ति ईशितव्यं पृथङ्निर्दिश्य; 'विद्याविद्ये ईशते यस्तु सोन्य' इति ईशित पृथक्पादेन निर्दिश्यते; तदनुसारात्प्रथमपादस्थेशितव्यमात्रपरत्वमेव युक्तम् । किञ्च नक्षमृतमिति श्रूयते, येन व्याख्यानरूपता स्यात्

यदुक्तम् - 'सप्तदशारत्निर्वाजपेयस्य यूपो भवती' त्यत्र समासा न्तर्गतस्यापि सप्तदशपदस्य यथा विधायकता, तथैव समासान्तर्गतस्या प्यमृतपदस्य विधायकतोपपत्तेर्विवरणरूपता युज्यत इति; तन्न, तत्रहि परम्परासम्बन्धिवाजपेययूपोद्देशेन सप्तदशारत्निरिति विधाने अरत्निमात्र स्यापि प्राप्तत्वात् साप्तदश्ये विधिपर्यवसानमिष्यते, तत्रोद्दिश्य विधान रूपवाक्यभङ्गीसद्भावात्; इह तदभावात्कथमुद्दिश्यविधिः । तत्र यूपोद्देशेन साप्तदश्यविधौ साप्तदश्यसम्बन्धघटकारत्नयोऽनूद्यन्ते, अमृतपदस्य जीवे रूढ्यभावाद्यौगिकत्वेन यौगिकाक्षरशब्दसमानार्थतया न व्याख्या नरूपता, अतो हरशब्देनैव व्याख्यानमुचितम् ।

किञ्च 'हरो देव' इत्यन्वये पादान्तरान्वयो व्यवहितान्वयश्च एवं हरशब्दो ऽक्षरशब्दव्याख्यानमिति स्थिते अमृतशब्दो व्याख्येय विशेषणम् । तस्य प्रयोजनमन्यत्राप्यमृतशब्दप्रयोगे जीवोपलम्भः । ए ममृतशब्दस्य विशेषणत्वे सत्येव ह्युत्तरत्र 'क्षरंत्वविद्या ह्यमृतन्तु विद्ये' ति अमृतपदेनाक्षरनिर्देश उपपद्यते । क्षरंप्रधानमित्यत्र यद्वा

रव्येय क्षरपद तेनहि क्षरत्वविचेत्यत्र क्षरस्य निर्देशो दृश्यते, नतु प्रधानमिति व्याख्यानपदेन, तस्मादमृतन्तु विचेत्यत्रापि अमृताक्षरहर इत्यत्र यद्व्याख्यान तेन पदेनाक्षरस्य निर्देशो न कार्य, किन्तु व्याख्ये येनैव, एवञ्चामृतपदस्य व्याख्येयविशेषणतया व्याख्येयानुप्रवेशे सत्येव तेनाक्षरस्य निर्देशसम्भव, नतु व्याख्यानरूपत्वे, तस्माद्धरशब्दो जीवपर इति न तेन देवतानिर्धारणसम्भव । अत पुरुषपदे देवतानिर्धारणभार पर्यवसित ।

किञ्च कालादिवाक्यस्य निर्धारकत्वाभावे कालादिकारणत्वाक्षेपपरता वाच्या, कारण ब्रह्मेति निश्चित्य देवताविमर्शे क्रियमाणे कालाद्याक्षेपस्य क प्रसङ्ग ? एतेन देवताविमर्शमङ्गीकृत्यापि कालादिवाक्यस्याक्षेपपरत्व वदन्त परे निरस्ता ।

तदयमर्थ (किंकारणमिति) कारणमिति कर्तृनिर्देश, कुत स्स्मजाता इत्युपादानस्य, केन जीवामेत्यन्वय, तेन रक्षकस्य, क्व सम्प्रतिष्ठा इति सहर्तुर्लयस्थानस्यच, सगा प्रतिष्ठारूपलयस्थानस्य लयकर्तृत्व सूचनसम्भवाद्यधिकरणस्य लयस्य तत्कर्तृकत्व सामीचीन्य विवक्षितम्, अधिष्ठिता केनेति नियन्तु । इत्थ विप्रतिपत्तिरुपन्यस्ता ।

अथ सिद्धान्त उपन्यस्यते (कालस्वभाव इत्यादि) कालस्वभाव - कालविशेष । कालपरिगणनामध्यप्रविष्टस्य स्वभावशब्दस्य तत्तद्वस्तु स्वभावपरत्वासम्भवात् कारणमस्तीति निश्चित्य सशयप्रवृत्ते स्वभाववाद स्याप्रसक्त्या तन्निराकरणासम्भवात् योनिपदानन्वयाच्चाक्षेपपक्षेपत्थमेव वाच्यत्वात् । यदि स्वभावशब्दस्य तत्तद्वस्तुस्वभावपरत्वे उक्तदोषपरिहारसम्भव, तदा तथैवास्तु । नियति – अदृष्टम् । यदृच्छा घचित्व चित्तत्कार्यविशेषेषु हेतुभूतानि दैवानि, दैवाद्यदृच्छयेति समानार्थतया प्रयोगात् । भूतानीति महदादीनामुपलक्षणम् । एतानि पुरुष । निर्वाद

निर्वाहकभावनिबन्धनं सामानाधिकरण्यम् , तेन कारणनिर्वोढृत्वेन कर्तृत्व मुक्तम् । योनिरित्युपादानत्वमुक्तम् । एवं किं कुत इत्यस्योत्तरमुक्तम् । उभयविधकारणत्वरक्षकत्वलयाधिकरणत्वकर्तृत्वनियन्तृत्वविशिष्टं वस्तु किं दैवतमिति हि विप्रतिपत्ति । अतः कारणत्वादीनामेकधर्मिगतत्वस्य निश्चितत्वात् प्रधानभूतकारणनिर्धारणेनैव निर्धारणान्तरमपि सिद्धमितीह पृथक्तदनुक्तिः । ( चिन्त्यमिति ) निर्धार्यमित्यर्थः, सन्देहवाचिना तत्प्रयोज्य निर्धारणाभिधानात् । अत एवाह भवनाथः - " तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिंगसमवायादि " त्यत्र- " एवं शाब्दताप्स्थितिरिह नयान्तरात् गौणमुख्याधिकरणे नयान्तरात् , विवेकश्शाब्दत्वेपीति चिन्त्य " मिति । अत एव सम्यक्चिन्तितोयमर्थ इति वक्तारो भवन्ति । एतदभिप्रायेणैवेदं चिन्त्यमित्यादि वदन्ति । तद्वदिहापि निर्धारणमेवार्थः । इयांस्तु विशेषः, गौरव्यविषये तदुक्तत्वेति वक्तुमक्षमाश्चिन्त्यमिति व्यतिरेकनिर्धारणं लक्षयन्ति । इह तु तादृशविवक्षाहेत्वभावादन्वयनिर्धारणमेव विवक्षितम् । अतः कारण ब्रह्मेति धर्मिनिर्देश । किमिति नानादेवता कोटिप्रदर्शनम् । पुरुष इति परदेवतानिर्धारणम् । यदि हि कालादिवाक्य माक्षेपस्स्यात्तदा भूतानि पुरुषो योनिरिति चिन्त्यमिति वाच्यम् , पुरुषशब्देन परमात्मनिर्देशादेव हि तेन पदेन जीवनिर्देशे पूर्वनिर्दिष्ट पुरुषमत्याभिज्ञा भावितेति तन्निवृत्तये पुरुषजीवयोर्भेदप्रतीतिसिद्धयर्थ ' आत्माप्यनीशस्सुखदु खहेतो ' ' कालात्मयुक्तानि ' ' पृथगात्मानम् ' ' क्षरात्मानावीशते ' ' अनीशश्चात्मा ' इत्यात्मशब्देन जीवनिर्देशः, अस्मिन्प्रकरणे क्वापि पुरुषपदेन जीवनिर्देशाभावश्च । आक्षेपपरत्वे ' पुरुष इति चिन्त्य ' मित्यनन्तरन्तद्धेतूपन्यासे पुरुषोप्यनीशस्सुखदु खहेतोरिति हि वाच्यम् । एवं सति ' ब्रह्मवादिनो वदन्ति किन्दैवत्यं पूर्णमासमिति प्राजापत्यमिति ब्रूयादि ' त्यादिषु सशयप्रदर्शनवाक्यानन्तरवाक्यस्यैव निर्धारणपरत्वदर्शनादिहापि तादृशश्रुतिशैल्यनुरोधो भवति । एव परम

पुरुषस्यैव कारणत्व प्रतिज्ञायास्सेवेदमुपपद्यत इत्यभिप्रायेणाह ( सयोग इति ) कालादिसंयोगस्य कार्येऽपेक्षितत्वात् सयोगस्य कालादिस्वरूप प्रयुक्तत्वाभावात्तदनुगुणसार्वज्ञ्यसर्वशक्तियुक्तपरमपुरुष एव तत्सयोजक, नतु ब्रह्मरुद्रादिजीववर्ग, तस्य सुखदु खभागित्वेन कर्मपरतन्त्रतया निरङ्कुशज्ञानशक्त्योरभावादित्यर्थ । सुखदु खहेतोरिति ब्रह्मवादिनो वदन्ती त्यन्वय । एव भगवत कारणत्वनिर्णये किं विशेषणद्वारकपरिणामा न्वयाद्विशिष्टमुपादानम् ? किं स्वरूपपरिणामात् केवलस्वरूपमेवोपादान मिति ध्यानयोगेन विचार्य, विशिष्टोपादानत्व निर्धारयाम्बभूवुरित्याह ( ते ध्यानेति) आत्मशक्ति — अनन्याधीना शक्ति । गुणवैषम्यनिबन्धनत्वा त्कार्यस्य स्वगुणैर्निगूढामिति सत्त्वादिगुणत्रयोपन्यास । एवमुपक्रमे भगवत कारणत्व निर्धारितम् । नचोत्तरत्र 'न सन्न चासच्छिव एव केवल' इति शिवशब्दश्रवणात्तस्यैव कारणत्व प्रतिपाद्यत इति वाच्यम्, उपक्रमानुरोधेनोपसहारस्थस्य शिवशब्दस्य भगवत्परत्वात् ।

निखिलस्य श्वेताश्वतरस्य भगवत्परत्व तत्रत्यकृत्स्नवाक्यैरेवावगम्यते । विरोधोपि नोपलभ्यते । तथाहि प्रथमखण्डस्य भगवत्परत्वन्तावदुक्त मेव । तत्र 'य कारणानि निखिलानि' ति वाक्येन पूर्ववाक्यसिद्ध मधिष्ठातृत्वमनूद्य, विशिष्टकारणे विशेषणविशेष्यस्वरूपमुक्तम् । तत्रा 'धीमे' ति ब्रह्मविदामनुसन्धानम् 'तमेकनेमि' मित्यारभ्याधीमेत्यने नैवान्वितम्, 'अपश्यन्नि' त्यस्य परस्पराकाङ्क्षाविरहेन 'शक्ति' मित्य नेनैवान्वितत्वात् ।

एतेन — 'ते ध्यानयोगानुगता अपश्यन्नि'' ति वाक्ये गौरीदर्शनमुच्यते, 'य कारणानी' ति रुद्रदर्शनमुच्यते, इति निरस्तम्, अपश्यन्नित्यस्योत्तरत्रान्वयासम्भवात् । नच 'धीमे' त्यस्याव्यवधानात् स्त्रीलिङ्ग पदबोधितकर्मणैवान्वय, आकाङ्क्षया अविशेषेण एकस्य सन्निधेर वैशेषिकत्वात् । 'तमूर्णनाभि' रिवत् सर्वजीव इति अधिष्ठिता येन' ति

उक्ताधिष्ठातृत्वस्यापि कालादिवाक्ये विवक्षितत्वात् तद्विवृतम् । 'पृथगात्मान' मिति ब्रह्मचक्रभ्रमणरूपसंसारमोक्षणे हेतुरुक्तः । 'उद्गीथ' मित्यनुष्ठानमुक्तम् । 'संयुक्तमेत' दित्यनेन 'सर्वाजीवे' 'पृथगात्मान' मित्येतदुभयं विवृतम् । 'ज्ञाज्ञौ द्वा' वित्यशक्तिवदज्ञानस्यापि बन्धहेतुत्वं तन्मोचकस्यानन्तविश्वरूपाभिधानस्य भगवतः कर्मवश्यत्वाभावश्चोक्तः । कर्मवश्यत्वाभावोक्त्या ईशने हेतुरुक्तः । 'ईश' इति योगार्थस्य विवक्षितत्वात् । 'तस्याभिध्याना' दिति 'ज्ञात्वा' इत्येतद्विवृतम् । भूयोऽभिध्यानादित्यन्वयः । 'वह्नेर्यथे' त्यादिना ध्याने प्रणवस्य साधनत्वमुक्तम् । एवं प्रथमखण्डे परा देवता तद्ज्ञानस्य मोक्षसाधनत्वं च निर्धारिते ।

द्वितीयखण्डे— योगारम्भप्रयोज्यमन्त्रादिकमुच्यते । तत्र 'एको हि देव' इति वाक्येन 'एष हि देव' इत्यन्यशाखिवाक्यं प्रत्यभिज्ञाप्य, भगवानेवेह विवक्षित इति ख्यापितम् ।

तृतीये खण्डे— 'विश्वतश्चक्षु' रित्यादिना पुरुषसूक्तार्थप्रत्यभिज्ञापकेनांमसिवाक्येन भगवत्परेण जगत्कारणत्वमुक्तम् । 'यो देवाना' मिति भगवदुपासनोपयोगी रुद्रगोचरो भगवद्ज्ञानप्रार्थनामन्त्र उक्तः । 'ईश्वराद्ज्ञानमन्विच्छेत्' 'उपायोसि हरेस्स्मृता' विति हि स्मर्यते । (हिरण्यगर्भं जनयामासेति) हिरण्यगर्भमपश्यदित्यर्थः । अनुवादरूपस्यास्य हिरण्यगर्भोत्पत्तिविधायकमहोपनिषदादिवाक्यानुसारेणैव नेयत्वात् । एवमर्थो जातः इदानीमर्थोजातः ममार्थो न जातः अयमर्थो निष्पन्न इत्यादिभूयःप्रयोगदर्शनात् जनयामासेति ज्ञानपरत्वं युक्तम्, 'हिरण्यगर्भं पश्यत जायमान' मिति तैत्तिरीयवाक्यानुसारादत्रत्यतादृशवाक्यानुसाराच्च । इष्टप्राप्त्यनिष्टनिवृत्तिप्रार्थनारूपध्यानांगमन्त्रोपदेशानन्तरं ध्येयस्वरूपमाह (ततःपरमिति) मन्त्रप्रतिपाद्यरुद्रात्परमि-

त्यर्थः । 'तत' इत्यवधिपरम्, न तु हेतुपरम्, तथात्वे परपदद्वयानन्वयात् । अवधिपरत्वे तु प्रथमः परशब्दोऽन्यपरः, द्वितीयस्सर्वस्मादुत्कृष्टपरः । ईशशब्दविवरणार्थे भगवति तात्पर्यव्यञ्जनार्थञ्च पुरुषसूक्तर्चम्, 'अणोरणीयान्महतो महीयानात्मा गुहायान्निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ ....एष देवस्तुमर्त्यानां पटैरिव पिधीयते । एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तस्सनातनः ॥' इति शङ्खवचनेन भगवत्परतयोपबृंहिताणोरणियानित्यनुवाकस्थवाक्यं चोदाहृत्य, भगवति तात्पर्यं व्याञ्जितं 'वेदाह' मित्यारभ्य, 'सर्व' मित्यन्तेन । (यस्मात्परन्नापरमस्ति किञ्चि दिति) यस्मात्परमन्यदवधिविशेषानपेक्षं परन्नास्तीत्यर्थः । यस्मात्परन्नास्तीत्येतावदुक्ते परशब्दस्यान्यार्थकत्वबुध्या वाक्यमयोग्यार्थमिति स्यादिति परत्वविशेषणं कृतम् । तस्मिन् कृते अपरशब्देनान्यत्वप्रतीतेः परशब्देनोत्कर्षविवक्षाया एव प्रतीतेः स्वस्मादुत्कृष्टमन्यन्नास्तीति वचोभङ्ग्या स्वयमेव स्वस्मादुत्कृष्टमिति प्रतीत्या स्वस्मादुत्कृष्टनिषेधलाभः । ननु - अणीयस्त्वज्यायस्त्वोभयनिषेधवत् इहापि परावरोभयनिषेध एव युक्तः, तथाचापरनिषेधवत् परनिषेधः कथञ्चित् स्तावकतया नेय इति चेन्न;- 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चि' दिति निषेध्यद्वयविवक्षायां नञ्द्वयदर्शनेनात्रैकनञा एकस्यैव निषेधे तात्पर्यावगमात् अपरमिति विशेषणमेव । नन्वेवमप्यपरमिति नान्यदुच्यते, किन्तु निकृष्टम्, तथाच यस्मात् अपरं परं नास्तीति निकृष्टस्यैव पुरुषात्परत्वनिषेधात् - ब्रह्मणः पुरुषात्परत्वमुपपद्यत इति चेन्न; - यस्मादिति परावधितयोपस्थितस्यैव बुद्धिस्थतया अपरशब्दार्थावधित्वम्याप्यौचित्येनापरशब्दस्यान्यत्वपरताया एव माह्यत्वात् । प्रथमयोजनायान्तु परशब्देन सर्वोत्कर्षस्य भूयसा प्रयोगेन स्वतः प्रतीतेः यस्मादित्यस्य परावध्युपस्थापकत्वञ्चाङ्गीकृतम् । (ततोयदुत्तरतरमिति) ततः - तस्मात्, उक्तहेतुभिः,

यदुत्तरतरं समस्तकल्याणगुणविशिष्टं अखिलहेयप्रत्यनीकं च पुरुषाख्यं वस्तु । (य एतद्विदुरमृतास्ते भवन्तीति) 'यएनं विदुरमृतास्ते भवन्ती' ति अभ्यासवाक्यार्थः प्रत्यभिज्ञापितः । (तस्मात् सर्वगतश्शिव इति) यतो भगवान् अतस्सर्वगतत्वेपि शिव इत्युक्तम् । (महान्प्रभुर्वै पुरुष) इति सत्वप्रवर्तकत्वं भगवति प्रसिद्धमुक्तम् । (शान्तिमीशान इति) कर्मणश्शेषत्वेनाविवक्षितत्वात् . 'अधीगर्थदयेशांकर्मणी' ति न षष्ठी। शान्तिमीशानः पुरुषइत्याह (अङ्गुष्ठमात्र.पुरुष इति) पुरुषसूक्तोदाहरणेन भगवत्परत्वं स्पष्टीकृतम् । पुरुषसूक्तं विवृतं । (सर्वत.पाणिपादन्तादिति) सर्वस्य प्रभुं सर्वस्येशानमित्यन्वयः, सर्वस्य शरणं सर्वस्यसुहृदित्यन्वयवत् । (नवद्वारइति) हंसो भगवान् । सएव सर्वशरीरत्वाद्देही । पौष्कर प्रादुर्भावे - 'अथायं भगवान् हंसो गतो योगेन वालता' मिति, 'तस्मिन्नहनि सम्प्राप्ते तं हंसं महदक्षर' मिति, 'रराम सुखमेकान्तं शुश्रूषुर्हंसमव्यय' मितिच । एकादशस्कन्धे वसुदेवनारदसंवादे- 'हंसस्सुपर्णो वैकुण्ठो धर्मो योगेश्वरो मल॰ । ईश्वरः पुरुषोव्यक्तः परमात्मेति गीयते' ॥ इति । नानार्थरत्नमालायां - 'हंसः खगे स्मरे विष्णा' विति । एवन्तृतीयखण्डे पुरुषशब्दः सप्तधाऽऽवृत्तः । भगवत्पुराणहंसशब्दाश्च श्रुताः । 'विश्वतश्चक्षु' 'वेदाहमेतं' 'यस्मात्परं' 'सहस्रशीर्षा पुरुषः' 'हृदा मनीषा' 'अणोरणीया' मिति षोढा भगवत्प्रत्यभिज्ञा । एवं भगवदभिधानश्रुते॰ प्रत्यभिज्ञया, 'तत॰ पर ब्रह्म परं बृहन्त' मिति रुद्रात्परत्वश्रुतेश्चास्य खण्डस्य भगवत्परत्वं स्पष्टम् । 'तस्मात्सर्वगतश्शिव' इतिहेत्वन्वयान्मङ्गळपरः । 'शान्तिमीशान' 'सर्वस्येशान' मिति यौगिक इत्युक्तम् । 'ईशन्त' मिति 'तत॰ पर' मित्येतत्परामर्शात् भगवत्परत्वं स्पष्टम् । अतस्तृतीयखण्डे भगवत्परत्वहेतवो भूयास॰ । अतस्तस्मिन् खण्डे 'एको हि रुद्र' इत्यत्र, रुद्रशब्दस्संहारकालीनक्रोधाभिप्रायो भगवत्पर ।

चतुर्थखण्डे 'य एको वर्ण' इति वाक्यम् 'तदेवाग्नि' रित्यभ्मसिवाक्य सच्छायेनोत्तरवाक्येन भगवत्परतया व्याख्यातम्। अजामेका' मिति अणो रणीया नित्यनुवाकवाक्यमपि भगवन्त प्रत्यभिज्ञापयति। 'जुष्ट यदा पश्यत्यन्यमीश' मित्यत्रेशशब्द 'अनीशया शोचती' ति पूर्ववाक्यानु रोधायौगिक। 'मायिनन्तु महेश्वर' मित्यत्र महेश्वरशब्दो भगवत्पर, 'मम मायादुरत्यये' त्यादिभिर्मायाया भगवदधीनत्वावगमात्, सौना लादौ तथावगमाच्च। 'यो योनिं योनि' मित्यत्रेशानशब्द कारणत्वा नुवादात्तथाप्रसिद्धभगवत्पर। 'यो देवाना' मिति पूर्ववदङ्गमन्त्र। ऋपित्वात्स्वपितरञ्जायमानावस्यमपश्यदित्यर्थ। 'य ईशे अस्ये' ति भगवत्प्रत्यभिज्ञा, 'हिरण्यगर्भस्समवर्ततान्र' इत्यष्टर्चान्तर्भावात्। अष्ट र्चस्य च भगवत्परत्व वेदान्तविजयेऽभ्यधाम। 'ज्ञात्वा शिव शान्ति मत्यन्तमेती' ति शिवशब्द 'ज्ञात्वा शिव सर्वभूतेषु गूढ' मिति व्याख्यात। सर्वभूतसम्बन्धेपि दोषासम्पृष्टमित्यर्थ। तस्मात्सर्वगतश्शिव इतिवत्। 'य एन विदुरमृतास्ते भवन्ती' ति 'तमेव विद्वानमृत इह भवती' त्यर्थप्रत्यभिज्ञानात्, 'हृदा मनीषा' 'नैनमूर्ध्व' मित्य म्भसिवाक्याभ्या भगवत्प्रत्यभिज्ञानाच्च भगवत्परम्। 'अजात' इति रुद्रविषयोयमङ्गमन्त्र भगवतो ब्रह्मणो वा जात, अत एव 'रुद्र यत्ते जनिम चारु चित्र' मित्याद्युच्यते। सोय मन्त्र 'तव श्रिये मरुतो मार्जयन्ति रुद्र यत्ते जनिम चारु चित्रम्। पद यद्विष्णो रुपमन्निधायि गुह्यन्नाम पासि गोना' मिति। हे रुद्र, यस्मात्ते जन्म चारु चित्रम्, तस्मात्तव श्रिये, मरुतो देवा ब्रह्माद्या, मार्जयन्ति क्षाळित यन्त, किं मार्जयन्तीत्यपेक्षायामाह 'पद य' दिति। उपमम् — मेयतुल्यम् मानम्, यद्वा माशब्दो भूमिपर, वनयन्त्या 'मा विश्वा पृथिवी' त्यभिधानात्, उपमित्यव्ययीभाव, भूम्याम्समीपे दिवि, क्रमसौस्यर्थप्रतिपादनायोपममित्युक्तम्, तेन द्वितीय क्रमो लभ्यते,

यद्विष्णो पदं निधायि, 'त्रेधा निदधे पद' मिति श्रुत्यन्तरम्, किञ्च - तेन पुण्येन जन्मना, गोनां - गिराम्, प्रकृतस्य विष्णोर्नाम्नाम् मध्ये, गुह्यं नाम- तारकाख्यम्, पासि - गोपायसि, शिरसा भगवत्पादोदकधारणात्तन्नामस्मरणाच्च तवैव जन्म सफलमिति । एवंच चतुर्थखण्डः प्रत्यभिज्ञाबाहुल्यात् भगवत्परः । नच पुरुषसूक्तवाक्यानामिहाम्नानात्तस्यैव रुद्रपरत्वं स्यादिति वाच्यम्; वेदान्तविजये तस्य सूक्तस्य भगवत्परताया अस्माभिः प्रपञ्चितत्वात् । श्वेताश्वतरस्यच उपक्रमादिहेत्वन्तरैर्भगवत्परत्वावगमात् । किञ्च ; सर्ववेदतात्पर्यनिर्धारकत्व मस्यसूक्तस्य 'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते । ऋतं सत्यं च विख्यातमृषिसिंहेन चिन्तित' मिति सर्ववेदेषु पाठात्, पुरुषसूक्तस्य क्वापि सूत्रे प्रातिस्विकरूपेण विचाराभावेपि चिन्तितमित्युक्ते', कारणचिन्तामात्रस्य तदर्थविषयचिन्तारूपत्वाभिसन्धिनिबन्धनत्वाच्च सिद्धम् । अतस्तत्स्वारस्यानुरोध एव श्रुत्यन्तराणां युक्तः, नतु विपरीतम् ।

पञ्चमषष्ठयोः कारणत्वनियन्तृत्वादिसुबालोपनिषदाद्यर्थानुवादात्, 'ब्रह्मयोनि' मिति 'यो ब्रह्माण' मिति च चतुर्मुखोत्पादकत्वोक्ते', 'एको हंसः' 'तमेव विदित्वे' ति भगवत्प्रत्यभिज्ञानाच्च भगवत्परत्वं स्पष्टमेव । 'ब्रह्मणे ब्रह्मदायिने' इति कैलासयात्रायां श्रूयते । अपिच 'यदातमः' इत्यनुवाद इति सर्वमम्प्रतिपन्नम्, प्रळयावस्थपर इत्यपि, तज्ज्ञापकञ्च 'तमः परे देव एकीभवती' ति सौबालवाक्यम्, सच देवो नारायण एव । मैत्रेयोपनिषदि च 'तमो वा इदमेकमास' इति श्रूयते, तत्रापि 'सवा एष सूक्ष्मोग्राह्योऽस्य-पुरुषसंज्ञ' इत्युपक्रमएवास्या उपनिषदो भगवत्परत्वेन निर्णयात् तत्रापि भगवान् प्रतिपन्नः; 'नासदासीन्नो सदासीत्तदानीं तम आसी' दिति वाक्यमपि तदानीमिति सौबालादिप्रसिद्धप्रळयानुवादादसद्भावस्य तमस्सद्भावस्य च तत्रैव प्रपञ्चितत्वादनुवादः । किञ्च - यदि क्वचित्तमोमात्रं श्रुतं तत्राप्युक्तश्रुत्यनुसाराल्लयस्था-

नत्वेन स एव देवो विवाक्षत, तस्मादिह भळयावस्थतमसोऽनुवादात्तल्लय-स्थानत्वेन तदधिष्ठातृत्वेन तत्प्रकारत्वेन च तत्र प्रतिपन्नस्य भगवतः प्रत्यभिज्ञानात्तत्रैव भगवत्यक्षरत्वविधानमुचितम् । तत्रैव शिवत्वप्रतिपादन तात्पर्येपि न दोष, लीलापुरुषार्थसाधनशून्यत्वेन प्रासामाङ्गल्यशङ्कानिरासाय माङ्गल्यस्य प्रतिपाद्यत्वाल्लयस्यापि लीलोपकरणत्वात् पुरुषार्थाहाने र्नामाङ्गल्यमिति भाव । मागल्यप्रतिपादने केवलशब्दोपि सप्रयोजन, कैवल्येप्यमांगल्यन्नास्तीत्यर्थात् ; कारणत्वशङ्कितदोषनिरासार्थं वा शिवत्वोक्ति । 'यदि शिव एव केवल' इति रुद्रो विधीयत इत्युच्येत, तदा यदा तम तत् तदा न दिवा न रात्रि न सन्नचासच्छिव एवेति दिवादिनिषेधस्यापि निषिद्धत्वप्रसङ्ग । नचेष्टापत्ति, तमसस्सर्वदा सत्त्वेन सार्वकालिकनिषेधप्रसङ्गात्, तमएवेति सावधारणत्वविवक्षाया एवकारेणा-नूचमानस्य कथ विधि, तदा शिव एवेत्यन्वये व्यवहितान्वय । एवकारोपहतविधिशक्तित्वादपि न शिवशब्दो विधायक । अतएव 'षड्विंशतिरित्येव ब्रूया' दित्यत्र षड्विंशतिरिति न विधिरित्युक्तम् । अश्वमेधे श्रूयते – 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधिति-स्समेती'ति अध्रिगुप्रैषमन्त्र, सच वङ्क्रीयत्ताप्रकाशनसामर्थ्यात् लिङ्गा-त्तत्प्रकृतौ दैक्षे श्रुतस्य वङ्क्रीयत्ताप्रकाशनकार्यकस्य 'षड्विंशतिरस्य वङ्क्रय' इत्यस्याध्रिगुप्रैषगतस्य मन्त्रस्य कार्ये वर्तते, तत्राश्वमधिकृत्येद श्रूयते - 'न चतुस्त्रिंश दिति ब्रूयात् षड्विंशतिरित्येव ब्रूया' दिति । तत्र सशय - किमय वैशेषिकमन्त्रे चतुस्त्रिंशत्पदप्रतिषेध, उत चतुस्त्रिंश न्मन्त्रस्य वैशेषिकस्य प्रतिषेध इति, पूर्वपक्षे प्राकृतस्य षड्विंशति मन्त्रस्याश्वे निवृत्ति, सिद्धान्ते तु प्रवृत्ति । तत्र मन्त्रप्रतिषेधे च-तुस्त्रिंशत्पदस्य मन्त्रे लक्षणा विकल्पश्च स्यात्, लिङ्गकल्पितश्रुति प्रापितस्य प्रतिषेध्यतया श्रुतिविहितप्रतिषिद्धत्वात्, तस्मात्पदनिषेध

इति प्राप्तउच्यते, पदनिषेधे मन्त्रस्य न्यूनता, यथाप्रकृति सङ्ख्याया अनभिधानात्, षड्विंशतिपदेन पूरणे अयथार्थाभिधानम्, अश्वचंक्रीणामधिकसंख्यत्वात्। चतुस्त्रिंशत्पदप्रतिषेधेपि षड्विंशतिपदाप्राप्तेस्तस्यापि विधेयत्वे वाक्यभेदः, एवकारोपहतविधिशक्तिकत्वाद्विध्यसम्भवश्च। तस्मान्मन्त्रप्रतिषेधः। तथासति चोदकस्य निर्बाधतया तत्प्राप्तषड्विंशतिमन्त्रानुवादसम्भवाद्वाक्यभेदाद्यभावः, लक्षणा तु वाक्यभेदादिपरिहारलाभान्न दुष्यति। वस्तुतस्तापि नास्ति, न चतुस्त्रिंशदिति इतिशब्देनैवार्थेन तदादिमन्त्रोपस्थापनात्। ननु चतुस्त्रिंशदिति पदस्थाने षड्विंशतिशब्दं ब्रूयादिति वाक्यद्वयार्थः, एवञ्च न वाक्यभेदः, नाप्ययथार्थाभिधानम्, वचनादैन्द्रीन्यायेनाभिधानसम्भवादिति चेन्न; — तथाप्येवकारोपबन्धेन विधित्वायोगादिति। तदयमर्थः — यदा — 'तमः परे देव एकीभवती' त्यविभक्तावस्थं तमः, न दिवा- दिवा दिच, समस्तकार्यविधुरोभगवानेव, तत् - तदा, अक्षरमिति भगवतः स्वरूपतो विकाराभावो विधीयते, अत्र च शिवशब्देन भगवन्निर्देश स्सर्वशून्यत्वेपि मङ्गलरूपत्वं व्यञ्जयितुम्। अस्तु वा शिवशब्द यैव विधायकत्वम्। अथापि शिवशब्देन भगवत एव कारणतया विधिः स्यात्, नारायणकारणत्वविध्यनुसारात्। नच वैपरीत्यं शङ्कयम्, शिवादिशब्दानां भगवदभिधानत्वाद्रूढ्यन्तरानिगञ्जनसाम्यान्यतरवद्रूढिमत्त्वात्, भगवति दृष्टप्रयोगत्वाच। नचैवन्नारायणादिशब्दाः। भगवदभिधानत्वन्तावद्भामने- 'ननु नारायणादीनां नाम्नामन्यत्र सम्भवः। अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित' इति। हरिवंशे कैलासयात्रायां रुद्रकृतभगवत्स्तोत्रे रुद्रनामदर्शनेन परिसरवर्तिनां विचिकित्सानिराकरणार्थमुक्तम् - 'नामानि तव गोविन्द यानि लोके महान्तिच। तान्येव मम नामानि नात्र कार्या विचारणा'॥ इति। लोक्यतेनेनेतिलोकः प्रमाणम्, यानि त्वदभिधायकतया प्रमाणप्रसिद्धानि परत्वगमकानि च भवन्ति, तान्येव

मम नामानि । तानिचेश्वरपरमेश्वरमहेश्वरमहादेवादीनि । अत्र भगवन्नामत्व-महत्त्वरूपविशेषणद्वयविशिष्टेतरव्यवच्छेदकेनावधारणेन नोभयविशेषणविधुरस्य व्यावर्त्यते, 'उग्रो भस्मधरो नग्नः कपालीति शिवस्य चे' ति वचनविरोधात् । एव चैकैकविशेषणयुक्तस्य व्यवच्छेद्यत्वे वाच्ये महत्त्वाविशेषेपि त्वदीयनाम मम नाम्नीत्येव केवलभगवदीयत्वविशेषणवतो व्यवच्छेदे तेन प्राकरणिकभगवत्प्रशंसाया असिद्धे अवतारिकोक्ताविचिकित्सानिरासे तु गाहेतुत्वाद्व्यवच्छेदस्यैव श्लोके प्रधानप्रतिपाद्यतया स्वनामसु केषाञ्चित् भगवत्सम्बन्धप्रतिपादनमात्रे तात्पर्यासिद्धेश्च केवलमहत्त्वविशेषणवतो व्यवच्छेदात् मदीयमहानामसु त्वदनभिधायक किमपि नाम नास्तीत्यर्थः । ननु यानि तव नामानि यानि च महान्ति एतान्युभयविधान्येव मम नामानीत्यर्थः किन्न स्यात्, यच्छब्दान्तर-नामानीतिपदान्तरयोरध्याहारान्न स्यात् । 'घनसारश्चन्द्रसज्ञ' इति वत् भगवन्नाम्नाऽहङ्कारस्त्वेन रुद्रनामत्वविधान किन्न स्यात्' विधिशक्त्याकर्ष-प्रकरणाध्याहारचलनैर्न स्यात् । एवकारेण हि विधिशक्तिराकृष्टा व्यवच्छेदरूपविषयन्नीता । प्रकरणञ्च भगवत्परत्वपरम् । त्वदीयान्यपि मम महान्त्यपि ममेत्यत्राध्याहार उक्त एव । नामान्येवेत्यन्वये स्थान चलनम् । एवमनेन वचनेन रुद्रेणैव शिवादिनाम्ना भगवदीयत्व समर्थितम् । केचिच्छब्दास्सामान्यरूढिनिमग्नविशेषरूढिशक्तय, तत्समरूढयोवा, यथा महेश्वरमहापुरुषपरमेश्वरपरमपुरुषमहादेवादिशब्दा, केचिद्रूढिनिमग्नयोगशक्तय, यथा नारायणविष्णुवासुदेवादय, तत्र द्विविधा अपि शिवपुरुषमहेश्वरमहापुरुषादिशब्दा न रुद्रविष्णुव्यावर्तका, नारायणादि शब्दास्तु व्यावर्तका एव । ननु शिवशब्दश्शक्तिद्वयानुग्रहाय रुद्रपर एवेति कथ तस्यानिर्धारकतेति चेन्न, - शिवशब्दे रूढिद्वयानुग्रहे नारायणशब्दे लक्षणा स्यात्, शिवशब्दे विशेषरूढिं परित्यज्य सामान्य रूढिमात्राङ्गीकारे न कुत्रापि लक्षणेति विशेषरूढिर्नानुग्राह्या । अपिच

चर्हिराज्यनयान्न विशेषरूढिरिशवशब्दस्य । नचैवं सति पुरुषशब्देपि विशेष-रूढि र्नस्यादिति वाच्यम्, तत्संज्ञकत्वप्रमाणबलेन पुरुषशब्दे विशेषरूढि-स्वीकारात् । नारायणशब्दे लक्षणाप्रसङ्गादेव ईशादिशब्देषु यौगिकेष्वपि वृत्तिद्वयानुग्रहो निरस्तः । नारायणपदस्य भगवतोऽन्यत्र योगाङ्गीकारेणत्व-सम्भवस्तुप्रसिद्धः । यथा कथञ्चिद्येन केन चिद्व्युत्पत्तिविशेषेण तदुपपादने मनुस्मृत्यादिप्रसिद्धयोगपरित्यागः । अपिच- कारणविषयनारायणशब्दस्ये-यन्निरुक्तिः प्रकरणात्, कारणगोचरनारायणशब्दस्यैव च त्वया रुद्र-परत्वमिष्यते, अतस्तेनैव योगेन तत्र प्रवृत्तेर्णत्वानुपपत्तिरनिवार्या । न च तन्निरुक्तेश्चतुर्मुखपरत्वं शङ्क्यम् 'अण्डोत्पत्त्यनन्तरोत्पन्नस्य महदादि तत्वकारणत्वासम्भवात् । मानवचनव्याख्यानं च वेदान्तविजये द्रष्टव्यम् ।

अपिच- नेश्वरादिशब्दानां रुद्रे रूढिरपि, प्रोक्षणीन्यायेन योगेनैवोपपत्तेः । प्रसिद्धिप्राचुर्यादभिधानकोशोप्युपपद्यते । भगवति दृष्टप्रयोगाश्च शिव-शम्भ्वादिशब्दाः । तथाहि - 'शाश्वतं शिवमच्युतम् ।' यमस्मृतौ 'एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तस्सनातनः । एष धाता विधाता च प्रधान-न्निष्कळश्शिवः ॥' सभापर्वणि - 'बाहू द्वौ स्थापयामास कृष्णस्साक्षा-त्स्वयं शिवः ।' हरिवंशे षट्चत्वारिंशच्छततमे - 'शिवयोर्देवयोस्तत्र हरेश्चैव भवस्य च ।' त्रिपञ्चाशच्छततमे - 'ध्यायन् हरिं जगद्योनिं विष्णुं पीतांबरं शिवम् ।' पञ्चाशच्छततमे 'तपश्चर्तुं हरिः कृष्णो विष्णुस्सर्वेश्वरश्शिवः ।' 'अव्ययश्शाश्वतो देवस्सकलो निष्कळश्शिवः ।' एकनवतिशततमे - 'श्वसन्तमम्भोनिधिशायिनं हरिं भक्तप्रियं भक्तजना-स्पदं शिवम् ।' चतुर्विंशतिद्विशततमे - 'महादेवं महाभागमनन्तं शिव मच्युतम् ।' शान्तिपर्वणि- राजधर्मप्रशंसायां भीष्मः - 'लोक-नाथ महाबाहो शिव नारायणाच्युत ।' श्रीवाराहे तृतीयेध्याये - 'तत्र गत्वा मया विष्णुः पुराणपुरुषश्शिवः ।' द्वादशेध्याये- 'शिव-स्वरूपं प्रतरं महेश्वरं सदा प्रपन्नार्तिहरं धृतश्रियम् ।' पञ्चविंशेध्याये

'पुरुषो विष्णुरित्युक्तश्शिवो नारायण स्मृत ।' सूर्यसिद्धान्ते 'निरामय-निराभास निर्द्वन्द्व केशव शिवम् ।' सुपर्णवैकुण्ठसवादे 'भूतभव्य भवेशाय शिवाय शिवमूर्तये । शिवयोनये शिवाद्याय शिवपूज्यत माय च ।' इतिहाससमुच्चये — 'तमाहु पुरुष केचित् केचिदीश्वरमव्ययम् । केचिच्च परमात्मान केचिच्छिवमनामयम् ॥' हरिवशे शततमेऽध्याये 'तुष्टुवुर्देवमीशान मन्त्रै र्भागवतैस्तथा ।' एकोनपञ्चाशच्छततमे 'इत्यादिभिस्तथा देव वाग्भिरीशानमव्ययम् ॥' द्विपञ्चाशच्छततमे 'तन्देव द्रष्टुमीशान यतामस्साम्प्रत हरिम् ।' एकषष्टिशततमे - 'तानि त्वामा हुरीशान भूतानीति जगत्पते ।' अन्यत्र 'स्तुत्वाच देवमीशान वरद भक्त-वत्सलम् ।' भारतसारसमुच्चये 'आद्य पुरुषमीशान सर्वलोकमहेश्वरम् । न चिन्तयति यो विष्णु नारायणमनन्यधी ॥' यज्ञामहराध्याये 'प्रापुरादित्यवर्णन्त पुरुषन्तमस परम् । बृहन्त सर्वग देवमीशान वरद विभुम् ॥' महाभारते आदिपर्वणि 'आद्य पुरुषमीशान पुरहूत पुरुष्टुतम् ।' हरिवशे 'सहि युद्धगत श्रीमानीशो न स्म व्यकपत ।' 'जहि निद्रा जगद्धात केशवेश जनार्दन ।' 'एतैस्ससाभिरप्येशविचि न्वन्प्रणवन्तदा ।' त्रिपञ्चाशच्छततमे 'यज्ञात्मक यज्ञपतिञ्जगत्पतिं द्रष्टुन्तमीश वयमुद्यता स्म' 'वेदा तसस्यापितसत्वयुक्ता द्रष्टुन्तमीश वयमुद्यता स्म' 'आहुर्यमात्मानमज पुराविदो द्रष्टुन्तमीश वय मुद्यता स्म' 'अन्तर्हितो माधव एव साक्षाद्द्रष्टुन्नग याति नगेन्द्रमीश ।' पञ्चपञ्चा शद्द्विशततमे 'त याचक लोकगुरुन्दिवीश साङ्गाश्च वेदा मखदेवताश्च ।' प्रथमस्कन्धे द्वादशेऽध्याये 'उत्तराया हतो गर्भईशेनाजीवित पुन ॥' तृतीयस्कन्धे त्रयोदशेऽध्याये 'यस्याह हृदयादास स ईशश्श करोतु मे ॥' तत्रैव 'विरिंचिमुख्या उपतस्थुरीशम् ॥' षष्ठस्कन्धे द्वितीयेऽध्याये 'नाधर्मज तद्धृदय तदपीशाङ्घ्रिसेवया ॥' सप्तमस्कन्धे दशमेऽध्याये 'सर्वेषु भूतेष्व धियज्ञमीश' अष्टमस्कन्धे प्रथमेऽध्याये 'स विश्वकाय पुरहूत

ईशः ' 'ईहते भगवानीशः ' चतुर्थे ' सोनुकंपित ईशेन परिक्रम्य प्रणम्य तम् । ' चतुर्विंशे - ' भूयात् स ईशःपरमो गुरुर्गुरोः ॥ ' नवमस्कन्धे षष्ठे ' एकश्चरन्नहसिचित्तमनन्त ईशे ' चतुर्विंशे - ' तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ' हरिवंशे ' कृत्वात्मानं महाबाहुश्चतुर्धा प्रभुरीश्वरः । ' 'एवन्तु स ममादिश्य गतोन्तर्धानमीश्वरः । ' 'समुत्तेरतुरीश्वरौ' । 'स्थापितो गोगिरीश्वरः ।' 'ईश्वरंजगदीश्वरम् ।' 'योगिनां योगगम्यन्तमीश्वरं जगदीश्वरम् । ' 'दृष्टवान्योहमीश्वरम् ।' विंशतिशततमे ' ददृशे कृष्णमीश्वरं । ' षड्विंशतितमे- ' ईश्वरं प्रणताः स्थिताः । ' ' एकोनत्रिंशच्छततमे- ' जघान हरिमीश्वरम् । ' त्रयस्त्रिंशच्छततमे- ' यथा जज्ञे सहेश्वरः । ' एकोनपञ्चाशच्छततमे- ' तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरम् ' ' तन्नविन्दे यथाकामं दुर्ज्ञेयेश्वरचिन्तना । ' ' त्रिसप्ततिशततमे- ' स्तुत्वा स्तोतुं हरिं विष्णु मीश्वरं कमलेक्षणम्' पञ्चसप्ततिशततमे- ' अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः । ' ' ततस्स्वभवनं विष्णुः प्रविश्य हरिरीश्वरः । ' षण्णवतिशततमे—' करेणाकृष्य चाकर्णं धनुःप्रवरमीश्वरः । ' एकद्विशततमे -' कृत्वा केशव ईश्वरः । ' एकादशद्विशततमे- 'शरेण हरिरीश्वरः।' 'मनसा विष्णुमीश्वरम्।' 'दैत्यस्य विभुरीश्वरः । ' ' मृगेन्द्रो हरिरीश्वरः । ' एकोनपञ्चाशच्छततमे- 'प्रणम्य हरिमीश्वरम् ' । 'जगामहरिरीश्वरः । ' द्विसप्ततिशततमे - ' निश्शेषन्दानवबलञ्चकार हरिरीश्वरः । ' षट्चत्वारिंशच्छततमे ' वसन्भृग्विभिरीश्वरः । ' पञ्चाशच्छततमे - 'समाधौ यततेश्वरम् ' ' वन्दे त्वामहमीश्वर । ' 'ईशस्त्वं सर्वभूतानामीश्वरोसि सदा हरे।' सभापर्वणि 'ईश्वरस्योत्तमस्यैनां' ' जगाम हरिरीश्वरः।' ' दृष्ट्वापतितमीश्वरः। ' ' ईश्वरस्सर्वहृच्छयः । ' 'ईश्वरो मणिपर्वतः । ' 'पूजितोस्मामिरीश्वरः । ' प्रथमस्कन्धे ऽष्टमे ऽध्याये- 'नमस्ये पुरुषन्त्वाद्यमीश्वरं प्रकृतेः परम् । ' दशमे - 'निवेशयित्वा निजराज्यईश्वरो युधिष्ठिरं प्रीतमना बभूव॥' त्रयोदशे- 'भवेद्यावदिदेहेश्वरः।'

'पुरुषो विष्णुरित्युक्तश्शिवो नारायण स्स्मृत ।' सूर्यसिद्धान्ते 'निरामयन्निराभास निर्द्वन्द्व केशव शिवम् ।' सुपर्णवैकुण्ठसवादे 'भूतभव्य भवेशाय शिवाय शिवमूर्तये । शिवयोनये शिवाधाय शिवपूज्यत माय च ।' इतिहाससमुच्चये — 'तमाहु पुरुष केचित् केचिदीश्वरमव्ययम् । केचिच्च परमात्मान केचिच्छिवमनामयम् ॥' हरिवशे शततमेऽध्याये 'तुष्टुवुर्देवमीशान मन्त्रैर्भागवतैस्तथा ।' एकोनपञ्चाशच्छततमे 'इत्यादिभिस्तथा देव वाग्भिरीशानमव्ययम् ॥' द्विपञ्चाशच्छततमे 'तन्देव द्रष्टुमीशान यतामस्तामत हरिम् ।' एकषष्टिशततमे 'तानि त्वामा हुरीशान भूतानीति जगत्पते ।' अन्यत्र 'स्तुत्वाच देवमीशान वरद भक्तवत्सलम् ।' भारतसारसमुच्चये 'आद्य पुरुषमीशान सर्वलोकमहेश्वरम् । न चिन्तयति यो विष्णु नारायणमनन्यधी ॥' यज्ञाम्हराध्याये - 'माधुरादित्यवर्णन्त पुरुषन्तमस परम् । बृहन्त सर्वग देवमीशान वरद विभुम् ॥' महाभारते आदिपर्वणि 'आद्य पुरुषमीशान पुरहूत पुरुष्टुतम् ।' हरिवशे 'सहि युद्धगत श्रीमानीशो न स्म व्यकपत ।' 'जहि निद्रा जगद्धात केशवेश जनार्दन ।' 'एतैस्सप्तभिरीशेशविचिन्त्यन्मणवन्तदा ।' त्रिपञ्चाशच्छततमे 'यज्ञात्मक यज्ञपतिञ्जगत्पतिं द्रष्टुन्तमीश वयमुद्यता स्म ' 'वेदान्तसस्थापितसत्वयुक्ता द्रष्टुन्तमीश वयमुद्यता स्म ' 'आहुर्यमात्मानमज पुराविदो द्रष्टुन्तमीश वय मुद्यता स्म ' 'अन्तर्हितो माधव एव साक्षाद्द्रष्टुन्नग याति नगेन्द्रमीश ।' पञ्चपञ्चाशद्द्विशततमे 'त वाचक लोकगुरुन्दिवीश साङ्गाश्च वेदा मखदेवताश्च ।' प्रथमस्कन्धे द्वादशेऽध्याये 'उत्तराया हतो गर्भईशेनाजीवित पुन ॥' तृतीयस्कन्धे त्रयोदशेऽध्याये 'यस्याह हृदयादास स ईशश्श करोतु मे ॥' तत्रैव 'विरिंचिमुख्या उपतस्थुरीशम् ॥' षष्ठस्कन्धे द्वितीयेऽध्याये 'नाधर्मज तद्धृदय तदपीशाङ्घ्रिसेवया ॥' सप्तमस्कन्धे दशमेऽध्याये 'सर्वेषु भूतेष्व धियज्ञमीशम् ' अष्टमस्कन्धे प्रथमेऽध्याये 'स विश्वकाय पुरुहूत

ईशः ' 'ईहते भगवानीशः ' चतुर्थे ' सोनुकंपित ईशेन परिक्रम्य प्रणम्य तम् । ' चतुर्विंशे - ' भूयात् स ईशःपरमो गुरुर्गुरोः ।। ' नवमस्कन्धे षष्ठे ' एकश्चरन्नहसिचित्तमनन्त ईशे ' चतुर्विंशे - ' तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ' हरिवंशे ' कृत्वात्मानं महाबाहुश्चतुर्धा प्रभुरीश्वरः । ' 'एवन्तु स समादिश्य गतोन्तर्धानमीश्वरः । ' 'समुत्तेरतुरीश्वरौ' । 'स्थापितो गोभिरीश्वरः ।' 'ईश्वरंजगदीश्वरम् ।' 'योगिनां योगगम्यन्तमीश्वरं जगदीश्वरम् । ' 'दृष्टवान्योहमीश्वरम् ।' विंशतिशततमे ' ददृशे कृष्णमीश्वरं । ' षड्विंशतितमे- ' ईश्वरं प्रणताः स्थिताः । ' ' एकोनत्रिंशच्छततमे- ' जघान हरिमीश्वरम् । ' त्रयस्त्रिंशच्छततमे- ' यथा जज्ञे सहेश्वरः । ' एकोनपञ्चाशच्छततमे- ' तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरम् ' ' तन्नविन्दे यथाकामं दुर्ज्ञेयेश्वरचिन्तना । ' ' त्रिसप्ततिशततमे- ' स्तुत्वा स्तोतुं हरिं विष्णु मीश्वरं कमलेक्षणम्' पञ्चसप्ततिशततमे- ' अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः । ' ' ततस्त्वभवनं विष्णुः प्रविश्य हरिरीश्वरः । ' षण्णवतिशततमे--' करेणाक्रम्य चाकर्षे धनुःप्रवरमीश्वरः । ' एकद्विशततमे - ' कृत्वा केशव ईश्वरः । ' एकादशद्विशततमे- 'शरेण हरिरीश्वरः ।' 'मनसा विष्णुमीश्वरम् ।' 'दैत्यस्य विभुरीश्वरः । ' ' मृगेन्द्रो हरिरीश्वरः । ' एकोनपञ्चाशच्छततमे- 'प्रणम्य हरिमीश्वरम् ' । 'जगामहरिरीश्वरः । ' द्विसप्ततिशततमे - ' निश्शेषन्दानवबलञ्चकार हरिरीश्वरः । ' षट्चत्वारिंशच्छततमे ' वसन्वृष्णिभिरीश्वरः । ' पञ्चाशच्छततमे - 'समाधौ यततेश्वरम् ' ' वन्दे त्वामहमीश्वर । ' 'ईशस्त्वं सर्वभूतानामीश्वरोसि सदा हरे ।' सभापर्वणि 'ईश्वरस्योत्तमस्यैनां' ' जगाम हरिरीश्वरः ।' ' दृष्ट्वापातितमीश्वरः । ' ' ईश्वरस्सर्वहृच्छयः । ' 'ईश्वरो मणिपर्वतः । ' 'पूजितोस्माभिरीश्वरः । ' प्रथमस्कन्धे ऽष्टमे ऽध्याये- 'नमस्ये पुरुषन्त्वाद्यमीश्वरं प्रकृतेः परम् । ' दशमे - 'निवेशयित्वा निजराज्यईश्वरो युधिष्ठिरं प्रीतमना बभूव॥' त्रयोदशे- 'भवेद्यावदिहेश्वरः ।'

द्वितीये पष्ठे - 'तमेव पूरुषं यज्ञं तेनैवायजमीश्वरं ॥' सप्तमे- 'ईश्वरस्यानुमोदितुः ।' तृतीयस्कन्धे चतुर्थे - 'यदाह योगेश्वर ईश्वरस्ते ।' पञ्चमे 'यानीश्वरः कीर्तय तानि मह्यम् ॥' 'यस्त्वया हरिरीश्वरः ॥' पष्ठे - 'निशाम्य गतिमीश्वरः ।' विंशे 'अन्ववार्त्तीत्तमीश्वरः ॥' '(?) ऐश्वरं समगात्पदं' पञ्चमस्कन्धे चतुर्दशेध्याये— 'ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया' षष्ठस्कन्धे चतुर्थे- 'आत्मारत्त हरिरीश्वर'।' 'सईश्वरो मे कुरुतान्मनोरथम् ॥' पञ्चदशे - 'परमात्मानमीश्वरम् । दृष्ट्वा नारायणन्देवम्' सप्तमस्कन्धे पष्ठे- 'भगवानीश्वरोऽव्ययः ।' सप्तमे- 'यदीश्वरे भगवति' 'भगवानास्त ईश्वरः ।' 'क्रियते भक्तिरीश्वरे । वासुदेवेभगवति' 'अर्नीहंहरिमीश्वरम् ॥' 'सर्वभूतात्मनीश्वरे ॥' अष्टमे- 'स ईश्वरः कालउरुक्रमोञ्जसाहि' नवमे — 'तस्मादहंविगतविक्लवईश्वरस्य' 'त्वामीश्वरोमदपरोऽवतुकंहरामि' अष्टमस्कन्धे चतुर्थे- 'गृहीतमौनव्रतईश्वरंहरिम् ।' पष्ठे 'भगवान्हरिरीश्वरः ।' 'स्वच्छन्दगतिरीश्वरः ॥' सप्तमे- 'विलोक्यविघ्नेशविधिंसईश्वरः' मोक्षधर्मे सनत्कुमारगीतायां 'परमंविद्धिचेश्वरं' षट्त्रिंशे 'प्रपद्ये प्रभुमीश्वरं' श्रीविष्णुपुराणे प्रथमेंशे अष्टादशे 'ह्यास्ते हरिरीश्वरः ।' द्वाविंशे- 'बिभर्त्यखिलमीश्वरः ।' 'द्विधाहङ्कारमीश्वरः ।' पष्ठेंशे प्रथमे 'कलौजगत्पतिंविष्णुं सर्वस्रष्टारमीश्वरम् ।' चतुर्थे- 'परमात्मा सचेश्वरः ।' वाराहेष्टमे 'तं नारसिंहं हरिमीश्वरं प्रभुम्' चतुर्थे 'सविष्णुः परमेश्वरः' एकपञ्चाशे 'विशोका परमेश्वर' अष्टपञ्चाशे 'संस्थितः परमेश्वरः' सप्तषष्टितमे 'तदेव परमेश्वरम्' एकोनसप्ततितमे 'दृश्यते परमेश्वरः' सप्ततितमे 'विज्ञेयः परमेश्वरः' नारसिंहपुराणे सप्तमे 'परमेश्वरो विमानस्थो विमोषणेन नीयमानः' त्रिंशे 'स याति साक्षात्परमेश्वरं हरिम्' विष्णुधर्मे 'पूजित. परमेश्वरः' विष्णुधर्मोत्तरे द्वितीये 'अर्चितः परमेश्वर' सप्ततमे 'आधारः परमेश्वर.' नवमे 'ददाति परमेश्वरः'

श्रीविष्णुपुराणे प्रथमेंशे द्वितीये ' सर्वात्मा परमेश्वरः ॥ ' ' नागपर्यङ्कशयने शेतेसौ परमेश्वरः॥ ' चतुर्थे- 'मयात्र परमेश्वर । ' 'विश्वसविदः परमेश्वरोसि' नवमे ' मैत्रेय परमेश्वरः॥' द्वादशे(?) ' परमेश्वर मे मनः ' सप्तदशे 'सविष्णुः परमेश्वरः॥ ' एकोनविंशे 'तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम्॥' द्वाविंशे ' तदेवं परमेश्वरः॥' तृतीयेंशे सप्तमे ' सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः ' सप्तदशे ' ददृशु.परमेश्वरम् । ' चतुर्थेंशे प्रथमे ' नचैव सारं परमेश्वरस्य ॥ ' पञ्चमेंशे प्रथमे ' भगवान्परमेश्वरः । ' अष्टादशे ' नतोस्मि परमेश्वर॥ ' विंशे ' सत्वं प्रसीद परमेश्वर पाहि विश्वं ' त्रयोविंशे ' अंशस्त्वं परमेश्वर ॥ ' ' परमेश्वर निर्वृतिः ॥ ' त्रिंशे 'प्रसीद परमेश्वर॥' हरिवंशे सप्तषष्टिद्विशततमे ' पुष्पहास परमेश्वर परमस्व ' भागवते सप्तमस्कन्धे षष्ठेध्याये 'केवलानुभवानन्दस्वरूप.परमेश्वरः ' श्रीवाराहे षष्ठेध्याये 'आदिदेवंमहादेवं'

दशमे ' ते प्रतस्थुर्महादेवं चिन्तयन्तः श्रियोधरम् ' हरिवंशे पञ्चाधिकशततमे ' ते समेत्य महादेवम्' सप्तषष्टिद्विशततमे 'ब्रह्मन् गुरो महादेव' चतुरशीतिद्विशततमे ' जानामि त्वां महादेवम्' ' महादेवं महाभागमनन्तं शिवमच्युतम् । ' पुराणान्तरे ' अनादिरक्षरोनन्तो महादेवो महेश्वरः ' हरिवंशे सप्तषष्टिद्विशततमे ' शम्भुरशम्भुर्भवस्त्वयंभूर्भूतादिः ' अष्टशीति द्विशततमे ' शम्भुर्नारायणोऽव्ययः ' सभापर्वणि ' इति नारायणश्शम्भुः ' वाराहे सप्तमे ' कलौ घनाभ्रमतिमं महेश्वरं गदाधरं प्रणमतियस्सुखं वसेत् ' द्वादशे ' शिवस्वरूपं महेश्वरम् ' ब्रह्मसिद्धान्तेपि गोळाध्याये ' यस्मा त्कारणाद्दीपा वात. पवतएवहीति प्रकृत ऊर्णनाभिर्यथा तन्तुं सृजति संहरत्यपि तथा विश्वंसृजत्यत्ति पाति चायं महेश्वरः' श्रीविष्णुधर्मोत्तरे षष्ठे 'पूजाफलं महेशस्य ' एकादशे ' आदर्श यो महेशाय ' ' महेश वरुणोद्भव ' श्रीविष्णुधर्मोत्तरे अष्टमे ' परमेशप्रसादेन ' त्रयोदशे ' परमेशप्रभावतः ' हरिवंशे सप्तषष्टिद्विशततमे ' हिरण्यगर्भ हिरण्यनाभ ' सभापर्वणि ' स्वयंभूर्यदिदंस्वयम्' ' पुरा नारायणो देव. स्वयंभू. प्रपितामहः ' इति ।

किंच-रुद्राभिधानानां प्रसिद्धे सम्प्रतिपन्ने गुणिनि रुद्रे त्रिमूर्तिमध्यपरिगणित एव रूढत्वात्तस्य च कारणत्वानुपपत्तेः, परस्यापि तत्संमतेश्च श्रुत्यन्तरानुसारात् भगवत्परत्वमेव परतत्वविषयाणां तेषां युक्तम्; न तु ततोऽप्यतिरिक्तविषयत्वम्। भगवत्परत्वे ततोऽप्यतिरिक्तपरत्वे वा स्वारस्यभङ्गाविशेषेण श्रुत्यन्तरानुसरणपरित्यागे हेत्वभावात्। तस्माच्छिवादिशब्दानां यथासम्भवं रूढियोगगुणवृत्तिभिर्भगवत्परत्वमेव युक्तमिति परतत्वविषयाणां सर्वासामप्युपनिषदां भगवत्परत्वं सिद्धम्, अतोऽपीह शिवशब्दो भगवत्परः।

अपि च- शिवेशेश्वरादिशब्दाः परब्रह्मणि स्वरसा इति तावत्सम्प्रतिपन्नम्। अतः परमात्मपरत्वात्तेषां शब्दानां परब्रह्मपरमात्मादिशब्दवन्न तैर्देवता विशेषनिर्धारणसम्भवः। अतो नारायणादिशब्दा एव देवतानिर्धारकाः। तेषां भगवतो ब्रह्मत्वनिर्धारणात्प्राक्परमात्मपरत्वनिर्णयाभावात्। ननु परमात्मन्येवैषांशक्तिः, रुद्रस्य परमात्मभेदे तत्र शक्त्यन्तरकल्पनाप्रसङ्गात्तदभेद एव रुद्रस्य वाच्य इतिचेन्न, प्रसिद्धरुद्रे शक्त्यन्तरस्य कल्पनीयत्वात्। ननु तत्र न शक्तिः, किन्तु तत्र गौण्येव वृत्तिः, लोकप्रयोगमात्रात्तत्र निखण्टुपाठोपीति चेत्तर्हि सिद्धन्नस्समीहितम्; शिवादि शब्दानां प्रसिद्धरुद्रातिरिक्ते शक्तौ शिवादिशब्दैर्भगवद्व्यावर्तनाभावेन जगत्कारणतया श्रुत्यन्तरेपि प्रसिद्धे भगवत्येव तेषां वृत्त्युपपत्तेः। न हि तत्र किञ्चिद्बाधकं पश्यामः; प्रत्युत सकलोपनिषदैककण्ठ्यलाभः। तस्मात्परविषयास्सर्वे शब्दा भगवद्विषया एव। अथ स्यात् शिवादिशब्दानामपि रुद्रस्य परमात्मत्वनिर्णयात् प्राक्परमात्माभिधायकत्वन्नेति, तर्हि प्रसिद्धरुद्र एव तेषां व्युत्पत्तेः तदन्यप्रतीतिर्लक्षणयैवेति श्रुत्यन्तरानुसारेण तैः कथं भगवत्प्रतीत्यभाव इति।

तथा अथर्वशिखायामपि भगवतः कारणत्वं प्रतिपन्नम्। तथाहि— ' किमादौ प्रयुक्तं ध्यानं ध्यायितव्यम् किन्तद्ध्यानं को वा ध्याता कश्च

ध्येय' इति। अत्र 'किन्तद्ध्यानं कोवाध्याते' ति ध्यानध्यात्रभिमानि देवताप्रश्नः। आद्यप्रश्नस्योत्तरमाह 'ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्य' मिति। द्वितीयस्योत्तरमाह 'सर्वकरणानि मनसि संप्रतिष्ठाप्य ध्यानं विष्णु' रिति। ध्यानमात्रस्य तद्देवताकत्वाभिप्रायेण सर्वकरणानि च मनसि सम्प्रतिष्ठाप्येति विशेषणम्। तृतीयस्योत्तरमाह 'मनसि सहकरणैस्सम्प्रतिष्ठाप्य ध्याता रुद्र' इति। अत्रापि विशेषणप्रयोजनं पूर्ववत्। तथा विशेषितयोरेव ध्यानध्यात्रोर्मोक्षोपयोगित्वा त्तादृशयोरेव तद्देवताकत्वमिति भावः। तदेव विशेषणं विदधाति 'प्राणम्मनसि सह करणैर्नादान्ते परमात्मनि सम्प्रतिष्ठाप्यध्यायीते'ति। चतुर्थप्रश्नस्योत्तरमाह 'ईशानं प्रध्यायितव्य' मिति। 'कश्चध्येय' इति प्रश्नसारूप्यात् पूर्वप्रश्नोत्तरवदिदमेव चतुर्थप्रश्नस्योत्तरं, न तु 'ध्यायीतेशान' मिति, प्रश्नवैरूप्यात्, पूर्वप्रश्नोत्तरवैरूप्याच्च। 'ईशान' इति पुलिङ्गनिर्देशे कृते देवतान्तरस्य बुद्धौ विपरिवृत्त्या परमात्मबुद्धिप्रतिबन्धो भवितेति नपुंसकनिर्देशः कृतः। ईशितव्यविशेषानिर्देशात्सर्वेशानं वस्तु ध्यातव्यमित्यर्थः। प्रधानेषु प्राधान्यमुपास्यस्य वक्तुं ब्रह्मादीनां अप्राधान्य माह 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रा' इति। इदं - प्रमाणसिद्धं सर्वमपि, ब्रह्मविष्णुरुद्रेन्द्राः- राजा राष्ट्रमितिवन्निर्वाह्यनिर्वाहकभावनिबन्धनं सामानाधिकरण्यम्। 'ते सर्वे सम्प्रसूयन्त' इति वाक्यान्तरम्। एवं सति हि तच्छब्दस्य प्रयोजनलाभः। भगवतः प्राधान्यं व्यञ्जयितुं इदम्, उत्तरवाक्यं च। एषु भगवतः प्रसूत्यभावस्य वक्ष्यमाणत्वात् तद्वत्तेषु तदन्यस्यापि कस्य चित्तदाशङ्का माभूदिति सर्वे इत्युक्तम्। एवं सत्येव ह्यस्य प्रयोजनलाभः। 'नच सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रा' इत्युक्तराशिद्वयपरामर्शितया ते सर्वे इत्यस्य प्रयोजनलाभः; चकाराभावेन 'ते सर्वे' इति समुदायपरामर्शस्यापेक्षितत्वादिति वाच्यम्, नपुंसक शेषापत्तेः। इन्द्रादिसहपाठात् तत्तुल्या परायत्ता प्रसूतिर्ब्रह्मादेरिति स्वर-

सतोवगम्यते । भगवत प्रमूर्तिं निषेधति ' न कारण कारणाणना धाता ध्याते ' ति कारणाना त्रयाणा मध्ये कारण ध्याता धाता न प्रसूय त इति विपरिणामेनानुपन्न परपक्षेपि समान । कारण ध्यातेति कार-णावस्थाया ध्यातृत्वेन प्रसिद्ध इत्यवगम्यते । तथा प्रसिद्धश्च भगवानेव, ' नारायणोऽकामयत ' ' सोन्य काम मनसा ध्यायीते ' ति । धातृश-ब्दश्च ' अणोरणीया ' नित्यत्र भगवत्परतया शङ्खलिङ्गितोपबृंहिते प्र-सिद्ध । सहस्रनामसु च ' अनादिनिधनो धाते ' ति । ' कारणाना कारण ' मिति शेषषष्ट्येव वास्तु, अर्थात्तु निर्धारणलाभ । अथवा माभूदर्थान्निर्धारणलाभ , विष्णोरपि सम्प्रसूतिरेव प्रतिपाद्यताम् , साच सम्प्रसूति ' अजायमानो बहुधा विजायते तस्य धीरा परिजानन्ति योनिम् ' ' न सा कर्मनिमित्तजा ' ' जनन स्वेच्छयैव च ' इत्यादि प्रति पन्ना स्वाधीना, न तु ब्रह्मरुद्रादिवत् कर्माधीना पराधीना च । यद्वा नात्र विपरिणाम कार्य, नापि धातृशब्दस्य प्रसिद्धार्थत्याग , ' धाता चतुर्मुखो ध्याता रुद्रश्च कारणाना न कारणमित्यर्थ । विष्णुरेव कार णमिति भाव । ' ध्याता रुद्र ' इति भागरभिमानादत्र ध्यातृदेवता रुद्रो ध्यातेत्यभिधीयते । यद्वा नात्र कस्याप्युत्पत्ति प्रतिपाद्यते, ' स म्प्रसूयन्त ' इति ' षू प्रेरण ' इति धातो कर्मणि लकारे रूपम् , ननु 'षूङ् प्राणिप्रसव' इत्यस्य, ' षूङ् प्राणिगर्भविमोचन ' इत्यस्यवा, तस्य प्राणि विषयतया सर्वाणिचेन्द्रियाणि सह भूतैरित्यत्रानुषङ्गेणाप्यन्वयायोगात् जायन्त इत्यध्याहारप्रसङ्गात् , ईशान प्रध्यायितव्यमिति पूर्ववाक्ये असङ्कोचस्थसर्वेश्वरस्य साक्षादुपपादकतया प्रेरणार्थस्यैव धातोरत्र ग्राह्यत्वाच्च । परमकारणभूतो ध्याता धाता च न केन चित्प्रेर्यत इति 'न कारण' मिति वाक्यस्यार्थ । ' कश्च ध्येय ' इत्यत्र ध्येयविशेषणस्यापि विवक्षितत्वात् ध्यातव्यस्य हृदयाधिकरण विदधाति ' कारणन्तु ध्येय स्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्य ' इति । सर्वैश्वर्यसम्पन्न इत्यत्र

सर्वेश्च तदैश्वर्यं चेति कर्मधारयः; न तु सर्वेश्वरशब्दात् षष्ठीसमासात् ष्यञ्, आदिवृद्धिप्रसङ्गात् । अनेन सर्वप्रकारमीशानं विवक्षितम् । अस्तिच नियमने प्रकारभेदः, यथा अन्तः प्रविश्य नियमनम्, राजादिवत् बहिः स्थित्वा नियमनम्, धारणप्रवृत्त्यादिविषयं च सद्वारकमद्वारकञ्च । इदञ्च सर्वप्रकारमैश्वर्यं न कतिपयविषयमित्युच्यते (सर्वेश्वर इति) एवञ्च सर्वैश्वर्यसम्पन्नसर्वेश्वरशब्दयोरैकार्थ्यभ्रमात् सर्वेश्वरशब्दे तच्छब्दवाच्यत्वलक्षणमाश्रित्य पौनरुक्त्यपरिहारः केन चित्कृतो निरस्तः । वस्तुवृत्तमुक्तम्, तथार्थेपि सिद्धान्ते न दोषः; सर्वेश्वरशब्दस्य देवतान्तरे रूढ्यसिद्धेः । इहैव कल्पनायां भगवत्येवास्तु । अत्रच 'सर्वाणि चेन्द्रियाणी' ति पृथगिन्द्रियग्रहणं इन्द्रियप्रेरणरूपं हृषीकेशशब्दार्थं नारायणत्वलिङ्गमुपस्थापयितुम् । यद्वा- 'कारणन्तुध्येय' इति चतुर्थप्रश्नस्योत्तरम्, उपोद्घातरीत्या तदुपपादनाय 'ईशानं मध्यायितव्य' मिति, सर्वेशितुरेव मोक्षप्रदानसामर्थ्यात्तस्यैवोपास्यत्वं युक्तमिति भावः । 'कारणन्तु ध्येय' इत्यत्र कारणपदं सर्वकारणपरं त्रिमूर्तिकारणपरं वा । भगवत एव त्रिमूर्तिकारणत्वं च सुबालोपनिषदि कार्येषु भगवतः स्थितिप्रतिपादकपर्यायेषु त्रिमूर्तिषु स्थितिश्रवणात्, पैङ्गिरहस्ये — 'यमवरुणविष्णुरुद्रेन्द्रा' इति श्रवणाच्च प्रसिद्धम् । तस्मादत्र सुबालोपनिषदादिप्रसिद्धकारणत्वानुवादेन भगवत एव ध्यातव्यत्वं विधीयते । शम्भुशब्दश्चाभिधानकोशादिषु भगवदभिधानतया सुप्रसिद्धः 'शम्भुर्धातृहरीशे' ष्वित्यादिना । सुबालोपनिषत्तापनीयादिषु भगवति सर्वेश्वरत्वावगमात् तत्समानाधिकृतशम्भुशब्दो भगवत्पर एव । ननु— रुद्र एव स्वारस्यमिति चेत्? सत्यम्, तत्तु त्रिमूर्त्यन्तर्गत एव, तत्परिग्रहश्चानुपपन्नः, सृज्यत्वानपहतपाप्मत्वयोः श्रवणात् । परानभिमतश्च तत्परिग्रहः । ततो भगवत एव परिग्रहो युक्तः । विष्णोरुत्सर्गश्रवणेपि 'अजायमानो बहुधा विजायते, तस्य धीराः परिजानन्ति योनि' मित्यवतार-

तत्वावगमान्न स पराधीनः । किञ्चार्धमात्रासम्बन्धितया सोमसंवर्तकसर्व-वर्णपुरुषश्रवणात्तदर्थस्यैव च तुरीयत्वेन प्राधान्यात्तत्परत्वावश्यम्भावेन शम्भुशब्दो भगवत्परः ।

तथाहि— ' यावसानेस्य चतुर्थ्यर्धमात्रा सा सोम लोक ' इति अर्धमात्रासम्बन्धित्वेन सोमलोक श्रुतः । सोमश्च न प्रसिद्धः-सोमः, अयोग्यत्वात्; किन्तु भगवानेव । अतएव तापनीये तथैवोपक्रमे श्रुतस्य सोमस्य नारसिंहत्वेनाग्रे प्रपञ्चनम् । वाराहे ब्रह्मरुद्रादीनां स्रष्टुस्तुरीयस्य विष्णोस्सोमाख्यत्वमभिधायेय श्रुतिर्विवृता । तथाहि- तत्र सप्तदशाध्याये - ' सर्वे देवास्सपितरो ब्रह्माद्या· काण्ड मध्यगाः । विष्णोस्सकाशादुद्भूता इतीयं वैदीकी श्रुति· ॥ ' इत्यारभ्य 'अग्निस्तथाश्विना'वित्यादिनाग्न्यादीना प्रतिपदादितिथिदेवतानामुत्पत्तिमुक्त्वा, तेपा च वैश्वानरादिरूपाणां शरीरमाश्रितानां ज्यायस्त्वे विवादन्तत्परिचिक्षिपया एकैकशो निर्गमेपि सोमाख्येन स्रष्ट्रा पालितस्य शरीरस्याविशरणन्ततो लज्जितैस्तैस्सोमाख्यस्य परमेश्वरस्य स्थितिं स्रष्टुस्तस्य स्तुत्या प्रसादम्, शरीरान्तर्वैश्वानरादिरूपेण सृष्ट्या मूर्तामूर्तरूपद्वयदानम्, बहिर्मूर्तरूपाणा अग्न्यश्विगौर्यादीनामप्रदान चोपन्यस्य, ' एवं वेदान्तपुरुष· प्रोक्तो नारायणात्मक ' इति ' एवम्प्रभावो देवोसौ वेदवेद्यो जनार्दन ' इति च प्रतिपादितम् । अनन्तरमष्टादशाध्यायप्रभृति पञ्चत्रिंशाध्यायान्तेन ग्रन्थेन ' कथमग्नेस्समुत्पत्तिरश्विनोर्वा महामुने ' इत्यादिना क्षेत्रदेवताना शरीराद्बहिर्मूर्तिसृष्टिः प्रतिपदादितिथय तत्र तद्दैवत्यनतञ्चेत्येतान्युक्तानि । तत्र सोमाख्येन देवेन मनसश्शरीरान्तर्वर्तिदेवताया बहिर्विष्णुरूपेण सृष्टिस्तस्य पालनाधिकारस्तदपेक्षितसार्वज्ञ्यभूपणायुधविशेषद्वादशीतिथिदानन्तद्व्रतं तस्य नाभीपद्माद्ब्रह्मणस्सम्भवश्च त्रिंशेध्यायेभिहित । तत्र बहिर्मूर्तिवरप्रदानस्रष्टृत्वाद्युक्तेः प्रागुक्त सोमाख्यः परमेश्वरोयन्नारायण इत्यवगम्यते । त्रयस्त्रिंशाध्याये

ब्रह्मणो रुद्रसृष्टिरुद्रनामकरणादिकमुक्तम् । विंशाध्याये कश्यपसन्तानोक्तेरादित्यान्तर्भावेनेन्द्रसृष्टिरुक्ता । एवं ब्रह्मविष्णुरुद्रेन्द्रप्रसूतिहेतुत्वं सोमाख्यस्य नारायणस्यात्रोक्तम् । पञ्चत्रिंशेच 'योसौ क्षेत्रज्ञसंज्ञो वै देहेस्मिन्पुरुषः परः । स एव सोमो मन्तव्यो देहिनां जीवसंज्ञितः॥' इति परस्यैव पुरुषस्य सोमशब्दवाच्यत्वमुच्यते । नच जीवसंज्ञित इति वचनाज्जीव एवात्र सोम इत्युच्यत इति भ्रमितव्यम्; तत्र परः इत्यनुपपत्तेः । क्षेत्रज्ञत्वस्य तु 'क्षेत्रज्ञं चापि मां विद्धी' त्यादिषु भगवति प्रसिद्धेः जीवसंज्ञितत्वस्य तदभिमानिसङ्कर्षणादिमूर्तिमत्त्वसम्बन्धेन भगवति सम्भवात् । तथा च मोक्षधर्मे वचः- 'अहं हि जीवसंज्ञोवै मयि जीवस्समाहितः' इति, 'सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वत' इति च । तस्मात् सोमोत्र नारायणः । तथाष्टपञ्चाशेच कान्तिमताध्याये - 'बलदेवाय पादौ तु केशवाय तथार्चयेत् । एवमभ्यर्च्य मेधावी वैष्णवं रूपमुत्तमम् । परस्वरूपं सोमाख्यं विमलन्तद्दिने हि य' दित्यादिना सोमाख्यस्य विष्णोर्व्रतं, 'कान्तिमानस्मि लोकेषु सर्वज्ञः प्रियदर्शनः । त्वत्प्रसादात्सोमरूपिन् नारायण नमोस्तु ते ॥' इति तच्छब्दलिङ्गं मन्त्रञ्चाभिधाय प्रसिद्धस्सोमोप्येतद्व्रताचरणतोषितसोमाख्यजनार्दनदत्ततदीयामृतकलायोगादेव सोमत्वं प्राप्त इत्युक्तम् । सोमाख्यत्वोक्त्या भगवति सोमशब्दस्य रूढ्यवगमात्, सोमलोक इत्यत्र सोमशब्देन योगेन देवतान्तरपरिग्रहशङ्का निरस्ता । तथा प्रणवमात्राविभागकथने पूर्वमात्रात्रयसम्बन्धित्वेन वेदत्रयानन्तरं क्रमाद्ब्रह्मविष्णुरुद्रा उक्ता', अथार्धमात्राया अथर्ववेदानन्तरं संवर्तकोग्निर्ब्रह्मादिदेवतास्थाने श्रूयते । स चार्धमात्राप्रतिपाद्यस्तुरीयः, प्रायपाठात् । सच संवर्तकोग्निर्भगवानेव, 'यः पुराह्यनलो भूत्वा और्वस्संवर्तको विभुः । पाताळस्थोर्णवगतं पपौ तोयमयं हवि' रिति हरिवंशे कृष्णावतारप्रश्नाध्याये वचनात्; तत्रैव पौष्करप्रादुर्भावे 'क्षीरोदे सागरे चाहं समुद्रे वडबामुखः । वह्निः संवर्तको भूत्वा पिबं-

स्तोयमयं हवि' रिति मार्कण्डेयं प्रति भगवद्वचनात्; 'त्वां वडवामुखमग्निमाहु' रिति नारायणीये नारदस्तुतौ वचनात्; 'अहं हयशिरो भूत्वा समुद्रे पश्चिमोत्तरे । पिबामि सुहुतं हव्यं कव्यं च श्रद्धयान्वित' मिति नारदं प्रति भगवद्वचनात्; नारायणीयएव नामनिरुक्त्यवसरे 'अथ नारायणो लोकहितार्थाय वडवामुखो नाम ऋषिः पुरा बभूवे' ति वचनात्; 'अहस्संवर्तको व्याळ' इति सहस्रनामपाठाच्च । तथा- 'यावसानेस्य चतुर्थ्यर्धमात्रा सा विद्युमती सर्ववर्णा पुरुषदैवत्ये' ति सर्ववर्णत्वं श्रुतं तद्देवताभूतपुरुषस्य तद्वर्णत्वादुपचाराद्वाच्यम्, पूर्वमात्रात्रये ब्रह्मविष्णुरुद्रदैवत्यतया श्रुते रक्तशुक्लकृष्णत्वस्य तथात्वदर्शनात् । तच्चानेकवर्णत्वं पुरुषशब्दिते भगवतो नारायणस्य रूपे भारतादौ प्रसिद्धम् । यथा सभापर्वणि- 'अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः । पुरा नारायणो देवः स्वयम्भूः प्रपितामहः ॥ सहस्रशीर्षा पुरुषो ध्रुवो व्यक्तस्सनातनः । सहस्राक्षस्सहस्रास्यस्सहस्रचरणो विभुः ॥ सहस्रबाहुस्सर्वज्ञो देवो नामसहस्रवान् । सहस्रमकुटो देवो विश्वरूपो महाद्युतिः ॥ अनेकरूपो देवादिरव्यक्तादुपरि स्थित' इति । अत्र पुरुषस्य पुरुषसूक्तप्रतिपाद्यस्य नानारूपत्वमुक्तम् । महाद्युतिरिति विद्युमतीत्येतत् प्रत्यभिज्ञापितम् । मोक्षधर्मे नारायणीये नारदस्तुत्यनन्तरं 'एवं स्तुतस्स भगवान् गुह्यैस्तथ्यैश्च नामभिः । भगवान् विश्वदृक्सिंहस्सर्वमूर्तिमयः प्रभुः॥ तं मुनिं दर्शयामास नारदं विश्वरूपधृत् । किञ्चिच्चन्द्रविशुद्धात्मा किञ्चिचन्द्राविशेषवान्॥ कृशानुवर्णः किञ्चिच्च किञ्चिद्धिष्ण्याकृतिर्भवः । शुकपत्रवर्णः किंचिच्च किञ्चित्स्फटिकसन्निभः॥ किञ्चिन्मयूरग्रीवाभो मुक्ताहारनिभः कचित् । एतान् वर्णान् बहुविधान् रूपे बिभ्रत्सनातनः ॥ सहस्रनयनःश्रीमांच्छतशीर्षस्सहस्रपात् । सहस्रोदरबाहुश्च अव्यक्त इव च कचित् । ' इत्याद्युक्त्वा, 'मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम । अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ॥ मां तु जानीहि ब्रह्मर्षे पुरुषं सर्वगं विभु '

मिति पुरुषत्वं चोक्तम् । 'नास्ति तस्मात्परतरं पुरुषाद्धै सनातना' दिति परं च निषिद्धम् ; यथा अथर्वशिखायां 'न कारणं कारणाना' मित्यादिना। किंच - 'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते मामेकमीशानं पुरुषं लोकजीवन' मित्यथर्वशिखार्थः स्फुटमनुगतः । तत्र 'ध्यायीतेशान' मिति शिखानिर्देशानुरोधेन 'ईशान' मिति, 'पुरुषदैवत्ये' स्येतदनुरोधेन 'पुरुष' मिति, 'ब्रह्मविष्णुरुद्रेन्द्रा' इति वाक्यार्थभूतेतरनश्वरत्वाभिप्रायेण 'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गम' मित्युक्तम् । ततो 'हिरण्यगर्भो लोकादिश्चतुर्वक्त्रोनिरुक्तकः। ब्रह्मासनगतो देवो मम यद्धर्थचिन्तकः' इत्यादिना 'ब्रह्मविष्णुरुद्रेन्द्रा' इति श्रुतिविवक्षितानां ब्रह्मादीनां सर्वेषां देवानामृषीणां पितॄणां च तेन पुरुषेणेशितव्यत्वं मपञ्चितम् । 'प्रादुर्भावगतश्चाहं सर्वकार्येषु नित्यदा। अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतोयथे' त्यादिना ब्रह्मादिभिस्सह विष्णोः प्रसूतिरवताररूपेत्यप्याविष्कृतम् । 'विधासहायवन्तम्मामादित्यस्थं सनातनम् । कपिलंप्राहुराचार्या' इति च उमाशब्दवाच्यता वाराहे, 'पूर्वन्नारायणस्त्वेको नासीत्किञ्चिद्धरेः पर' मित्यादिना 'एको ह वै नारायण आसी' दित्याद्युपनिषदर्थमनुक्रम्य 'तस्य द्वितीयम्पितश्चिन्ता बुध्यात्मिका प्रभा' विति प्रकृतायां लक्ष्म्यात्मिकायां बुद्धौ 'उमेति संज्ञया सा तु तदाऽऽदित्ये व्यवस्थिता । ओमित्येकाक्षरीभूत्वा समृजे सा भुवं तदे' त्युपपादितभगवद्बुद्धिशक्त्यभिमानिलक्ष्मीसहितस्याभिधानात् 'ततो भूयो जगत्सर्वं करीष्यामीति विधये' ति वचनेन 'ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः । कृत्वा मत्स्थानि भूतानि जङ्गमानि स्थिराणिचे' ति तस्मिन् प्रलीनत्वेन कथितानां भूतादीनां सम्प्रसूतेः कथनात 'सर्वाणि चेन्द्रियाणि सह भूतै' रिति वाक्यार्थः सोमशब्दस्य योगार्थश्चोपबृंहितः । एवमथर्वशिखास्थानेकार्थप्रत्यभिज्ञापनेन पुरुषसंज्ञस्य नानावर्णत्वकीर्तनात् अथर्वशिखाप्रतिपाद्यो नानावर्णः पुरुषः पुरुषोत्तम इति

पञ्चवक्त्रसदाशिवमूर्तौ प्रतिमुखं वर्णभेदमात्रान्न नानावर्णत्वलिङ्गस्यान्यथासिद्धिशङ्कावकाशः। पुरुषदैवत्येत्यत्र पुरुषशब्दो भगवत्परः। पुरुषशब्दस्य भगवदसाधारण्यं वेदान्तविजये समर्थितम्।

इदं च भगवतो मुमुक्षूपास्यत्वं कैवल्योपनिषदि स्फुटमेव प्रतिपाद्यते। तथाहि - 'परात्परं पुरुषमुपैति विद्वा' निति पृष्टत्वाद्भगवद्वेदनमेव पृष्टमित्यवगतम्, पुरुषशब्दस्वारस्यात्। उत्तरे 'अणोरणीया' नित्यादिवाक्यैर्भगवान्प्रत्यभिज्ञापित.। तथानन्तामृतब्रह्मयोनिपदैरपि। ब्रह्मणश्चतुर्मुखस्य योनिः ब्रह्मयोनिः। अद्भुतमित्यनन्तरं विचिन्त्येत्यनुषङ्गः। 'तथे' ति तथावगमात्, अन्यथा तथेतिवैयर्थ्यात्। 'उमासहाय' मित्यंगभूतध्यानविधिः। अत एव नारायणोपनिषदि 'रुद्रन्तु सारथिं कृत्वा मन.प्रग्रहवान्पुमान्। स याति परमं पारं विष्ण्वाख्यं परमं पद, मिति श्रूयते। उमासहायं ध्यात्वा अद्भुतं पुरुषं विचिन्त्य गच्छतीति योजना। प्रश्नानुसारात्पुरुषो विशेष्यतया लभ्यते। 'सब्रह्मे' ति च भगवान् प्रत्यभिज्ञापितः, 'नान्यः पन्था.' 'अणोरणीयान्' इत्याभ्यां च। अङ्गभूतरुद्रध्यानस्याङ्गमन्त्रं विदधाति 'यश्शतरुद्रीय' मिति। मन्त्रांगकरुद्रध्यानफलमङ्गमाह 'अनेन ज्ञानमाप्नोती' ति। एवं पुरुषानन्तब्रह्मयोनिपदोपक्रमतथाशब्दप्रत्यभिज्ञासनातनशब्दैरियमुपनिषत् भगवत्परैव। जगत्कारणत्वोपयोगिनिखिलजगदन्तर्यामित्वमप्यन्तर्यामिब्राह्मणाभ्यां भगवति प्रतिपन्नं 'स तआत्मान्तर्याम्यमृत' 'एष त आत्मान्तर्याम्यमृतः' इति। अतोऽमृतशब्दश्च भगवदसाधारणः, 'नित्यनिरञ्जनं निर्विकल्पं परं ज्योतिरमृताख्यं परं ब्रह्मस्वरूप ध्यात्वा तस्मिन्नेव लयमवाप्ने' ति नारसिंह्मपुराणे पूर्वोपक्रान्ते नारायणे अमृताख्यत्वोक्तेः। ब्रह्माण्डे चासितजनकसंवादे 'कृष्णाख्यममृतं साक्षात् विज्ञाय परिमुच्यत' इति साक्षाच्छब्दस्य मुख्यार्थव्यवधानाभावपरत्वादमृतशब्दमुख्यार्थतासिद्धि.। मैत्रायणीयश्रुतौ 'आनन्दतृप्तमचलममृतमच्युतं

विष्णुसञ्ज्ञं सर्वाधार धामे' ति विष्णावमृतपदप्रयोगात्, सुबालोपनिषदि 'अजरममृतमभयमशोकमनन्त' मिति चतुर्दशकृत्व प्रयोगात्, तत्रैव 'अन्तश्शरीरं निहितं गुहायाममृत' मिति प्रयोगात्, 'नारायणसौम्यमृत परेश' मिति वाराहे ब्रह्मपारस्तोत्रे प्रयोगाच्च। नारायणीये च नारदस्तुत्यध्याये — 'अमृत व्योमन् सनातने' त्यादिना विष्णोः स्तुत्यनन्तरं 'एवं स्तुतस्सभगवान् गुह्यैस्तथ्यैश्च नामभि' रिति नामत्वानुवादादमृतशब्दस्य नारायणनामत्वं सिद्धम्। सुबालोपनिषदादिषु च भगवतोऽन्तर्यामित्वं सुप्रसिद्धम्।

इदं च भगवतस्सर्वान्तरत्वमथर्वशिर प्रभृतिषु जगत्सामानाधिकरण्येन स्थापितम्। तथाहि— 'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्र मपृच्छन् को भवानिती' ति तपस्विवेषधरं युक्तावस्थं रुद्रं दृष्ट्वा मुनिवेषदर्शनेन निर्धारणाशक्ता वा रुद्रं ज्ञात्वापि तस्य स्वातन्त्र्यपारतन्त्र्यजिज्ञासया वा पप्रच्छुरिति प्रश्नमुपक्षिप्य, 'अहमेक प्रथममास वर्तामि च भविष्यामि च नान्य कश्चिन्मत्तो व्यतिरिक्त इती' ति अहमिति भगवन्तं गृहीत्वा तत्र सार्वात्म्यमुपदिश्य 'इति' शब्देन रुद्रवाक्यस्य परिसमाप्तिं ख्यापयित्वा, 'पुरुष एवेद सर्व' मिति पुरुषस्य खलु सार्वात्म्यं कथमस्येत्यपेक्षायां वामदेवन्यायं स्फोरयितुं 'सोन्तरादन्तर प्राविश' दिति [स आनन्दमय प्राणमयादन्तरात्मनो मनोमयादन्तरं विज्ञानमयं प्राविशत्। एकमेव अन्यत्रापि सर्वत्र 'स प्राविश' दिति।] भगवतस्सर्वान्तरात्मत्वमुक्तवक्ष्यमाणसार्वात्म्यव्यवहारहेतुतयोक्त्वा, पुनरपि 'सोहन्नित्यानित्य' इत्यारभ्य 'स्वेन तेजसे' त्यन्तेन रुद्रवाक्यमुपन्यस्य 'ते देवा रुद्रमपश्य न्निति यथापूर्वं स्वातन्त्र्येण दर्शनाभावमुक्त्वा 'ते देवा रुद्र ध्यायन्ती' ति यथोपदेशं भगवदात्मकतया ध्यानमुक्त्वा 'ते देवा रुद्र स्तुवन्ति यो ह वै रुद्रस्स भगवान् यश्च ब्रह्मा च तस्मै वै

नमो नम' इति यो रुद्रस्सभगवानेव यो ब्रह्मा सोपि भगवानेव अत उभयात्मकाय भगवते नमस्कार उक्तः। प्रथमपक्षे शरीरविशिष्टगतरुद्रत्वज्ञाने किं प्रयोजनमिति बुद्ध्या देवानुजिघृक्षया भगवन्तमुपदिदेश । अत्र किमर्था जिज्ञासा ज्ञातव्यमेव जानन्त्विति भावः । प्रश्नोत्तरयोर्वैयधिकरण्यपरिहारार्थं तथोपासनार्थं च सामानाधिकरण्येन उत्तरं कृतम् । तपस्वित्वं च ' सोपि त्र्यम्बक इमामृचमुद्गायन्नुत्ग्रथितजटाकलापः प्रत्यग्ज्योतिष्यात्मन्येवारमतारमते ' ति तापनीयवाक्यसिद्धम् । रुद्रपदस्य परमात्मपरत्वेपि प्रतिपर्यायं रुद्रविशेषणोपादानाद्रुद्रं स्तुवन्तीत्युक्तम् । निर्धारणाशक्ताः पप्रच्छुरिति पक्षे परिचयेन रुद्रं ज्ञात्वा रुद्रपदं प्रयुक्तवन्तः। एवमितिकरणं स्वस्थान एव योजितम्। कृत्स्नरुद्रवाक्यसमाप्ताविति करणं योज्यमित्यप्याहुः । तदानीं 'सोन्तरा' दिति वाक्यमपि रुद्रस्यैव । भगवत्सार्वात्म्यमेव मया व्यपदिश्यत इति भावः। अस्यां योजनायां ' सोहन्नित्यानित्य ' इत्यत्र स इति निर्देशस्स्वरसो भवति । 'प्राविश' दिति स्वेनैवोक्तं स इति परामृश्य स परमात्मैव अहञ्च नित्यश्चानित्यश्चेत्येवं स इतिनिर्देशस्सफलोपि भवति । पक्षान्तरे तु पूर्वमहमेवेति वाक्यनिर्दिष्टस्य स्वस्य स इति परामर्शः स्यात् , तदा न किञ्चित् प्रयोजनम् । यदि स इति भगवन्तमेव परामृश्य स एव अहंच नित्यश्चेत्येवमर्थः पक्षान्तर एवोच्येत; तदा साफल्यमस्त्येव, अप्रकृतस्यापि प्रसिद्धिमूलः परामर्श', इत्यास्थेयम् । सः अन्तरादन्तरं परमात्मानं ज्ञातवानित्यर्थः । इत्यपि वदन्ति ।

परेतु- ' इति सोन्तरादन्तरं प्राविश ' दित्येतदुत्पाट्य कृत्स्नरुद्रवचनसमाप्त्यनन्तरं प्रक्षिप्य रुद्रो देवदृश्यं स्थूलरूपं विहाय सूक्ष्मरूपं प्राविशदित्यप्यर्थं यथेष्टमुत्प्रेक्षयन्ति । अत्रोत्पाटनप्रक्षेपदोषौ स्फुटावेव । अन्तरादन्तरमिति कोशप्रत्यभिज्ञा स्फुटा । प्राविशदिति नामरूपव्याकरण

प्रसिद्ध्यानुप्रवेशमत्यगिज्ञापि स्फुटेव । दिशश्चान्तरमिति चानन्वितम् । अत उत्प्रेक्षामात्रमकिञ्चित्करमेव । ' यो वै रुद्रस्स भगवा ' नित्यन उक्तार्थ एव स्वरस । भगवच्छब्दस्यापि रुद्रपरत्वे यो रुद्र यश्चान्यस्ताभ्या नम इति वाच्यम्; तस्मा इत्यनन्वितमेव, यो रुद्रो ब्रह्माभूदित्यर्थाङ्गीकारे द्वितीययत्तदासामञ्जस्यम् , यो रुद्रोभूद्यो ब्रह्माभूदित्यर्थाङ्गीकारे धर्म्यन्तरं स्वरसतो लभ्यते, पक्षद्वयेपि स भगवानिति तच्छब्दस्य स्वारसिकयच्छब्दप्रतिनिर्देशकत्वभङ्ग', यो वै रुद्रस्स भगवान् तस्मै नमो य एव च ब्रह्मा तस्मै नम इत्यर्थः । ब्रह्मशब्दो रुद्रपर्यन्त इत्यङ्गीकारेप्ययन्दोपस्समान., तस्मै नम इत्यावृत्तिरधिका । सिद्धान्ते यश्च ब्रह्मा सोपि भगवानिति तद्भगवच्छब्दावृत्तिस्तु न दोष', चकारेण द्योतनात् । एवञ्च यो वै यश्चेति वाक्यद्वयेन उभयतादात्म्यमुक्त्वा ' तस्मै नम ' इति तृतीयवाक्येन तादृशस्य भगवत एव नमस्कार क्रियत इति पूर्वोक्त एवार्थस्स्वरस' । एवमुक्तार्थस्येह विवक्षितत्वादेव तद्विवक्षाभावे भङ्ग्यन्तरं दृश्यते । तथा तापनीये ' योह वै नृसिंहो देवो भगवान् यश्च ब्रह्मा भूर्भुवस्सुवस्तस्मै वै नम ' इति । अत्र पूर्वोक्तार्थस्य तात्पर्यगोचरत्वाभावेन यश्च ब्रह्मा सोपि भगवानेवेत्येव वाक्यभेदस्याविवक्षिततया भगवानित्यत प्राक् तच्छब्दाप्रयोग. । अत्र च यो नृसिंहो देवो भगवान् तस्मै नम इदि स्वरूपेण नमस्कृत्य, यश्च ब्रह्मा तस्मै नम इति अन्तर्यामी नमस्यते । तस्मै नम इत्युत्तरवाक्य एवान्वितम् , अव्यव - धानात्; भूरादिपर्यायेषु तत्पदलिङ्गवचनयोर्भूरादिलिङ्गवचनानुरोधित्वाच्च पूर्ववाक्ये तत्सजातीयपदाध्याहार । अतोस्मिन्प्रकरणे प्रतिपर्यायमुत्तरवाक्य तत्तदन्तर्यामिनमस्कारपरम् । अत एव ' या सरस्वती तस्यै नम ' ' या श्री' तस्यै ' ' या गौरीतस्यै ' ' या प्रकृतिस्तस्यै ' ' या विद्या तस्यै ' ' याश्चतस्रोऽर्धमात्रास्ताभ्य ' ' ये च देवास्तेभ्य ' ' ये चाष्टौ ग्रहास्तेभ्य.' ' यानि पञ्च महाभूतानि तेभ्य ' इत्येवं विशेषणानुसारिलिङ्ग-

वचननिर्देशः, भगवानित्यन्वयस्याविवक्षिततया तत्तदन्तर्यामिनमस्कारस्यैव विवक्षितत्वात्। अथर्वशिरसि तु सोपि भगवानेव तादृशे भगवते नम इत्यन्वयस्य विवक्षितत्वादेव 'या च भूस्तस्मै या च पृथिवी तस्मै याश्चापस्तस्मै यानि च नक्षत्राणि ये चाष्टौ ग्रहा स्तस्मै नम' इति तत्तद्विशेषणातिलङ्घिभगवच्छब्दानुरोधिलिङ्गवचननिर्देशः। नन्वस्त्वेवं योजना, अथापि 'यो रुद्रस्स भगवा' नित्यत्र भगवच्छब्दे यौगिकत्वमेवेप्यस इति चेन्न;- बाधकं विना स्वारसिकरूढिपरित्यागायोगात्। किंच- योरुद्रस्स सार्वज्ञ्यादिगुणकः, यश्च ब्रह्मा सोपि सार्वज्ञ्यादिगुणक इत्युक्तौ अन्यत्रापि तथात्वे अयोग्यार्थता रुद्रस्तुतिविरोधश्च। तस्माद्रूढ्या भगवत्परत्वमेव युक्तम्। (तदेतद्रुद्रचरित मिति) हृदये सप्रणवं सार्वात्म्यविशिष्टभगवदनुसन्धानं रुद्रेणानुष्ठितमित्यर्थः। (तदेतदुपासितव्य मिति) रुद्रेणोपासितं सार्वात्म्यविशिष्टं वस्तूपासितव्यमित्यर्थः। प्रतिपर्यायं रुद्रविशेषणोपादानात् रुद्रान्तर्यामिणस्सार्वात्म्योपासनमिह विधीयते। एवं रुद्रान्तर्यामित्वोपासने अङ्गविशेषो विधीयते (व्रतमेतत् पाशुपतमिति) एतत्- वक्ष्यमाणमित्यर्थः। पाशुपतं पशुपतिनानुष्ठितम्। इदमेव व्रतं कालाग्निरुद्रोपनिषदि प्रतिपाद्यते। अतस्सापि भगवदुपासनाङ्गविधिपरतया भगवत्परैव। पञ्चमखण्डे- 'एक एव रुद्र' इति भगवत्परतया श्वेताश्वतरे व्याख्यातम्। ईशानादिशब्दाः 'यस्सर्वान् लोका' नित्यादिना योगार्थाभिधानात्तन्मुखेन भगवदभिधायकास्सन्तः तदभिधायकं प्रणवं बोधयन्ति। षष्ठे 'एषो हि देव' इति परमप्रकृतपुरुषपरम्; न तु 'तदेतद्रुद्रचरित' मिति प्रासङ्गिकोपसर्जनरुद्रपरम्, "विश्वतश्चक्षु' रित्यादिना पुरुषसूक्तार्थप्रत्यभिज्ञानात्। अम्भस्येवाक्याचायमेवार्थः स्थापितः। 'ईशान पुरुष' मितीशानशब्द 'अधितिष्ठती' त्युक्तयोगार्थपरस्सन् पुरुषविशेषणम्। एवं च भगवत एव जगत्कारणत्वात्कारणत्वस्यैव च ब्रह्मलक्षणतयाभिधानात् 'अनुष्टुभो वा इमानि भूतानि-

जायन्ते - अनुष्टुभा जातानि जीवन्ति- अनुष्टुभं प्रयन्त्यभिसंविशन्ती' ति तापनीयवाक्यप्रत्यभिज्ञापक 'यतो' चेत्यादिवाक्यविषयत्वाच्च प्रतिज्ञा-सूत्रस्य भगवत्परतया कृत्स्नमपि शास्त्रं भगवत्परमिति सिद्धम् ।

अपि च प्रथमपादे जगत्कारणत्वेन लक्षितं ब्रह्म अन्यदिति साध्य-निर्देशेन चिदचिद्विलक्षणमिति प्रसाध्य त्रिपाद्यधिकरणानां साध्याकाङ्क्षायां 'ब्रह्मजिज्ञासे' ति प्रतिज्ञासामर्थ्यादेव ब्रह्मविचारत्वात् ब्रह्मेति साध्ये लब्धेऽपि स्वाभिमतदेवतास्फोरणार्थमाकर्षापकर्षाभ्यां पूर्वोत्तराधिकरणेषु तदधिकरणे चान्वयतात्पर्येण त्रिपादीमध्यपादमध्यमाधिकरणे 'ईक्षतिकर्म व्यपदेशात् स' इतिसूत्रे 'स' इति भगवन्तं निर्दिशन् स्वयमेवाचार्यः स्वाभिमतां देवतां प्राचिख्यिपत् । 'तदुपर्यपी' त्याद्यधिकरणत्रयस्य प्रास-ङ्गिकगर्भाधिकरणत्वादस्याधिकरणस्य पादमध्यता ।'परात्परं पुरिशयं पुरुष-मीक्षत' इति ईक्षतिकर्म सः, 'सहस्रशीर्षापुरुषः' 'तद्विष्णोः परमं-पदं सदा पश्यन्ति सूरयः' 'अमृतमभयमशोकमनन्त' मिति पुरुषसूक्त-कठवल्लीसौबालादिप्रसिद्धः परमपुरुष एव, न हिरण्यगर्भः, व्यपदेशात्-विशेषोपदेशात्, परमपुरुषप्रत्यभिज्ञापकशब्दात् । पुरुषश्रुतेरीक्षणामृतत्वा-द्युपदेशाच्चेत्यर्थः । त्रिपादीप्रथमाधिकरणे 'स' इति निर्देशे विवक्षित-देवता न लभ्येतेत्यस्मिन् सूत्रे तथा निर्देशः कृतः । सच सर्वार्थ एव , श्रुतं परित्यज्याश्रुतकल्पनस्यान्याय्यत्वात् । तस्मात् त्रिपाद्यधिकरणेषु सर्वत्र 'स' इत्येव साध्यम् । पुरुषविष्णुनारायणादिशब्दित इत्यर्थः । यद्यस्मिन्न-धिकरणे 'स' इति निर्देशो न सर्वार्थः, न च स्वाभिमतदेवताप्रकट-नार्थः, तदा तद्वैयर्थ्यमनिवार्यम् । यद्यपि द्वितीयपादे 'अत एव च-स ब्रह्मे' ति ब्रह्मपदं श्रूयते , चतुर्थपादे 'प्राज्ञो हि प्रकरणा' दिति प्राज्ञपदं श्रूयते , तथापि तयोस्तत्तदधिकरणप्रतिज्ञार्थता नास्त्येव , आक्षेपपरिहारशेषत्वात् । अत इदमेव साध्यं सर्वान्वयार्हम् । आचार्यैस्तु सन्निहितपक्षपातिशिष्यानुग्रहाय ब्रह्मप्राज्ञशब्दयोस्तत्तत्पदानुयायित्वमनास्थ–

यानुगृहीतम् । अनास्था च तत्तदधिकरणव्याख्यानसमये तदनुक्तेरवगम्यते। भाष्ये तत्र तत्र ब्रह्मेति निर्देशस्साध्यस्पाष्ट्याय । तस्य विष्ण्वादिपर्यायत्वविवक्षया सर्वार्थत्वाभावेपि परमपुरुषतात्पर्याभावे वैयर्थ्यप्रसङ्गादेवास्याधिकरणस्य परमपुरुषतात्पर्ये सत्यन्येषामपि तथैव वाच्यम् । अतस्सिद्धं भगवानेव शास्त्रवेद्य इति । भगवत एवान्तरादित्यविद्यादिवेद्यत्वादत्र चाधिकरणेषु ब्रह्मणस्तत्प्रतिपादनात्तस्यैव परब्रह्मत्वमाविष्क्रियते । अन्तरादित्यविद्यादिवेद्यत्वञ्च भगवतस्तत्तदधिकरणेषु स्पष्टीभविष्यति ।

' शब्दादेव प्रमित ' इत्यत्र शब्दशब्दो न वाक्यव्यावर्तकः ; वाक्यस्यापि शब्दत्वात् , अतश्शब्दशब्दो ' भूतभव्यस्येशान ' इति वाक्यपरः , किमङ्गुष्ठप्रमितो जीवः ? उत सर्वेश्वरः ? इति हि सन्देहः , अतः सर्वेश्वरत्वबोधकश्शब्दश्शब्दादेवेति ग्रहीतुं युक्त एव । किञ्चात्र ईशानशब्दो न श्रुतिः, भूतभव्यसमभिव्याहारेण रूढ्यनुन्मेषात् । नचौत्सर्गिकरूढ्यर्थोपस्थितिस्तदुपादानेपि दुर्वारेति वाच्यम् ; शब्दस्यैकार्थप्रतिपादनेन चरितार्थस्यार्थद्वयपरत्वासम्भवात् । अन्यतरनियामकाभावात्तु क्वचिद्योगरूढ्यर्थद्वयपरत्वम् । यद्वा - अर्थद्वयतात्पर्यग्राहकसद्भावे उभयपरत्वम् , निर्धारकाभावे रूढितात्पर्यग्राहकसद्भावस्थलएव रूढार्थपरत्वम् , तत्रैव प्रतीत्यान्तरस्यात् ; योगतात्पर्यग्राहकमात्रसद्भावेतु तन्मात्रपरत्वम् , तावन्मात्रेण प्रयोगस्य चारितार्थ्यात्; योगद्वयतात्पर्यग्राहकसद्भावेप्युभयपरत्वम् ; अत एव शेषोपपत्तिः, आर्षानेकनिरुक्त्युपपत्तिश्च । इह तु प्रतिसम्बन्ध्युपादानं योगार्थग्रहणे नियामकमस्ति । अतो योगार्थस्योन्मिषितत्वान्न रूढ्युन्मेषः । योगोन्मेषे रूढेर्निमग्नत्वादेव हि ' पद्मानि यस्याग्रसरोरुहाणी ' त्यत्र पद्मपदप्रयोगः । यदुक्तं व्यङ्ग्यप्रधानत्वात्काव्यस्य गिरेरौन्नत्यव्यञ्जनाय योगे शब्दस्योपक्षयान्न तत्र रूढिविवक्षा, इह व्यञ्ज्यार्थविवक्षाविरहान्न रूढिर्निमग्नेति, तन्न, योगार्थ-

प्रतीतिरेव हि व्यङ्ग्यप्रतीतिनिमित्तम्; न तु रूढ्यविवक्षापि; योगार्थप्रतीतिश्शब्दस्य स्वभावादवर्जनीयतयैवेति। रूढिस्तु अग्रपदेनैव योगोन्मेषहेतुना वारिता। तस्य च योगोन्मेषहेतुत्वमधिकरणाकाङ्क्षेण सरसा अन्वयात्। रोहस्य हि अधिकरणाकांक्षा सरसैव पूर्णा। वस्तुतस्तु ऊर्ध्वमुखैः प्रबोधनमौनत्याभिव्यञ्जकम्, न तु योगार्थस्तदभिव्यञ्जकः। नारायणार्यास्तु 'योगरूढ्योर्विकल्प एव अक्षादिशब्द इव रूढ्योः, अत एवंजातीयकानां शब्दानामवयवार्थसमुदायार्थयोः प्रयोगविकल्पदर्शनादुत्पलादिष्वपि पङ्कजादिशब्दानवयवार्थविवक्षया वाक्यविन्प्रयुङ्क्ते, अपङ्कप्रभवेषु स्थलजेषु नारायणनाभिजाते च पङ्कजशब्दं प्रयुङ्क्ते' इति। एवं चात्र प्रतिसम्यन्भ्युपादानेनावयवार्थस्य विवक्षणीयत्वान्न रूढ्या रुद्रोपस्थितिः। तस्माद्ब्रह्ममीमांसाशास्त्रं भगवत्परमिति सिद्धम्।

तत्र भगवान्वेदाचार्यो निखिलजगदनुजिघृक्षया ब्रह्ममीमांसाशास्त्रं प्रणेतुकामः स्वग्रन्थे प्रेक्षावदुपादित्सासाधनाय विचारकर्तव्यतामादौ चतुर्भिस्सूत्रैर्निरूपयति। तदुक्तं 'व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथाफलत्वम्। एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि॥' इति। भगवानपि द्वितीयपादादौ प्रथमपादाधिकरणार्थानुक्रमेण 'प्रथमे पादे अधीतवेद पुरुष' कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञान' केवलकर्मणामल्पास्थिरफलत्वमवगम्य वेदान्तवाक्येषु चापातप्रतीतानन्तस्थिरफलब्रह्मस्वरूपतदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षो ऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिर्वेदान्तवाक्यानां परस्मिन्ब्रह्मणि निश्चितप्रमाणभावस्तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभत इत्युक्तं शास्त्रारम्भसिद्धये' इत्यनुजग्राह। तत्र शास्त्रमारम्भणीयमित्युक्तावीति वक्तव्ये शास्त्रारम्भसिद्धय इत्युक्तिर्हि शास्त्रारम्भणीयतया एतदधिकरणासाधारणार्थत्वाभावमधिकरणान्तरसाधारण्यञ्च ख्यापयति। तथा समन्वयाधिकरणोपक्रमे 'सिद्धस्वरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह' ति,

'तत् शास्त्रप्रमाणकत्वम्, ब्रह्मणस्सम्भवत्येवे' ति च तस्याधिकरणस्य शास्त्रारम्भहेतुभूतप्रामाण्यसमर्थनार्थत्वमनुजग्राह । तथा ईक्षत्यधिकरणोपक्रमे ' ब्रह्मजिज्ञास्यमित्युक्त ' मिति चतुस्सूत्रयर्थोऽनूदितः । शब्दसामर्थ्यादर्थसामर्थ्याच्च चतुस्सूत्र्यारम्भार्थो। शब्दसामर्थ्यन्तावत् 'अथातो धर्मजिज्ञासे' त्यनन्तरं ' चोदानालक्षणोऽर्थो धर्म ' इतिवदिह ' अथातो ब्रह्मजिज्ञासे ' त्यनन्तरं जन्मादिकारणं ब्रह्मेति नोक्तम् , अपि तु 'जन्माद्यस्य यत' इति । अतस्सूत्रद्वयस्यापि भिन्नवाक्यताया अभिमतत्वात् तत्र पुनधर्मशब्दः, अत्रत्वेकवाक्यताया अभिमतत्वात् पूर्वसूत्राध्याहृतकर्तव्यत्वसाध्यान्वयार्थं यत इति निर्दिष्टम् । ततश्च यतोस्य जन्मादि तद्ब्रह्मजिज्ञासा कार्येत्यवगम्यते । ' शास्त्रयोनित्वा ' दित्यपि साध्यानुक्तेः पूर्वसाध्येनैवान्वेति । साध्यान्तरविवक्षायां समन्वयसूत्र इव कथं प्रतिज्ञान्न कुर्यात्? ' तत्तु समन्वया ' दित्यस्य तृतीयसूत्रशेषत्वं स्पष्टमेव । तस्मात्समन्वयेन शास्त्रप्रमाणकत्वात् जन्मादिकारणं ब्रह्म विचारार्हमिति शब्दस्वारस्यसिद्धो महावाक्यस्य पर्यवसितोऽर्थः । सूत्रभेदो न्यायभेदनिबन्धनः । उक्तं शब्दसामर्थ्यम् । यदि शब्दसामर्थ्यानुगुणमर्थसामर्थ्यन्न भवेत्तदा शब्दसामर्थ्यमबाधकमिति शङ्क्येतापि; अस्ति च शब्दसामर्थ्यानुगुणमर्थसामर्थ्यमपि, चिदचिद्व्यावृत्तलक्षणासम्भवे ततो भेदासिद्धया ब्रह्मादिपदानां जीवपरत्वे वेदान्तभागस्याधिकारिप्रशंसार्थतया कर्मशेषत्वेन तद्विचारो न कर्तव्य इति स्यात् , धर्मलक्षणाभावेपि ज्योतिष्टोमादिवाक्यप्रतिपन्नार्थगोचरविचारस्यानारम्भहेतुत्वभावान्नैकवाक्यता कृता । लक्षणासम्भवस्यानारम्भहेतुत्वं वाचस्पतिरप्याह ' तस्माल्लक्षणाभावान्न जिज्ञासितव्यमित्याक्षेपाभिप्राय ' इति । कल्पतरुकारश्च ' प्रथमसूत्रेण द्वितीयसूत्रस्याक्षेपलक्षणां सङ्गतिमाह ' ति । तृतीये पूर्वपक्षस्यानारम्भहेतुत्वं स्पष्टमेव । चतुर्थस्य पूर्वशेषत्वान्न पृथग्वाच्यम् ।

जिज्ञासाधिकरणम् । (१)

१– अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्र सन्देहः, इदं शास्त्रमारम्भणीयन्न वेति, तदर्थं ब्रह्ममीमांसाशास्त्रे प्रेक्षावदुपादित्सा सम्भवति नेति, तदर्थं ब्रह्मविचारः कर्तुं योग्य उत नेति, तदर्थं कर्माल्पास्थिरफलत्वनिर्णयसहितसिद्धब्रह्मतात्पर्यसम्भावनाविशिष्टब्रह्मज्ञानानन्तास्थिरफलत्वापातप्रतीतिरूपविशिष्टाधिकारो लभ्यते न वेति, तदर्थं वेदान्तेषु सिद्धब्रह्मतात्पर्यसम्भावनाविशिष्टापातप्रतीतिस्सम्भवति न वेति, तदर्थं सिद्धे पदानां व्युत्पत्तिरस्ति न वेति। यदा सिद्धे पदानां व्युत्पत्तिर्नास्ति तदा वेदान्ते सिद्धतात्पर्यसम्भावनाविशिष्टापातप्रतीतिर्न सम्भवति ; यदा न सम्भवति, तदा विशिष्टाधिकार्यलाभः, यदा तदलाभः तदा न विचारः कर्तुं योग्यः, यदा न योग्यः तदा शास्त्रे न प्रेक्षावदुपादित्सासम्भवः ; यदा न सम्भवस्तदा न शास्त्रमारम्भणीयम् ;— इति पूर्वपक्षे फलफलिभावः । यदा सिद्धे पदानां व्युत्पत्तिः तदा वेदान्तेषु सिद्धतात्पर्यसम्भावनाविशिष्टापातप्रतीतिस्सम्भवति ; यदा सम्भवति तदा विशिष्टाधिकारिलाभः ; यदा च तल्लाभः तदा विचारः कर्तुं योग्यः ; यदा च योग्यः तदा शास्त्रे प्रेक्षावदुपादित्सा सम्भवति ; यदा च सम्भवति तदा शास्त्रमारम्भणीयम् ; - इति सिद्धान्ते फलफलिभावः ।

अत्र प्राभाकरानुसारीत्या— सिद्धे न व्युत्पत्तिः, अतो न वेदान्तवाक्यैर्ब्रह्मप्रतिपत्तिः । अथ स्याद्वेदान्तेषु तत्र तत्रोपासनरूपकार्यश्रवणात्तदन्वितवाक्ये ब्रह्मप्रतिपत्तिस्सम्भवत्येवेति ; उच्यते । सद्विद्यायान्तावदुपासनरूपकार्यन्त्र श्रूयते, अतस्तस्यास्सम्प्रतिपन्नाधिकारिमुखेन कर्मार्थवादता वाच्या ; एवञ्चोपनिषदन्तराणामपि तथात्वं स्यादिति न ब्रह्मप्रतीतिसम्भवः । नन्वूपासनस्य वेदान्तेषु श्रवणादन्तरङ्गतया सद्विद्यायास्तदन्वय एव युक्तः, न कर्मान्वयः, तस्याः कथञ्चिदत्र क्वचना-

न्वयेपि स्ववाक्यश्रुतोपासनानां वाक्यान्तराणां किमर्थं दूरधावनम् ? अतो ब्रह्मबोधनं कार्यव्युत्पत्तावपि सम्भवतीति चेन्न;- एवं कार्यपरतयैव प्रामाण्ये तदर्थतया प्रतिपन्नेष्वर्थसत्त्वनिर्बन्धाभावान्न ब्रह्मसिद्धिः । यद्यप्युपास्यसमर्पकतया प्रामाण्यन्तदुपस्थापकानां सम्भवति, तथापि वेदान्तवाक्येषु वाक्यान्तरादिव्याहतिप्रतीतेर्न्यायेन कथञ्चिदविरोधो नेयः, स किमर्थं कार्यः ? न हि पूर्वभागप्रतिपन्नार्थवादिकार्थेषु विरोधः केन चिन्न्यायेन परिह्रियते, किन्तु लक्षणादिना कथञ्चित् स्तुत्युपयोग इष्यते, कार्यवाक्यार्थस्यावैकल्याद्विरोधेपि ह्यर्थवादो निष्प्रत्यूह एव, अतो वेदान्तानां विधिसरूपार्थवादतया कर्मविधिरूपकार्यपरत्वं स्यात्; न तु जीवविलक्षणब्रह्मपरत्वम्, तस्माद्वेदान्तानां सिद्धब्रह्मतात्पर्यसम्भावनाविशिष्टापातप्रतीतिर्न सम्भवति । तस्माद्विशिष्टाधिकारी न लभ्यत एव । अत्राधिकार्याक्षेपेणैव विषयप्रयोजनसम्बन्धाक्षेपोपि सिद्धः, सिद्धब्रह्मणि तात्पर्याभावनिर्णये त्रयाणामप्यसम्भवात् । तथाहि– वेदान्ताः कर्मार्थवादास्संवृत्ता; अतस्तदर्थेषु न विचारणीयमस्ति । अर्थवादत्वादेव न ब्रह्मज्ञानस्य मोक्षफलकत्वसम्भव इति । एवं प्रेक्षावत्प्रवृत्त्यङ्गविरहात् ब्रह्ममीमांसाशास्त्रमनारम्भणीयम् । — इति पूर्व.पक्ष. ।

भाष्याद्युक्तरीत्या— सिद्धे व्युत्पत्तिसत्त्वात् साद्विद्यायां कार्यतात्पर्याभावात्तत एव जीवातिरिक्तब्रह्मप्रतीतौ जीवासम्भावितार्थप्रतिपादकानां सर्वेषां जीवातिरिक्तपरत्वसम्भवान्मीमांसया सर्वाण्यपि वेदान्तवाक्यानि सामरस्येन जीवविलक्षणब्रह्मप्रतिपादकानि सम्भवन्ति । वस्तुतस्तु सद्विद्यायां तावत् स्तब्धोसीति पुत्रस्य ब्रह्मज्ञानोत्पिपादयिषयाऽयमाक्षेप इति प्रागेवोक्तम् । तत्र च प्रश्नस्य स्तब्धोसीति विवक्षितपूर्तिहेतुत्वं निदिध्यासनपर्यन्तस्यैव, न श्रवणमात्रात्, अतोत्रोपासनमेवोत्पिपादयिषितमिति प्रतीयते । तथा 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्या' दित्युच्यते । तत्र विज्ञातशब्दो निदिध्यासनरूपज्ञानविशेषपरः । श्रवण-

मननसाहचर्यात्, अत एतत्कीर्तनमप्युपासनोत्पादनतात्पर्यमवगमयति । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति तस्येत्युपासक एवोच्यते, तेनाप्युपासनतात्पर्यं व्यज्यते, उपासनस्य फलसाधनत्वप्रतीतेः । तथा सद्विद्यान्ते 'तद्धास्य विजज्ञौ' वित्युच्यते । अस्य च विपूर्वकज्ञानातेरुपक्रमविज्ञानपदसमानार्थत्वमेव स्वरसम् । किम्बोतिपिपादयिषित ज्ञानमुत्पन्नमिति विजज्ञावित्यनेन प्रतीयते । उतिपावयिषित चोपासनमित्युक्तमेव । सप्तमखण्डान्ते तु नोपक्रमानुरोधः, अनन्तरमप्युपदेशात् । एवं च श्वेतकेतोरुपासननिष्ठता सद्विधानं विना नोपपद्यत इतीदमपि विधितात्पर्यं स्पष्टयति । तस्मात्तत्त्वमसीत्यत्र तथोपास्वेति विधौ तात्पर्यम् । पुत्रस्ते जात इत्यादावपि हि अकाण्ड एव कार्यतात्पर्यमिष्यते कार्यशक्तिवादिभिः । इत्थं कार्यलिङ्गे जाग्रति तत्परत्वं कथलं स्यात्? वस्तुतस्तत्रैव तदसम्भवः, कस्य चिदपि कार्यस्यासम्भवात् । न च ज्ञानदानादि कार्यम्, एतद्वाक्यमभिलपन्त्या श्रोतुः कुक्षिम्भरेश्च पृथग्जनस्य तत्कार्यताऽसिद्धेः । न च जानीहीत्यध्याहारः, शाब्दज्ञानादेः प्रमाणपरतन्त्रस्यायत्नसाध्यत्वेनाविधेयत्वात् । ध्यानन्तु न विधेयम्, प्रयोजनाभावात् । तस्मादिदमेव वाक्यं सिद्धे पदानां व्युत्पत्तिं साधयति । अतः कार्य एव व्युत्पत्तावपि वेदान्तानां प्रामाण्यादिचारारम्भो युक्त एव । इदं च सद्विद्यायां उपासनतात्पर्यकत्वं समन्वयाधिकरणव्युत्पाद्यमेव, इह तु सिद्धे व्युत्पत्तिरेव व्युत्पाद्या, न्यायेन विरोधपरिहारसम्भवे न तत्परित्याज्यमित्यतिरिक्तब्रह्मसिद्धिरप्यविरुद्धा ।

आवृत्तिविधानादिभिश्च कर्मणामल्पास्थिरफलत्वनिर्णयः कृतकर्मविचारस्य समुन्निपतति । तथाहि आवृत्तिविधानन्तावत्— 'दाक्षायणयज्ञेन यजेत स्वर्गकाम' इति । अत्रेदं विचार्यते, किं प्रकृतदर्शपूर्णमासात् कर्मान्तरमिदम्? उत तत्रैव गुणविधिः? इति । तत्रैव सञ्ज्ञकस्य गुणस्याप्रसिद्धत्वात् कर्मनामधेयं दाक्षायणशब्दः, अतो

नामधेयात् कर्मान्तरमिति पूर्वपक्षे राद्धान्तः- दक्षः - उत्साही, यजमानः, तत्सम्बन्धिनो दाक्षा आग्नेयादयः, तेषामयनमावृत्तिः, अतोऽवयवप्रसिद्धचा तत्रैवावृत्तिलक्षणस्य गुणस्य विधेर्न कर्मान्तरमिति । एवं चावृत्तानावृत्तकर्मणोर्गौरवलाघवाभ्यां फले तारतम्यं " फलस्य कर्मनिष्पत्तेः तेषां लोकवत् परिमाणतः फलविशेषः स्या " दित्यर्थवादाधिकरणोक्तरीत्या कालस्वरूपाभ्यां सिद्धचति । ननु 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासा' वित्यनेकफलार्थतया विहितदर्शपूर्णमासयागस्य पश्वाद्यर्थप्रयोगे स्वर्गार्थतया आवृत्तिगुणविधानसम्भवादावृत्तानावृत्तयागजन्यस्वर्गयोर्न गुरुलघुभावसिद्धिरिति चेत्; न, यत्र शास्त्रादृते न क्रतोः गुणान्वयसिद्धिः, तत्र तद्विशिष्टक्रतुरेव फलाय चोद्यते; यथा दाक्षायणयज्ञ इति गुरूक्तरीत्या 'दाक्षायणयज्ञेन यजेत स्वर्गकाम' इत्यस्याधिकारविद्धचन्तरत्वे पश्वाद्यर्थप्रयोगे आवृत्तिगुणविधिशङ्कानुत्थानात्, पक्षान्तरे पिफलान्तरार्थप्रयोगविषयत्वे नियामकाभावात् स्वर्गार्थप्रयोगविषयत्वमप्यावश्यकम् । ननु 'अपाम सोममसृता अभूम' 'दिवि ज्योतिरजरमारभेता' मित्यादिमन्त्रार्थवादबलाद्भिन्युद्देशप्रतिपन्नस्य स्वर्गस्य नित्यतावगतौ तदनुसारात् पश्वाद्यर्थप्रयोगविषयत्वं कल्पनीयमिति चेत्; न, स्वरसतो दर्शपूर्णमासमात्रगोचरतया प्रतीयमानस्य विधेर्मन्त्रार्थवादमात्रेण सङ्कोचायोगात् । दाक्षायणयज्ञेनेति यज्ञशब्दस्य पश्वर्थप्रयोगे लक्षणाप्रसङ्गाच्च । एतेन 'यो वृष्टिकामो योन्नाद्यकामो यः स्वर्गकामस्स सौभरेण स्तुवीत' ति विध्युपस्थापितवृष्टिकामादेरेव 'हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये' ति परामर्शेन तत्तत्प्रयोग एव हीषादिनिधनविधिवदिहापि स्वर्गार्थतया विहितदर्शपूर्णमासयोरेवावृत्तिलक्षणगुणविधिरिति किन्नस्यादिति निरस्तम् । तत्र हीषादीनां फलाय विधौ निधनानन्वयप्रसङ्गः । नचाश्रयतयान्वयः, हीषादीनां निधनान्वयस्याप्राप्ततया तदनुवादायोगात् । तदन्यस्यापि विधौ वाक्यभेदप्रसङ्गात् । इह तु 'आवृत्ते द्वे पौर्णमास्यौ द्वे अमावास्ये'

इति वाक्यशेषप्राप्तत्वेन तादृशबाधकाभावेन गुणफलविधित्वमेव कामपदस्वारस्यानुरोधात् न्याय्यम् ।

किञ्च- 'यः स्वर्गकामस्स सौभरेण स्तुवीते' ति लघुभूतसौभरगुणस्य 'श्येनचितिं चिन्वीत स्वर्गकाम' इति गुरुभूताग्न्याश्रितगुणस्य च स्वर्गफलकत्वं श्रूयते, तथा गुरुलघुभूतानां दर्शपूर्णमासज्योतिष्टोमवाजपेयाग्निहोत्रप्रभृतीनां कर्मणां स्वर्गः फलत्वेन श्रूयते, अतः स्वर्गे तारतम्यमावश्यकम्, अत्र च कर्मकर्मभेदाङ्गविनियोगप्रयुक्त्यतिदेशादिभिरग्निहोत्रदर्शपूर्णमासज्योतिष्टोमवाजपेयादीनां गौरवलाघवसिद्धिरिति बहवो न्याया अनित्यताज्ञान उपयुज्यन्ते । नन्वेवं गुरुलघुविकल्पासम्भवेन फलतारतम्ये ब्रह्मज्ञानावृत्तेराप्रयाणमनुवर्तनीयतया प्रयाणकालस्याव्यवस्थितत्वात्तत्तारतम्येन फलतारतम्यं स्यादिति चेत्; न, तत्र शास्त्रीयस्य साधनतारतम्यस्याभावात् । न हि साधनतारतम्यं तत्त्वादेव फलतारतम्यापादकम्, किन्तु भूयःश्रमसाध्ये प्रवृत्तिप्रतिबन्धात्, न हि दैववशसम्पन्नसाधनलाघवन्तादृशगुरुसाधने प्रवृत्तिं प्रतिरोद्धुं क्षमते । किंच— दर्शनसामानाकारं ज्ञानं हि साधनम्, तन्निष्पत्तिश्च सत्त्वशुद्धिविलम्बाविलम्बानुरोधिनी, तौ च विलम्बाविलम्बौ रजस्तमोबाहुल्यवैरल्यनिबन्धनौ, अतो न साधनतारतम्यम् । यदि च दर्शनसमानाकारज्ञानोत्पत्त्यनन्तरमपि प्रारब्धानुसाराद्विलम्बः, न ततोऽपि साधनतारतम्यसिद्धिः; प्रतिबन्धकासमानकालीनध्यानस्यैव हेतुत्वात्, तच्च सर्वत्र तुल्यमेव । एवमुक्तन्यायोपेतात् 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इत्यादिवाक्यात् कर्मफलानित्यत्वनिर्धारणसिद्धिः । अतो विशिष्टाधिकारिलाभात् तत एव तात्पर्यसम्भवनाविशिष्टापातप्रतीतौ सत्यामापातप्रतीतार्थस्य विचारार्हतया ब्रह्मज्ञानस्यानन्तस्थिरफलत्वसम्भावनाबुद्ध्या च विषयप्रयोजनसम्बन्धानामपि सिद्ध्या प्रेक्षावत्प्रवृत्त्यङ्गसद्भावात् ब्रह्ममीमांसाशास्त्रमारम्भणीयमिति राद्धान्तः ।

यत्तु विषयप्रयोजनदर्शनेनैव तत्सम्बन्धस्यापि प्रदर्शितत्वात्तयोः सम्बन्धो न पृथग्दर्शनीयः, अस्यायं विषयः अस्येदं प्रयोजनमिति हि तयोः प्रदर्शनम्, अतोनुबन्धत्रयमेव ग्रन्थमात्रे प्रवृत्त्यङ्गम्, वेदान्ते तु पूर्ववृत्तस्याप्यावश्यकत्वादनुबन्धचतुष्टयं प्रवृत्त्यङ्गम्, अतः पूर्ववृत्तरूपानुबन्धपरस्सम्बन्धशब्द इति ; तन्न, अनुबन्धचतुष्टयमपि ग्रन्थमात्राङ्गमिति हि प्राचां घण्टाघोषः । युक्तश्च सः । कार्यमात्रे इदमस्य फलं इदमेतादृशेन कार्यमिति ज्ञानादेव प्रवृत्तिरिति फलाधिकारिणौ प्रवृत्तिमात्राङ्गम् । हलेन जीवनं भवतीति ज्ञाने सत्यपि कर्षणादिद्वारानवगमे प्रवृत्तिर्न सम्भवतीति फलसम्बन्धविशेषज्ञानमपि प्रवृत्तिमात्राङ्गम्, अतः कार्यत्वाविशेषात ग्रन्थेप्येतत्त्रितयमनिवार्यमेव । अर्थपरत्वाद्विषयज्ञानमधिकमङ्गम्, तत्सम्बन्धविशेषज्ञानमपि । लोके हि केचित् साक्षात्प्रतिपादकमिच्छन्ति, केचिद्व्याख्यानम्, अतः तत्सम्बन्धविशेषोपि ज्ञातव्य एव । अत्र च 'ब्रह्मजिज्ञासे' ति ब्रह्मणो विचारविषयत्वावगमाद्विचारस्य निर्णयफलकत्वात् अतश्शब्देन वेदान्तेष्वनन्तस्थिरफलापातप्रतीत्युपस्थापनाच्च शास्त्रस्य ब्रह्मनिर्णयद्वाराऽनन्तस्थिरफलप्रयोजकत्वं वेदान्तद्वारा ब्रह्मविषयकत्वं च सिद्ध्यति । पूर्ववृत्तं चाधिकार्यन्तर्भावेनैवानुबन्धो न पृथगनुबन्ध ।

किञ्च — वेदान्ते मुमुक्षा हि पूर्ववृत्ततया विवक्षिता, नित्यानित्यविवेकादिकं तत्साधनमात्रमेव, सा च फलेच्छैव, फलेच्छा च प्रवृत्तिमात्राङ्गमिति कुतो वेदान्तासाधारण्येनानुबन्धचतुष्टयस्य प्रवृत्त्यङ्गता ।

किञ्च - सम्बन्धशब्द- पूर्ववृत्तरूपानुबन्धं कथमिवाभिदध्यात् ? यदि कर्मणिव्युत्पत्त्याभिदध्यात् ; तर्ह्यनुबन्धान्तरमपि कथं नाभिदध्यात् ? ततश्चैकानुबन्धपरिशेष- प्रसजेत् । अतस्सम्बन्धोप्यनुबन्धएवेति अत्र विशिष्टाधिकारिलाभान्मीमांसाऽऽरम्भणीयेत्येव हृदयम् ।

ऐकशास्त्र्यात् सङ्गतिसूचनार्थं स्वाध्यायाध्ययनविधिमुखप्रवृत्त-कृतिप्रबन्धविवक्षया 'परीक्ष्य' इत्यादिश्रुत्यनुसाराच्च कर्मविचारानन्तर्यमथ-शब्देन निर्दिष्टम्, तात्पर्यन्त्वधिकारसमर्थन एव । ततश्च कर्मणा-मल्पास्थिरफलत्वज्ञानं यद्युपदेशेन कस्यचित्सम्भवति, तदा तस्या-प्यधिकारोस्त्येव । यद्येवन्तर्हि उपदेशादेव ब्रह्मणस्तद्ज्ञानस्य ततो मोक्षस्य च निर्द्धारणे ब्रह्मविचारोपि नापेक्ष्येतेति चेत्; न, पुरुषविशेषे तदन-पेक्षाया इष्टत्वात् । 'श्रोतव्य' इति श्रवणनियमेनौपदेशिकज्ञानस्य व्यवच्छेदात् कथमिष्टत्वमिति चेत्; न, श्रोतव्यशब्दस्य शाब्दावधारण-परत्वेन तेन मीमांसितवाक्येनार्थावधारणस्य दृढविश्वस्तौपदेशिकज्ञानस्य च संग्रहादिति ।

देवमीमांसायामेव सिद्धे व्युत्पत्तेस्समर्थनीयतया इह कथन्तत्समर्थन-मिति केनचिदुक्तमसङ्गतम्, कर्मविधिशेषतयैव देवतानान्निरूपणेन तत्र सिद्धे व्युत्पत्तिसमर्थनस्यानपेक्षितत्वात् । उक्तं च तत्वटीकायां "एवं तर्किते कर्मणि सङ्कर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवता एव स्वरूपभेद गुणप्रकर्षैर्निष्कृष्य तत्समाप्तौ च 'अन्ते हरौ तद्दर्शनात्' 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षत' इति विचारयिष्यमाणमुपचिक्षेपेति तत्ववृद्धा" इति । अत्र च मुमुक्षाधिकारः, सा च 'यदि वेदान्ते प्रतीय-मानमनन्तस्थिरफलं ब्रह्म तद्ज्ञानं तयोस्साध्यसाधनभावश्च तत्वमेव तदा तेन मया तत्साधनीय' मित्येवंरूपा, निरुक्तमुमुक्षानुगुणश्च नित्यानित्यवि-वेकः कर्मफले निर्धारणरूपः ज्ञानफले त्वनिर्धारणरूपः, पुरुषः खलु ऐहिकामुष्मिकफलेषु यावन्नानित्यतान्निर्धारयति तावन्न मोक्षसाधनविचारे प्रवर्तते, अनादिवासनया विषयप्रवणस्वभावत्वात्, तस्मादिह तन्नि-र्धारणं मुमुक्षानुगुणम्; सर्वत्र हि प्रमाणे प्रवृत्तिस्तत्प्रतिपाद्यसन्देहादेव, इयं च प्रवृत्तिर्न्यायोपेतवेदान्तरूपप्रमाणएव । इत्थमेव च पूर्वतन्त्रेपि प्रवृत्तिः, न तु स्वर्गसाधनत्वनिश्चयात्, तस्य शास्त्रसाध्यत्वात् । अतो

न्यायोपेतवाक्येन निर्णयार्था प्रवृत्तिस्साध्यसाधनसन्देहादेव, अवान्तर फलन्तु निर्णयरूप विचारेण भवतीति निर्णीतमेव । तच्च निर्धारणं न साध्यसाधननिर्धारणं भवतीति, किन्तु तत्तदभावान्यतरनिर्धारण भवतीति । ननु ब्रह्मज्ञानस्य मोक्षसाधनत्वनिश्चयाभावे कथ श्रवणार्थं गुरूपसदने प्रवृत्ति ? नियमाद्दृष्टस्य स्वाभिमतफलपर्यन्तोपयोगज्ञानाभावे प्रवृत्त्यनुपपत्तेरिति चेत्; न, यदि ब्रह्मज्ञान मोक्षसाधन स्यात्; तदा गुरूपसदनवैगुण्ये मम फलं ब्रह्मज्ञानेन न स्यादिति बुध्या प्रवृत्त्युपपत्तेः ।

अत्रायमधिकारो नानुबन्धान्तर्गतः, ज्ञायमान प्रवृत्त्यङ्ग ह्यनुबन्धः, नचोक्ताधिकारो ज्ञायमान प्रवृत्तावुपयुज्यते, किन्तु स्वरूपसन्नेव, अतोत्र ज्ञायमानः प्रवृत्त्यङ्गभूतोधिकारस्सवर्णिकृत्यम्, तच्च नेह निरूपणीयम्, सूचितं च तदथातश्शब्दाभ्याम्, मत्कृते चाधिकारव्यपदेशो मुमुक्षारूपाधिकारहेतुत्वात्फलकामनाप्यनुबन्ध एव, सा तु न ज्ञातोपयुज्यते, अतस्तद्व्यतिरिक्तानुबन्धानामेव ज्ञाततयोपयोग इत्यपि केचिदिति ।

अत्र सूत्रस्य तमोविजृम्भणवैचित्र्यसन्धुक्षितकुदृष्ट्यनुगुणं यथायथ तात्पर्याणि वर्णयन्ति । तथाहि- तत्र विवरणकार आह- ब्रह्म विचार्यन्न वेति संशय, तदर्थं चिन्ता किं विषयप्रयोजने न सम्भवत उत सम्भवत इति, अत्र पूर्व पक्ष - प्रत्यग्ब्रह्मैक्य हि विचार्यम्, तच्च न सम्भवति, कर्तृत्वादेर्विरुद्धधर्मस्य सत्यत्वेनैक्यायोगात्, नापि तन्निवृत्ति प्रयोजनम्, ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य तस्य ज्ञाना न्निवृत्त्ययोगादिति; राद्धान्तस्तु सत्य कर्तृत्वभोक्तृत्वादि, प्रपञ्चस्य सत्यत्वे विषयादि न सिद्ध्यतीति, प्रपञ्चस्तु मिथ्यैवेति ।

वाचस्पतिस्तु पूर्ववदेव सशय, पूर्वपक्षस्तु प्रत्यगात्मन एव ब्रह्मत्वात्तस्याहमिति प्रकाशमानत्वेनासन्दिग्धतया न विषयत्वमुपपद्यते, नाप्यविद्यानिवृत्ति प्रयोजनम्, उक्तरीत्या आत्मनि भासमानेपि तन्नि

वृत्यनुपलब्धेरिति ; सिद्धान्तस्तु वेदान्तवाक्यैः ज्ञानानन्दैकरसाद्वितीयोदासीनस्वभाव आत्मा उपक्रमादिभिः प्रतिपाद्यते, सच वेदान्तवेद्यश्शुद्धोऽहंप्रत्ययेन भातीति विषयादिसिद्धिरविकलेति ।

माध्वास्तु– ब्रह्मविचारो न कर्तव्यः उत कर्तव्यइति चिन्ता, तदर्थं विषयादिकम् सम्भवति उत सम्भवतीति, तदर्थं विषयभूतं ब्रह्म किं प्रत्यगर्थभूतजीवः उत तदन्य इति, पूर्व.पक्षस्तु विषयत्वेनाभिमतं ब्रह्म न जीवचैतन्याद्भिन्नम्, नापि सविशेषम्, मानाभावात्, वेदान्तैश्चोपक्रमोपसंहारादिभिरखण्डप्रत्यगात्मस्वरूपमात्रप्रत्यायनात्तस्य चाहमितिभासमानत्वादिति, राद्धान्तस्तु — ब्रह्मशब्दोक्तगुणपूर्तितदभावाभ्यां जीवब्रह्मणोर्भिन्नत्वेन ब्रह्मणोऽहमिति प्रकाशमानत्वाभावेन विषयत्वं सम्भवतीति ।

अत्र व्यध्वविद्ध्वंसनम्—

आत्मा ब्रह्मेत्यधीतः श्रुतिशिखरगणैर्निर्विशेषश्च सर्वैः
किन्तत्र स्वप्रकाशे गुणलवरहिते वस्तुशास्त्रेण चिन्त्यम् ।
इत्याक्षेपो गुरूणामतिशतविषये स्वाप्रमाण्यत्ववादः
श्रुत्यन्तानामनिरूप्यस्स यदि जडमते केन शास्त्रयस्स न स्यात् ॥

अत्रेदं परकीयमधिकरणं - ब्रह्ममीमांसाशास्त्रमिदं नारम्भणीयम्, निर्विषयत्वात् ; न तावदस्य स विशेषं ब्रह्म विषय., तत्र मानाभावात् ; वेदान्तानान्निर्विशेषजीवस्वरूपमात्रपरत्वात् ; न च जीव एव ब्रह्मेति स एव विषय', तस्य स्वप्रकाशत्वेनाहमितिसर्वानुभवसिद्धत्वान्निर्विशेषे तत्र निरूपणीयानां धर्माणामभावादिति पूर्व' पक्ष । सिद्धान्तस्तु भवेदेव निर्विषयत्वम्, यदि विचार्यत्वाभिमतं ब्रह्म जीवरूपत्वेन संशयविपर्यासानास्पदं स्यात्, नत्वेवम्. तस्य " तद्विजिज्ञासस्व, तद्ब्रह्म " ति विचारविषयधर्मिणि श्रुतेन ब्रह्मशब्देनैव गुणपूर्तिवाचिना अल्पगुणा-

ज्जीवनिकायाद्विलक्षणत्वसिद्धे ; तस्य गुणपूर्तिवाचिता च " अथ कस्मादुच्यते ब्रह्मेति, बृहन्तोह्यस्मिन् गुणा " इति श्रवणात्, स्वरूपतो गुणतश्चापरिच्छिन्नत्वविषयावयवशक्त्यनुरोधाच्चेति । तत्र निर्विशेषस्वरूपस्य ब्रह्मण श्रुत्यन्तनिरूप्यत्वमङ्गीकृत्य शास्त्रनिरूप्यत्वासम्भवपूर्वपक्षो गुरूणा प्रणतिपरम्परायाविषये महापुरुषे तच्छिष्योदितस्वप्रमाणानर्हत्ववादमनुकरोति । प्रमाणशिरोमणयो हि वेदान्ता नितान्तमनधिगतार्थमन्विच्छन्ति, पौरुषेयाणि तु शास्त्राणि उपायान्तरेणावगन्तु शक्येष्वप्यर्थेषु श्रोतृबुद्धिसमाधानार्थं प्रवर्तमानानि स्वोक्तमप्यर्थमविस्मरणार्थमाम्रेडयन्ति, न तथानधिगतार्थव्यसनितामनुभवन्ति, ततश्च वेदान्ता अपि यदि स्वप्रकाशजीवस्वरूपमात्रे कर्तृत्वभोक्तृत्वादिरहिततया कर्मशेषता प्रतिपाद्यमाने स्वातन्त्र्येण पर्यवस्यन्ति तदा शास्त्रस्य तत्र पर्यवसाने कानुपपत्ति ? पूर्वपक्षिणापि हि वेदान्ताना प्रामाण्यसरक्षणाय स्वप्रकाशजीवपरत्वेप्यनधिगतार्थत्वमुपपादनीयम् । ततश्च शास्त्रस्यापि तेन स्वविषयत्वोपपत्तिरिति भाव ।

ननु पूर्वपक्षिणा वेदान्ताना प्रामाण्य न सरक्षणीयम्, तेह्यप क्रमादिन्यायैस्स्वप्रकाशजीवस्वरूपपरा एव, तस्यचानधिगतत्व कथमपि समर्थयितु न शक्यते, तथाहि सति यदि तेषा प्रामाण्य न स्यान्मा भूत्, न्यायलब्धेर्थे किं कुर्म, अतएव तदर्थमधिकृत्य शास्त्र नारम्भणीयम्, सर्वथैव विषयालाभादिति पूर्व पक्ष क्रियते, कात्रानुपपत्तिरित्याशङ्क्याह—

प्रामाण्य सिद्धमेव ह्यकृतकवचसा त्वन्मते तर्कशास्त्रे
शास्त्रस्याङ्ग यदस्य स्मरसि हरिकृत ब्रह्मतर्काभिधानम् ।
तच्चेद्भज्येत नित्यस्फुरदगुणत्वप्रत्यगात्मैदमर्थ्ये
तन्निर्वाहाय तेषा सगुणविषयतया पूर्वपक्षेपि ते स्यात् ॥

इत्थं हि तव मतम्, अस्ति विष्णुना नारायणरूपेणातिविस्तरेण कृतं पुनर्व्यासरूपेण तेन संक्षिप्तं च ब्रह्मतर्काभिधानं शास्त्रम्, तदेव चतुर्दशविद्यास्थानान्तर्गतं तर्कशास्त्रम्, न तु गौतमादिप्रणीतम्, तच्चास्य मीमांसाशास्त्रस्याङ्गम्, इदं हि सर्वेषां कर्मब्रह्मकाण्डरूपाणां वेदानां सकलगुणपरिपूर्णो भगवानेव मुख्यार्थ इति निर्णयाय प्रवृत्तम्, तत्तेतन्निर्णयार्थानां वेदान्तदर्थनिर्णायकानां प्रत्यक्षादीनामुपक्रमादीनां श्रुतिलिङ्गादीनां च स्वरूपप्रामाण्यतद्बलाबलनिर्णायकत्वेनैवदपेक्षितामिति । तदुक्तमनुव्याख्याने — 'प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धेर्मीमांसा मेयशोधनम् ॥ ब्रह्मतर्के च कृतवान् स एव भगवान्प्रभुः । पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥ उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः ॥' इति । एवं च यदि वेदान्तानामखण्डजीवस्वरूपपरत्वे मानान्तरसिद्धतत्स्वरूपानुवादमात्रपर्यवसायित्वेन प्रामाण्यश्च निर्वहेत्तदा तन्निर्वाहाय तेषामुपक्रमादिस्वारस्यावगतमपि तद्विषयत्वं परित्यज्य मानान्तरानधिगतसगुणब्रह्मविषयतैव पूर्वपक्षिणाप्यङ्गीकर्तव्या स्यात्, न हि सिद्धप्रामाण्यानां वेदान्तवाक्यानामनधिगतार्थपर्यवसानविरोधी कश्चिदपि वाक्यस्वारस्यानुरोधोऽस्ति, 'त्रेधा तण्डुलान्विभजेत्' 'सृष्टीरुपदधाति' 'कपालेषु श्रपयती'त्यादिषु तत्तत्स्वारस्योपस्थितानप्यन्यतः प्राप्तिमतोऽर्थान् परित्यज्य लक्षणया प्रत्यक्षविध्यन्तरद्वारा कल्प्यविध्यन्तरद्वाराधानधिगत एवार्थे पर्यवसानस्याङ्गीकृतत्वात्; विश्वजित्स्वर्गकामाधिकरणपूर्वपक्षयोरपि नानधिगतार्थत्वरूपप्रामाण्यत्यागः, किन्तु फलाभावादनुष्ठानालाभमात्रः। उक्तं हि तन्त्ररत्ने स्वर्गकामाधिकरणपूर्वपक्षे - 'नन्वेवं प्रमाणं स्यात्, तत्र, गम्यमाने प्रवर्तनामात्रे प्रमाणमेव, न हि पुरुषप्रवृत्त्यधीनं वेदप्रामाण्यम्, यदि हि तथा स्यात्, ततः प्रमाणभूतवचनविहितस्यानुष्ठानमनुष्ठानायत्तं च प्रामाण्यमितीतरेतराश्रयापातः; तस्मात् त्वत्पूर्वपक्षिणा वेदान्तानां ब्रह्मतर्कसिद्धप्रामाण्याविघाताय निर्विशेषजीवविषय-

त्वेपि चानधिगतविषयत्वमद्वैतिवत्समर्थनीयम् , तद्विलक्षणसगुणब्रह्मविषयत्वं वाङ्गीकरणीयमित्युभयथापि न निर्विषयत्वशङ्कावकाश इति भावः ।

परमते मतान्तरसिद्धोपक्रमादिन्यायजालमवलम्ब्य पूर्वपक्षप्रवर्तनमप्ययुक्तमित्याह —

साक्षी जीवः सुखादीन्यनिशमनुभवन् सर्वमानाधिकस्ते
तेषान्तर्के त्वदिष्टो बलवदबलतायांविभागश्च सिद्धः ।
तस्यात्यन्तानुकूलं श्रवणमपि तव प्राग्विचारादपेक्ष्यं
श्रुत्यन्तानां कुतस्स्यादगुणविषयतापूर्वपक्षस्य क्षाम ॥

एवं हि तव मतम् , सुखादिकं साक्षिवेद्यम् , साक्षी च सर्वप्रमाणाधिकः , नित्यत्वेनाप्रामाण्यहेतुदोषजन्यत्वाभावात् , साक्षिविषये सुखदुःखेच्छाद्वेषादौ कदापि संशयविपर्यययोरदर्शनात् , दूरस्थजलादिज्ञानप्रामाण्यपरीक्षाधारायाः ततो जलावगाहनादिप्रयुक्तसुखदुःखादिग्राहिणं साक्षिणमादायैव विश्रान्तेश्च , अतस्साक्ष्यनुभवविरुद्धेर्थे श्रुतिरपि न प्रमाणमिति । इदं च साक्षिणो बलवत्त्वं तव प्रमाणमीमांसारूपे ब्रह्मतर्के एव सिद्धम् । अतोत्र साक्ष्यनुभवविरुद्धं वेदान्तानां सुखदुःखादिरहितनिर्विशेषजीवस्वरूपमात्रपरत्वमपेक्ष्य पूर्वपक्षप्रवर्तनं न युज्यते । अपि च— सर्वेषामपि प्रमाणानां त्वदिष्टो बलाबलविभागस्तव ब्रह्मतर्के एव सिद्धः , अतो वाक्यार्थनिर्णयप्रमाणभूतानामुपक्रमादीनामुपक्रमादुपसंहारो बलीयानित्यादिरूपस्त्वदिष्टो मतान्तरविलक्षणो बलाबलविभागस्तव ब्रह्मतर्के एव सिद्धः , ' उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् । श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णया ' दित्यनुव्याख्यानोक्तेः , त्वदभिमतोपक्रमादिबलाबलानुसारी सर्ववेदान्तानामर्थश्च त्वन्मते विचारात् प्रागेव गुरुमुखादवगन्तव्यः , यावच्छक्ति सकलवेदाध्ययनपूर्वकं प्रतिवाक्यमस्य वाक्यस्यायमर्थ इति सर्वेषां वेदवाक्यानां गुरुमुखादर्थ-

ग्रहणं श्रवणम्, तच्च यावदज्ञाननिवृत्ति एकस्मादेव गुरोर्वा तत्तदुत्तमगुरुलाभे बहुभ्यो गुरुभ्यो वा सम्यगावर्तनीयम्, एवं श्रवणावृत्तिलब्धस्य वाक्यार्थग्रहणस्य स्थिरीकरणार्थं न्यायविचारात्मकयुक्त्यनुसन्धानं मननम्, न तु तदेव श्रवणम्, ततश्च विचारशास्त्रं मननविधिमूलं न श्रवणविधिमूलकमिति हि तव मर्यादा । तथा च निर्विशेषनिष्प्रपंचजीवाभेदादिपरवाक्यानामपि सगुणप्रपञ्चजीवभिन्नस्वाभिमतब्रह्मपरत्वमेव बोधयतां स्वाप्तानां गुरूणां सकाशाद्बहुधावर्तितश्रवणलब्धसकलवाक्यार्थावधारणः तदनुगुणप्रमाणस्वरूपतद्बलाबलव्यवस्थापकब्रह्मविचारशास्त्रेतिकर्तव्यतारूपतर्कशास्त्राभ्यासेन लब्धश्रवणसंवादः तदनन्तरं तदर्थमननसाधने श्रवणे प्रवर्तमानशिष्यः प्रत्यक्षादेस्तर्कशास्त्राभ्यासलब्धप्रमाणबलाबलस्याप्यनुगुणमनेकाप्तोपदिष्टन्तमर्थं परित्यज्य सर्वेषां वेदान्तवाक्यानां निर्विशेषजीवचिन्मात्रमेवार्थ इति सर्वविरुद्धमर्थं कथमाशङ्केत ? तदाशङ्कावकाशाभावे च कथं पूर्वपक्षोदयः ? शिष्यस्य प्रागवगतार्थेनुप्रतिबन्धुमशक्यतयोदेतुं योग्या शङ्कैव हि वादकथारूपे शास्त्रे पूर्वपक्षो नाम, अतोत्र शिष्यस्य प्राङ्निर्वृत्तेन श्रवणेनाङ्गविद्याभ्यासेनचाप्रतिबन्धुमशक्या शङ्का नोदेतुमर्हतीति तव मते नैवं पूर्वपक्षावकाशोस्तीति भावः ।

एवं परमर्यादया पूर्वपक्षस्य निरवकाशत्वमुक्तम्, हेत्वन्तरेणापि तदाह -

> श्रुत्यन्तानामखण्डो विषय इति च ते केन बोद्धव्यमेतन्न्यायैस्तादर्थ्यमेषां घटयदितिहदैरशास्त्रमेकत्र चेत्स्यात् ।
> तच्चेदङ्गीक्रियेत प्रतिहतविविध त्यगात्मैकनियम्
> कस्यानारम्भसिद्ध्यै प्रभवतु भवत पूर्वपक्षप्रयासः ॥

सर्वेषां वेदान्तानां निर्विशेषजीवस्वरूपरत्वं प्रबलन्यायैः प्रतिष्ठापयच्छास्त्रमिष्यते नवा ? नचेत्प्रत्यक्षादिविरुद्धं सविशेषत्वादिविषया-

नैकान्तरवाक्यकृतान्त.कलहप्रतिरुद्धं च तेषां तत्परत्वञ्च सिद्धचे-दिति तत्सिद्धिसापेक्षानारम्भपूर्वपक्षोत्थानं न स्यात्, इष्यतेचेत्तदारम्भ-मपेक्ष्य विषयाभावेन तदनारम्भस्समर्थ्यत इति व्याघातस्स्यादित्यर्थः ।

नन्वेवं वाचस्पतिविवरणकाराभिमतयोरपि आद्याधिकरणपूर्वपक्षयो-र्व्याघातस्स्यात्, वाचस्पतिमते हि प्रत्यगात्मन एव ब्रह्मत्वात् तस्य चाहमिति प्रकाशमानत्वात् लोकसिद्धस्य तस्य विचारार्थं शास्त्रमार-म्भणीयमिति पूर्वः पक्षः, विवरणकारमते तु प्रत्यग्ब्रह्मैक्यस्यैव विषयत्वे-नाभिमतत्वात् प्रत्यग्ब्रह्मणोश्च विरुद्धस्वभावयोरैक्यासिद्धेस्तद्विचारार्थं शास्त्रं नारम्भणीयमिति पूर्वः पक्षः, न च प्रत्यगात्मन एव ब्रह्मत्वं प्रत्यग्ब्रह्मणोरैक्यञ्च शास्त्रं विना सिद्ध्यति, येन व्याघातो न स्या दित्याशंक्याह—

सिद्धेऽसिद्धे च सिद्धान्त्यभिमतविषये दूषणं चेत् क्रियेत
न्यायापेक्षा न तस्योन्मिषति निजमतप्रक्रियार्थानुवादे ।
सिद्धान्त्यस्वीकृतेर्थे यदि तु विषयतापादन पूर्वपक्षे
कर्तव्य तदुपाय' कथमिव सुधिया तत्र नापेक्षणीय. ॥

प्रत्यगात्मन एव ब्रह्मतया विषयत्व प्रत्यग्ब्रह्मणोरैक्यस्य विष-यत्वं च सिद्धान्त्यभिमतमेवानूद्य तयोरेकस्य सिद्धत्वेनान्यस्यासिद्ध-त्वेन विषयत्वासम्भव इति तौ पूर्वपक्षौ प्रवृत्तौ, तत्र कुत' प्रत्यगा-त्मैव ब्रह्मेति वा प्रत्यग्ब्रह्मणोरैक्यमिति वा पूर्वपक्षिण प्रति सिद्धान्तिनो हेत्वाकाङ्क्षा न भवति, सिद्धान्त्यभिमतस्यैव तयोर्विषयत्वस्य पूर्व-पक्षेनूदितत्वात्, ततस्तत्र विषयोपपादकशास्त्रारम्भमनपेक्ष्य तदनारम्भ पूर्वपक्षप्रवृत्तेर्न व्याघात, त्वन्मतेतु निर्विशेषजीवचिन्मात्रं ब्रह्मेति सिद्धान्त्यनभिमत एवार्थे विषयत्वमापाद्य पूर्वपक्षप्रवृत्तिरिति तस्मिन्नर्थे सिद्धान्तिनो हेत्वाकाङ्क्षोदयेन तदुपपादकशास्त्रारम्भस्य त्वत्पूर्वपक्षेऽपेक्ष-णीयत्वाद्व्याघातो भवत्येवेति भाव ।

ननु सिद्धान्त्यनभिमतमर्थं पुरस्कृत्य शास्त्रानारम्भपूर्वपक्षे तदुपपादनाय शास्त्रारम्भोपेक्षित इति व्याघातश्चेत्, पूर्वमीमांसाद्याधिकरणपूर्वपक्षेपि व्याघातः स्यात्, स खल्वेवं प्रवृत्तः, अध्ययनविधिना विश्वजिन्न्यायाद्वेदाध्ययनस्य स्वर्गार्थतावबोधकेनार्थज्ञानेतरफलार्थत्वीयमानानां वेदानां विषनिर्हरणादिमन्त्राणामिवार्थविवक्षाग्राहकं प्रमाणमास्तीति वेदवाक्यान्यापाततोपरिपूर्णानुपपन्नार्थानि लक्षणानुषङ्गाध्याहारव्यवधानकल्पनाधिकार्थकल्पनादिभिरवश्यमुपपादनीयानीत्यत्र नियामकाभावादनुपपत्तिशङ्काकलुषितवेदार्थविचारात्मकशास्त्रमारम्भणीयमिति, तत्रापि स्वाध्यायाध्ययनस्य स्वर्गार्थत्वं सिद्धान्त्यनभिमतमेव पूर्वपक्षिणोपपाद्यमिति तदुपपादकविश्वजिन्न्यायादिप्रतिपादकशास्त्रारम्भापेक्षेत्याशङ्क्याह—

एवं वाक्यं विचार्यं यदि भवति नयो वापि सर्वत्र तुल्यः
तर्किंचिन्न्यायक्लृप्त्यानभिमतरचना युज्यते पूर्वपक्षे ।
सर्वेषामेव नानाविधनयनिकरानेकतात्पर्यसीम्नाम्
वेदान्तानां विमर्शाद्विपक्षविरचनात्वेकमीहेत शास्त्रम् ॥

धर्मजिज्ञासासूत्रे ध्ययनवाक्यमेकमेव विचार्यम्, तस्य सिद्धान्त्यभिमतदृष्टफलरूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसङ्गात् सर्वापेक्षितस्वर्गार्थत्वं वाच्यमिति शक्यं पूर्वपक्ष एव किंचिन्न्यायोपपादनमिति तदर्थं न शास्त्रारम्भापेक्षा, अध्ययनविधिद्वारा तदुपात्तानां सर्वेषामपि वेदवाक्यानां विचार्यत्वेपि तेषामविवक्षितार्थत्वे पूर्वपक्षोपपादनीये विषनिर्हरणादिवदन्यार्थनीयमानत्वमेक एव न्यायः, सोपि पूर्वपक्ष एव व्युत्पादयितुं शक्य इति तदर्थमपि न शास्त्रारम्भापेक्षा; इह तु त्वन्मते नैकमेव वेदान्तवाक्यं विषयः, तत्रैकस्य केनचिन्न्यायेन पूर्वपक्ष एव व्युत्पादितेन निर्विशेषजीवचिन्मात्रपरत्वसिद्धावपि वाक्यान्तराणां सगुणब्रह्मपरत्वानिवारणेन तद्विचारार्थं शास्त्रस्यारम्भ्यत्वप्रसङ्गात्;

नेकावान्तरवाक्यकृतान्त कलहप्रतिरुद्ध च तेषां तत्परत्वन्न सिद्धये-दिति तत्सिद्धिसापेक्षानारम्भपूर्वपक्षोत्थान न स्यात्, इष्यतेचेत्तदारम्भ-मपेक्ष्य विषयाभावेन तदनारम्भस्समर्थ्यत इति व्याघातस्स्यादित्यर्थः।

नन्वेव वाचस्पतिविवरणकाराभिमतयोरपि आद्याधिकरणपूर्वपक्षयो-र्व्याघातस्स्यात्, वाचस्पतिमते हि प्रत्यगात्मन एव ब्रह्मत्वात् तस्य चाहमिति प्रकाशमानत्वात् लोकसिद्धस्य तस्य विचारार्थं शास्त्रनार-म्भणीयमिति पूर्व पक्ष, विवरणकारमते तु प्रत्यग्ब्रह्मैक्यस्यैव विषयत्वे-नाभिमतत्वात् प्रत्यग्ब्रह्मणोश्च विरुद्धस्वभावयोरैक्यासिद्धेस्तद्विचारार्थं शास्त्र नारम्भणीयमिति पूर्व पक्ष, न च प्रत्यगात्मन एव ब्रह्मत्व *प्रत्यग्ब्रह्मणोरैक्यञ्च शास्त्र विना सिद्ध्यति, येन व्याघातो न स्या* दित्याशक्याह—

सिद्धेऽसिद्धे च सिद्धान्त्यभिमतविषये दूषण चेत् क्रियेत
न्यायापेक्षा न तस्योन्मिषति निजमतप्रक्रियार्थानुवादे ।
सिद्धान्त्यस्वीकृतेऽर्थे यदि तु विषयतापादन पूर्वपक्षे
कर्तव्य तद्ध्युपाय कथमिव सुधिया तत्र नापेक्षणीय ॥

प्रत्यगात्मन एव ब्रह्मतया विषयत्व प्रत्यग्ब्रह्मणोरैक्यस्य विष-यत्व च सिद्धान्त्यभिमतमेवानूद्य तयोरेकस्य सिद्धत्वेनान्यस्यासिद्ध-त्वेन विषयत्वासम्भव इति तौ पूर्वपक्षौ प्रवृत्तौ, तत्र कुत प्रत्यगा-त्मैव ब्रह्मेति वा प्रत्यग्ब्रह्मणोरैक्यमिति वा पूर्वपक्षिण प्रति सिद्धान्तिनो हेत्वाकाङ्क्षा न भवति, सिद्धान्त्यभिमतस्यैव तयोर्विषयत्वस्य पूर्व-पक्षेनूदितत्वात्, ततस्तत्र विषयोपपादकशास्त्रारम्भमनपेक्ष्य तदनारम्भ पूर्वपक्षप्रवृत्तेर्न व्याघात, त्वन्मतेतु निर्विशेषजीवचिन्मात्र ब्रह्मेति सिद्धान्त्यनभिमत एवार्थे विषयत्वमापाद्य पूर्वपक्षप्रवृत्तिरिति तस्मिन्नर्थे सिद्धान्तिनो हेत्वाकाङ्क्षोदयेन तदुपपादकशास्त्रारम्भस्य त्वत्पूर्वपक्षेऽपेक्ष णीयत्वाद्व्याघातो भवत्येवेति भाव ।

ननु सिद्धान्त्यनभिमतमर्थं पुरस्कृत्य शास्त्रानारम्भपूर्वपक्षे तदुपपादनाय शास्त्रारम्भोपेक्षित इति व्याघातश्चेत्, पूर्वमीमांसाद्याधिकरणपूर्वपक्षेपि व्याघातः स्यात्, स खल्वेवं प्रवृत्तः, अध्ययनविधिना विश्वजिन्न्यायाद्वेदाध्ययनस्य स्वर्गार्थतावबोधकेनार्थज्ञानेतरफलार्थत्वीयमानानां वेदानां विषनिर्हरणादिमन्त्राणामिवार्थविवक्षाग्राहकं प्रमाणमस्तीति वेदवाक्यान्यापाततोपरिपूर्णानुपपन्नार्थानि लक्षणानुषङ्गाध्याहारव्यवधानकल्पनाधिकार्थकल्पनादिभिरवश्यमुपपादनीयानीत्यत्र नियामकाभावादनुपपत्तिशङ्काकलुषितवेदार्थविचारात्मकशास्त्रन्नारम्भणीयमिति, तत्रापि स्वाध्यायाध्ययनस्य स्वर्गार्थत्वं सिद्धान्त्यनभिमतमेव पूर्वपक्षिणोपपाद्यमिति तदुपपादकविश्वजिन्न्यायादिप्रतिपादकशास्त्रारम्भापेक्षेत्याशङ्क्याह—

एवं वाक्यं विचार्यं यदि भवति नयो वापि सर्वत्र तुल्य
स्तत्किंचिन्नयायकल्प्यानभिमतरचना युज्यते पूर्वपक्षे ।
सर्वेषामेव नानाविधनयनिकरानेकतात्पर्यसीम्नाम्
वेदान्तानां विमर्शाद्विषयविरचनात्वेकमीहेत शास्त्रम् ॥

धर्मजिज्ञासासूत्रे अध्ययनवाक्यमेकमेव विचार्यम्, तस्य सिद्धान्त्यभिमतदृष्टफलरूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसङ्गात् सर्वापेक्षितस्वर्गार्थत्वं वाच्यमिति शक्यं पूर्वपक्ष एव किंचिन्नयायोपपादनमिति तदर्थं न शास्त्रारम्भापेक्षा, अध्ययनविधिद्वारा तदुपात्ताना सर्वेषामपि वेदवाक्याना विचार्यत्वेपि तेषामविवक्षितार्थत्वे पूर्वपक्षोपपादनीये विषनिर्हरणादिवदन्यार्थनीयमानत्वमेक एव न्यायः, सोपि पूर्वपक्ष एव व्युत्पादयितुं शक्य इति तदर्थमपि न शास्त्रारम्भापेक्षा; इह तु त्वन्मते नैकमेव वेदान्तवाक्यं विषयः, तस्यैकस्य केनचिन्नयायेन पूर्वपक्ष एव व्युत्पादितेन निर्विशेषजीवचिन्मात्रपरत्वसिद्धावपि वाक्यान्तराणां सगुणब्रह्मपरत्वानिवारणेन तद्विचारार्थं शास्त्रस्यारम्भत्वप्रसङ्गात्;

अतः पूर्वप्रक्रिया सर्वेषामेव वेदान्तानानिर्विशेषचिन्मात्रपरत्वव्यवस्थापनेन सिद्धान्त्यभिमते सगुणे ब्रह्मणि प्रमाणाभावात्तद्विचारार्थमपि शास्त्रमारम्भणीयमिति वाच्यम्, त्वदभिमत च, न च सर्वेषां वेदान्तानां निर्विशेषजीवचिन्मात्रपरत्वे सार्वत्रिक एको न्यायोस्ति, उपक्रमादीनां श्रुतिलिङ्गादीनां च परस्परबाध्यबाधकभावप्रकारशालिनां तत्र तत्र व्यवस्थितत्वात्, न च तेषां सर्वेषामेकस्मिन्नेवात्र पूर्वपक्षे व्युत्पादनं युक्तम्, तथा सति सर्वस्यापि शास्त्रस्यैकाधिकरण्यकल्पनाप्रसङ्गात्, तस्मात्तादतान्न्यायानां व्युत्पादकमेकं शास्त्रमिहापेक्षितमित्यत्रैव व्याघातो न धर्ममीमांसापूर्वपक्ष इति भावः ।

एतेन- वाचम्पतिपूर्वपक्षे प्रत्यगात्मन इदानीमहमिति प्रकाशमानं रूपमध्यासपरिनिष्पन्नम्, तदिह न विचार्यम्, किन्तु संसारदशायामनाविर्भूतन्निर्विशेषं तस्य तात्विकरूपमस्ति श्रुतिप्रसिद्धम्, तद्विचारार्थं शास्त्रारम्भ इति शङ्कावारणाय, विवरणकारपूर्वपक्षे प्रत्यग्ब्रह्मैक्यमप्रसिद्धम् तत्साधकश्रुतिसम्भवादिति शङ्कावारणाय च, बहूनानिर्विशेषवाक्यानामभेदवाक्यानां चान्यपरत्वं वक्तव्यमिति तदुपपादकशास्त्रारम्भापेक्षाया व्याघातस्स्यादित्यपि शङ्का निरस्ता, एकयैव प्रत्यक्षादिविरोधयुक्त्या तेषामन्यपरत्वकल्पनात् ।

स्यादेत्, अस्यैव शारीरकशास्त्रादन्यत् सर्वेषां वेदान्तानां निर्विशेषपरत्वव्युत्पादकं शास्त्रम्, तदवलोकनेनैवं पूर्वपक्षस्स्यादित्याशङ्क्याह —

तच्छास्त्रश्चेदतोन्यत्क्षणचरमतवत्कल्प्यते पूर्वसिद्ध
जीवन्तस्य स्वसिद्ध विषयमुपयतो हन्त तस्यैव सोस्तु ।
तेनैकार्थ्ये विरोधेप्यपसृतविषयं शङ्क्यते चेदिहेद
जीवासन्दिग्धतोक्तिं कथमिव घटनी पूर्वपक्षस्य ते स्यात् ॥

तस्य शास्त्रस्य स्वप्रकाशोपि जीवो विषय क्रियते चेत्; अस्यैव शास्त्रस्य विषयोस्तु. किमप्रसिद्धशास्त्रान्तरकल्पनया, तत्कल्पनया पूर्वपक्षसमर्थनेपि स्वप्रकाशस्य विषयत्वासम्भवयुक्तेर्यादृतत्वापरिहारात्, नन्वत्र स्वप्रकाशस्य विषयत्वासम्भवयुक्त्या नारम्भमिति न पूर्वपक्ष, किन्तु वेदान्ताना स्वप्रकाशचिन्मात्रपरत्वव्यवस्थापकन्ता यच्छास्त्रमस्ति, इदमपि तथाभूत चेत्तेन गतार्थम् सगुणब्रह्मविषयत्वव्यवस्थापकञ्चेत्तेन बाधितार्थमित्युभयथापि तदपहृतविषयत्वादिदमनारभ्य शास्त्रमिति, अतो न व्याघात इति चेत्, एव तर्हि जीवस्य स्वप्रकाशत्वेनासदिग्धत्वोक्ति पूर्वपक्षेनुपयुक्ता तद्विरुद्धा च स्यात्, तदेव हि त्वया पूर्वपक्षसमर्थनार्थमुक्तम्, कथ्य कणभुगादिशास्त्रेणाप्यपहृतविषयतयानारम्भे शङ्कितु शक्ये निर्विशेषशास्त्र एव तव पक्षपात ? समयपादे तत्सर्वं निराकर्तव्यमिति चेत्, इदमपि तथा, अनभिमत शास्त्रान्तरमस्तिचेत्तत्रैव निराकर्तव्य स्यात्, अनभिमततन्त्राणा सर्वेषामपि स्वातन्त्र्येण पृथक्पृथक्तत्रैव निराकरणात्, तस्मादनिराकरणादवसीयते इदमेव तच्छास्त्र नान्यदिति, तत्र निर्विशेषस्वरूपस्य वेदान्तविषयत्वे सति विचारशास्त्रविषयत्वासम्भव कुत इति प्रथमाक्षेप, सुखादिग्राहिणा साक्षिणा बाधितत्वाद्वेदान्ताना निर्विशेषस्वरूपे प्रामाण्यासम्भवात्तदवलम्बनेन पूर्वपक्षासम्भवो द्वितीय, शिष्यस्य श्रवणविरुद्धाक्षेपानुपपत्तिस्तृतीय, वेदान्तानामुपक्रमादिन्यायैर्निर्विशेषस्वरूपपरत्वस्य शास्त्रसापेक्षत्वाद्व्याघातश्चतुर्थ । तत्र प्रथमदोषस्तवापि समान, त्वयैव नीलकण्ठभाष्यटीकायामुपक्रमादिषड्विधतात्पर्यलिङ्गैरद्वैतवाक्याना द्वैतवाक्यात्प्राबल्येनैव पूर्वपक्षसमर्थनात्, एवन्तत्रापूर्वतयैवाद्वैतस्य वेदवेद्यत्वोपपादनात् कथन्तस्य विचाराविषयत्वासम्भव, प्रामाण्यपर्यन्ताक्षेपतात्पर्यकल्पनमपि पक्षद्वयसाधारणम्, तदनुपपत्तिरपि समाना, प्रमाणतर्केणैव पूर्वकाण्डेन वेदप्रामाण्यस्य सिद्धत्वादद्वैतस्य सर्वथा विषयत्वासम्भवे वेदान्ताना भेद एव तात्पर्यं स्यात्, अनधिगतत्वादपि समानम् ।

चतुर्थोपि दोषस्समान । नापि द्वितीय, सुखाद्यनुभवरूपो हि साक्षी, सुख्यहमिति सम्बन्धाशे भ्रम एव, सुखादेरन्त करणधर्मत्वात्, सुखादिस्वामित्वमपि परमात्मन एव, अतस्सम्बन्धाश इवान्यत्रापि भ्रमत्वसम्भवाद्वैतान्तैरद्वितीयप्रतिपादन सम्भवत्येवेति, एव पूर्वपक्षोत्थानसम्भवात् । न तृतीय, शास्त्रस्यैव वादकथारूपतया तदुपोद्घातरूपस्याप्य वादकथारूपत्वाभावेन शिष्यकृतशङ्कारूपत्वासिद्धेरिति ।

नीलकण्ठस्तु —

'परीक्ष्ये' त्यादि वाक्य विषय, तत्राय सशयक्रम — मुमुक्षूणा ब्रह्म विचारयोगीति सूत्रकृता समारभ्यमाणमिद शास्त्र प्रेक्षावत्कर्तृकारम्भविषयत्व योग्यन्नवेति प्रथमसशय, तदर्थमियचिन्ता — कृतधर्मविचारस्य धर्मानुष्ठानविशुद्धचित्तस्य धर्मविचाराधिगतमक्षय्यादिवाक्याना यथाश्रुतफल समर्पकत्व प्रबलन्यायान्तरेण प्रतिक्षिप्य ततो विरक्तस्य शमादि सम्पन्नस्य नित्यफलप्रेप्सया तत्साधन ब्रह्मज्ञानमिच्छतोधिकारिणो ब्रह्मविचारेण तज्ज्ञानसिद्ध्यर्थ विचाराङ्गगुरूपसदन परीक्ष्येत्यादिवाक्य विधातु शक्नोति नवेति, तदर्थमिय चिन्ता ब्रह्म विचारार्हन्न वेति, तदर्थमिय चिन्ता ब्रह्म विषयत्वयोग्य सप्रयोजनज्ञान च नवेति, तदर्थमिय चिन्ता अहमित्यनुभूयमानो जीव एव ब्रह्म उत तस्यैव ससारदशायामप्रकाशमान कर्तृत्वभोक्तृत्वादिप्रपचरहितनिर्विशेष रूपान्तर अथवा ततोन्यदिति । यदि जीवादन्यत्तदपि ब्रह्म परिच्छेद्यन्नवेति च । यदा जीव एव ब्रह्म तदा तस्याहमनुभवसिद्धत्वान्न विषयत्वयोग्यता, यदि तस्य निर्विशेष रूपान्तर ब्रह्म, यदि वा जीवादन्यदप्यपरिच्छेद्यम्, तदा तस्याशक्यप्रतिपादनत्वान्न विषयत्वयोग्यता, पक्षत्रयेपि न तस्य सप्रयोजनज्ञानता, अहमनुभवे शब्दात्कथचिन्निर्विशेषगोचरज्ञाने जीवान्यब्रह्मगोचरज्ञाने च सत्यपि ससारनिवृत्तिपूर्वकनित्यफलप्राप्तेरदर्

नात्, अनादिसंसारस्य दुरपह्नवत्वाच्च; यदा ब्रह्मणो न विषयत्वार्हत्वसप्रयोजनज्ञानत्वे; तदा न तस्य विचारार्हता, यदा न तस्य विचारार्हता; तदोदाहृतं वाक्यमुक्तमर्थं विधातुन्न शक्नोति, यदा न शक्नोति; तदा विचारस्याकर्तव्यत्त्वात्तदर्थमिदं शास्त्रमनारम्भणीयमिति पूर्वपक्षे फलफलिभावः । यदा जीवादन्यद्ब्रह्म परिच्छेद्यञ्च सप्रयोजनज्ञानं च, तदा विषयप्रयोजनवत्त्वेन ब्रह्मविचारस्य कर्तव्यत्वात् तदर्थमिदं शास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः । पूर्वपक्षस्तु- ब्रह्म विचारयोग्यन्न भवति, तत्र सन्देहाभावात्; अयमात्माब्रह्मेतिश्रुत्या जीव एव ब्रह्मेत्यवगमात्, तस्य चाहमनुभवसिद्धत्वात्; ननु सा श्रुतिर्जीवस्याहमनुभवसिद्धेन कर्तृत्वभोक्तृत्वाद्यनेकानर्थव्रातकलुषितेन रूपेण ब्रह्मभावन्न प्रतिपादयति, नित्यशुद्धत्वादिरूपब्रह्मशब्दार्थानुगमविरोधात्; किन्तु कर्तृत्वादिकल्पिताकाररहितेन निर्विशेषचैतन्यरूपेण, तत्तु संसारदशायामावृतन्न प्रकाशत इति तत्र सन्देहो घटत इति चेत्; उच्यते, अयमात्मा ब्रह्मेति श्रुतिर्जीवस्य यावद्रूपमहमनुभवे प्रकाशते तावद्युक्तमेव, तदिदंशब्देन परिगृह्य ब्रह्मेत्युपदिशति, तस्मिन् ब्रह्मशब्दार्थसाकल्येन न सम्भवतिचेत्; यावत् सम्भवति तावन्तमेव देवब्राह्मणत्वादिरूपमर्थमभिदधत्तत्र वर्तिष्यते, नच 'ध्यायतीवलेलायतीवे'-त्यादिश्रुतिभिर्जीवे कर्तृत्वादेरपारमार्थिकत्वप्रतिपादनाद्वस्तुतो निर्विशेषमेव जीवस्वरूपः, तदेव च ब्रह्म प्रतिपाद्यत इति वाच्यम्, करोमिभुञ्जइत्यादिप्रत्यक्षविरुद्धानां तासां श्रुतीनां जीवस्य कर्माद्यधीनकर्तृत्वादिमत्तया तत्पारतन्त्र्यमात्रपरत्वात्; अस्तुवा निर्विशेषस्वरूपं जीवः; तथापि तद्विचारस्य फलन्तद्विषयं ज्ञानम्, ज्ञानञ्च ज्ञेयपरिच्छेदः, वेदान्तविचारजन्यं ज्ञानं ब्रह्म इदमित्थमिति प्रकारविशेषविशिष्टतया विषयीकरोति न वा? आद्ये निर्विशेषत्वभङ्गप्रसङ्गः, अन्त्ये यथावन्न प्रकाशेत, तथा च 'आकाशस्तल्लिङ्गादि'त्याद्यधिकरणेष्वाकाशो ब्रह्म

जगत्कारणत्वादित्याद्यनुमानमभवन्निर्णये ब्रह्मण आकाशादिपदोक्तस्य ब्रह्मत्वरूपसाध्यविशिष्टतया जगत्कारणत्वहेतुविशिष्टतया च विषयता न स्यात्। किं बहुना' शब्देनापि प्रतिपादनासम्भवात् 'अयमात्माब्रह्मे' ति श्रुत्या सविशेषमेव जीवस्वरूपं ब्रह्मतया प्रतिपाद्यत इति तस्याह-मनुभवसिद्धस्य न विचारशास्त्रविषयता। नन्वेवमपि 'अन्नं ब्रह्मे' त्यादे-रपि श्रवणात्किमन्नादिकं मुमुक्षुवेद्यत्वाभिमतं ब्रह्म जीवो वेति सन्देह एव स्यान्न निश्चय, 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायत' इत्यादि-श्रुतिषु ब्रह्मणोऽन्नादिभ्यो भेदश्रवणादुक्तान्नादिकं ब्रह्म न भवति चेत्; 'य आत्मनि तिष्ठन्नि' त्यादिश्रुतिषु तस्य जीवादपि भेदश्रवणात् सोपि ब्रह्म न स्यादिति वाच्यम्; प्रतिवेदान्त 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्मे' त्यादिजीवब्रह्माभेदवाक्यानां षड्विध-तात्पर्यलिङ्गोपेततयान्नादिश्रुतिभ्यो जीवब्रह्मभेदश्रुतिभ्यश्च बलवत्त्वा-वधारणेन जीव एव ब्रह्मेति ततो निश्चयसम्भवात्। अस्तु वा भेदश्रवणात् ब्रह्म जीववर्गादन्यत्, तथापि तत्कारणत्वनियन्तृत्वादिगुणक-मभ्युपगन्तव्यम्, तदा तदपरिच्छेद्यमित्यपि, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यादि-श्रवणात्; एवञ्च विचारजन्यज्ञानं ब्रह्म यथावत्परिच्छिद्य गृह्णाति चेत् तस्यापरिच्छेद्यत्वभङ्गप्रसङ्ग, नचेदयमितिगृह्यमाणस्फीतालोकमध्य-वर्तिघटवद्यथावन्न प्रकाशेतेति मोक्षजनकत्वाभिमतं ब्रह्मज्ञानन्न समर्थितं स्यात्; 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वत। ततो मान्त-त्वतो ज्ञात्वा विशते तदनन्तर' मिति यथावद्ब्रह्मज्ञानस्यैव मोक्ष-साधनत्वावगमात्। किंच प्रयोजनं च न किंचित्पश्याम., यदि ब्रह्मज्ञानात्किंचित्प्रयोजनमभविष्यत् तदा अहमनुभवरूपाद्वेदान्तजन्याद्वा तद्ज्ञानाज्जायमानन्तदिदानीमद्रक्ष्याम, अतो ज्ञायते न प्रसिद्धजीव-रूपस्य निर्विशेषजीवरूपस्य तदन्यस्य वा ब्रह्मण· परिज्ञानात्किंचि-त्प्रयोजनमस्तीति। नचेदानीन्तनब्रह्मज्ञानमात्रन्न प्रयोजनम्,

किन्तु श्रवणमननानन्तरमुपासनाजन्यतत्साक्षात्कारात् , न चेदानीं सोस्तीति वाच्यम् , तथापि सप्रयोजनत्वानिर्वाहात् ; संसारनिवृत्तिपूर्विका हि निरतिशयानन्दावाप्तिः प्रयोजनमिहेष्यते , संसारनिवृत्तिश्च सकलानर्थव्रातमूलसकलजीवावारकैकद्रव्यरूपमलाख्यानादिसिद्धपाशनिवृत्तिरित्यभ्युपगम्यते ; नचानादेर्द्रव्यस्य ज्ञानमात्रान्निवृत्तिस्सर्वजीवगतानर्थनिदानस्यैकपुरुषमोक्षकारणान्निवृत्तिश्च भवति ; तस्माद्विषयप्रयोजनासम्भवान्नेदं शास्त्रमारम्भणीयमिति ।

सिद्धान्तस्तु - सर्वथा समारम्भणीयमिदं शास्त्रम् , ब्रह्मणस्सन्दिग्धत्वेन सप्रयोजनज्ञानत्वेन च विचारार्हत्वात् ; न च 'अयमात्मा ब्रह्मे' त्यादिश्रुत्या जीवस्यैव ब्रह्मत्वावेदनात् संशयासम्भवेन विषयत्वमेव तस्यानुपपन्नमिति वाच्यम् , 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'अनीशश्चात्मा बध्यते भोक्तृभावात्' 'आत्माप्यनीशस्सुखदुःखहेतोः' 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' - 'य आत्मा अपहतपाप्मा' 'यतो वा इमानि भूतानि जायन्ते' 'तोयेन जीवान्व्यससर्ज भूम्या' मित्यादिश्रुत्या जीवब्रह्मणोरत्यन्तवैलक्षण्यस्याप्यावेदनेन वचनद्वयतात्पर्यानवधारणदशायां संशयसम्भवात् ; ब्रह्मस्वजीवत्वस्वरूपपर्यालोचनायांनिरस्तसमस्तोपप्लवकलङ्कनिरतिशयानन्दादि — शक्तिमहिमातिशयवत्वरूपतया ब्रह्मत्वस्य जीवत्वस्य त्वनाद्यज्ञानवासनाचष्टम्भविजृम्भितविचित्रकर्मफलभोगानुगुणबहुशरीरप्रवेशनिर्गमनव्यापारपरवशनिस्समतापसहिष्णुत्वरूपतया तयोरत्यन्तविरुद्धधर्मत्वावसायेन उदाहृतश्रुतिद्वैरप्यसत्त्वेन्च संशयत्वस्यसम्भवात् । किंच 'अन्नं ब्रह्म' 'मनो ब्रह्म' 'विज्ञानं ब्रह्म' 'आदित्यो ब्रह्मे' त्यादिश्रुत्या 'तत्वमसि' 'अहं ब्रह्मास्मी' ति श्रुत्या तत्त्वंपदार्थयोरिवान्नादीनां ब्रह्मणश्चाभेदावेदनात् किमत्र तत्वमिति संशयस्यावर्जनीयत्वात् । ननु षड्विधतात्पर्यलिङ्गोपेतत्वात् 'तत्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' 'प्रज्ञा-

न ब्रह्मे' त्यादिश्रुतय एव तात्विकाभेदपरा, नत्वन्नादिश्रुतयो न जीवब्रह्माभेदश्रुतय इति चेत्, तर्हि प्रतिवेदान्तमुपक्रमोपसहारादिभि स्तात्पर्यनिर्णयो महता विचारेण साध्य इति तदर्थं विचारशास्त्र मारम्भणीयमेव स्यात् । यदुक्तम् - ज्ञेयपरिच्छेदरूपत्वात् ज्ञानस्य त परिच्छिन्नब्रह्मविषयत्वञ्च सम्भवतीति, तन्न, ईदृगिदमितिब्रह्मण पा च्छेदासम्भवेपि लक्षणमुखेनेतरव्यावृत्ततामात्रेण परिच्छेदसम्भवात् ननु ब्रह्मणस्सर्वात्मना परिच्छेद्यत्वाभावे 'वेदान्तविज्ञानसुनिश्चितार्था 'भक्त्या मामभिजानाती' तिश्रुतिस्मृतिभ्या सर्वात्मना ब्रह्मपरिच्छे रूपेण ज्ञानेन प्राप्यतया वर्णितं प्रयोजन न सिद्ध्येदिति चेत्, न इतरव्यावृत्तत्वपरिच्छेदमात्रावलम्बनेन श्रवणमननयो एककविद्योपसहार्य गुणमात्रावगत्या निदिध्यासनस्य च निवृत्तौ साक्षात्कारकाले सर्वात्मन परिच्छेद्यत्वसम्भवादपरिच्छेद्यत्वश्रुतीना 'यतोवाचोनिवर्तन्त' इत्यादि श्रुत्यन्तरानुसारेण मनोवागतीतत्वविषयत्वात्, न साक्षात्कारकाले ब्रह मनसा तद्गुणेयत्तादिप्रतिपादकशब्देन वा परिच्छिद्यते, किन्तु निवृत्ता वरणेन सर्वत प्रसृतेन स्वाभाविकज्ञानेनैव । न च प्रयोजनाभावेन शास्त्रस्यानारम्भणीयता, 'ब्रह्मविदाप्नोति पर' 'ज्ञात्वा शिव शान्ति मत्यन्तमेति' 'ईशन्त ज्ञात्वा अमृता भवन्ति' 'तमक्रतु पश्यति वीतशोको धातु प्रसादान्महिमानमीशम्' 'आत्मानमरणिं कृत्वा प्रण वञ्चोत्तरारणिम् । ध्याननिर्मथनादेव पाश दहति पण्डित' 'ज्ञात्वा देव मुच्यते सर्वपाशै' इत्यादिश्रुत्यनुसारेण तदुपासनयास्याधि कारिण पाशविच्छेदलक्षणमोक्षरूपप्रयोजनसत्वात् इदानीं तादृशशिवो पासनाविरहेण तादृशमोक्षानुदयेपि तदनन्तर तादृशमोक्षोदयानपायात् । अत एवानादेर्ननिवर्तत इति दूषणस्य नावकाश, निवृत्तौ प्रमाण सद्भावो हि निवृत्त्यभ्युपगमे तन्त्रम्, न तु सादित्वमनादित्व वा । यदुक्त ---- अनमाश्रितत्वे सर्वजीवगतानर्थनिदानस्य एकपुरुषमोक्ष

कारणनिवृत्तिश्च न सम्भवतीति ; तन्न, तत्तन्मुच्यमानजीवावरणभूतानां मलशक्तीनामेव निवृत्त्यभ्युपगमात्, श्रवणमनननिदिध्यासनसाक्षात्कारैरुपचीयमानगत्युपबृंहितैः प्रसन्नस्य शिवस्यैव मोचकत्वाभ्युपगमेन तस्य दृढनिवर्तकसम्भवाच्च । नच 'अथातोब्रह्मजिज्ञासे' ति सूत्रे शास्त्रारम्भणीयत्वप्रयोजकविषयप्रयोजनसद्भावरूपहेत्वनुक्तेः कथन्तत्सद्भावेन शास्त्रानारम्भणीयत्वपूर्वपक्षनिरसनमुपपद्यत इति वाच्यम्, कण्ठतस्तादृशहेतुसद्भावानुक्तावपि ब्रह्मणो जिज्ञासाकर्मत्वप्रतिपादकब्रह्मजिज्ञासापदेन तत्सूचनादिति ।

इतरे तु— 'अथातो ब्रह्मजिज्ञासा ।' अथ शब्दोयमारम्भार्थः, सिद्धारम्भस्यैव शास्त्रस्य स्वसाध्यार्थसाधकत्वात् । अतश्शब्दो हेतुपरः, स च न्यायवशसन्निहितशास्त्रप्रक्रमप्रयोजकमात्रपरामर्शी । ब्रह्मजिज्ञासा — सर्वज्ञस्यापि यतस्सर्वदवसूत्रमन्तरा न पूर्यते— न फलपर्यवसायिनी, अत इत्यर्थः । ब्रह्मेति तन्त्राभिप्रायम् । ब्रह्मणः - कर्तरि षष्ठी, ब्राह्मणस्य । ब्रह्मणा - करणे तृतीया, सन्यासेन । ब्रह्मणा- पूर्ववत् तृतीया, वेदान्तेन । ब्रह्मणः - कर्मणि षष्ठी, परमात्मनः । ब्रह्मणे - तादर्थ्ये चतुर्थी, ब्रह्मप्राप्तये । ब्रह्मणा - इत्थंभावे तृतीया, स्वस्यैव ब्रह्मत्वेन । जिज्ञासा - ज्ञानेच्छा । सा च सर्वार्थैरन्वेति । अत्र ब्रह्मपदे नैकशेषः, एकविभक्तिपरत्वाभावात् । अतो ब्रह्मजिज्ञासापदानि षडुत्पाद्य वृत्तिविभक्त्या ब्रह्मजिज्ञासा पदएवैकशेषः । जातावेकवचनं छान्दसम्, पूर्वसवर्णोवा । किमारभ्यतइत्याकाङ्क्षायां प्रस्तावाद्ब्रह्मसूत्रमित्युपतिष्ठते । तदयं सौत्रवाक्यार्थः परिनिष्पन्नः; 'ब्राह्मणस्य प्रवृत्ता वेदान्तेन ब्रह्मप्राप्तये ब्रह्मत्वेन सन्यासेन स्वस्य ब्रह्मकर्मकज्ञानेच्छा यतस्सूत्रं विना न फलपर्यवसायिनी अतस्सूत्रमारभ्यते' इति ।

अत्रेत्थमधिकरणशरीरम्। वेदान्तार्थं किं सूत्रमन्तरेण ज्ञातुं शक्य? उत नेति संशय। साङ्गवेदाद्ध्ययनादेवार्थस्य सुज्ञानत्वात् सूत्रमन्तरेण वेदान्तार्थो ज्ञातुं शक्य इति पूर्वपक्ष। सिद्धान्तस्तु उक्तज्याकृत्यादिपारगमनस्याल्पिष्ठज्ञानक्रियायुक्तपोयोगवीर्यादिमत्पुरुषमात्रा-शक्यत्वात् न्यायेनैव ज्ञातव्यत्वात् सूत्रमन्तरेण वेदान्तार्थो न ज्ञातुं शक्य इति। ननु अत्र ब्रह्मेति तन्त्राभिप्रायमित्यनुपपन्नमिवाभाति, ब्रह्मपदेनानेकेषामर्थानामुपस्थितो वाच क्रमवर्तितया तस्मादनेकासां विभक्तीनां युगपदुत्पत्त्यसम्भवात् क्रमेणोत्पत्तौ द्वितीयादेर्विभक्त्यन्ता-दुत्पत्तिप्रसङ्गाच्च एकस्या एव विभक्तेरुत्पत्तेर्वाच्यतया विभक्त्यन्तरा-र्थानामिहोपस्थित्यसम्भवात् उत्पन्नविभक्त्यर्थेन तन्निवतानां सर्वेषामर्थाना-मन्वयप्रसङ्गात्, प्रातिपदिकार्थविभक्त्यर्थत्वयोरविशेषेण युगपत्सर्वविभ-क्त्युत्पत्तावपि उक्तदोषानतिवृत्तेश्चेत्याशङ्क्य 'हलन्त्य' मितिसूत्रइवेह शब्दतन्त्रता विवक्षिता नार्थतन्त्रतेत्यभिप्रायेणाह 'अतो ब्रह्मजिज्ञासा पदानी' ति। शब्दतन्त्रत्व ह्यनेकशब्दानुकरणरूपता, अन्यानिरुक्ते, अनुकार्यं चानुकरणस्यार्थं। स च वाक्यार्थान्वयी। एवचेहापि शब्दा-नामनुकार्याणां वाक्यार्थान्यवप्रसङ्ग। 'हलन्त्य' मित्यत्राप्यय प्रसङ्ग-स्समान इत्यत्राह 'उत्पाद्ये' ति। उत्पादनमुन्नयनम्। उन्नायकञ्च प्रयोजनगौरवम्। इदमेव शब्दतन्त्रस्थले सर्वत्र विवक्षितम्। इदमेव 'हलन्त्य' मित्यत्रापीतिभाव। अत्र ब्रह्मपदे तन्त्रन्यायेनानेकता, जिज्ञसापदे तु प्रत्यर्थं शब्दनिवेश इति न्यायेनेति।

अत्र पक्षचतुष्टयेपि ब्रह्मजिज्ञासापदेन ब्रह्मणो विषयत्वमर्तीते स्तत्समर्थनार्थसिद्धान्तन्याय तत्र विवक्षित इत्युच्यते। स्पष्टमेव हेतुभावसमर्पके अतश्शब्दे जाग्रति धर्मिनिर्देशकेन न्यायसूचन जघ न्यमेव। अतोथातश्शब्दाभ्यां सिद्धान्तयुक्तिसूचनं यथा सम्भवति

तथैव पूर्वपक्षराद्धान्तौ वक्तव्यौ । सम्भवति चाधिकारासम्भवादारम्भाक्षेपे कर्मविचारसमर्पणपरेणाथशब्देनाधिकारसम्भवरूपसिद्धान्तहेतूपस्थापनम्, सम्भवति चाथशब्दोपस्थापितस्य वृत्तस्य हेतुभावोपस्थापकेऽतश्शब्दे ऽथशब्दार्थहेतुभावापेक्षितवेदार्थापातप्रतीतिरूपविशिष्टार्थाधिकारैकदेश — तात्पर्यम्, सम्भवति चापातप्रतीतितात्पर्यके सिद्धेव्युत्पत्तितात्पर्यम्, शास्त्रादावेव । अथातो धर्मजिज्ञासेति शास्त्रमात्रं प्रत्यापातप्रतीतेः पूर्ववृत्तत्वमुक्तम्, तेनाथशब्देनोत्तरभागासाधारणपूर्ववृत्तमेव निर्दिष्टम्, सङ्गतिप्रदर्शनार्थञ्च तावन्मात्रनिर्देशः । अतश्शब्देन तु हेतुभावमुपस्थापयता तत्प्रसिद्धये विशिष्टाधिकारस्सूच्यते । युज्यते च कृत्स्नशास्त्रपूर्ववृत्ततया बुद्धिस्थाया आपातप्रतीतेरतश्शब्देन विवक्षा । यदि कर्मविचारानन्तर्यप्रद्वेषः, तदानीमपि स्वाभिमतार्थानन्तर्यव्युत्पादनेनाधिकारसमर्थनपरत्वमेव सूत्रस्यास्थेयम्, न तु विषयसमर्थनपरत्वम्, अतश्शब्देन तद्धेतो रसूचनात् । वेदान्तेषु कोऽर्थः प्रतिपाद्यते? किमद्वैतम्? उत द्वैतम्? द्वैतेपि ब्रह्म कीदृशम्? तद्ज्ञानस्य च किं फलम्? मोक्षफलत्वे मोक्षः कीदृशः? इत्येवमादिरूपेण परस्परविरुद्धभेदाभेदादिवाक्यश्रवणेन सन्दिहानोऽधिकारी जिज्ञासते, तदनुजिघृक्षया च शास्त्रारम्भः । एवं च द्वैताद्वैतान्यतरादिनिर्णयार्थं प्रवर्तमानमिदं शास्त्रमनारम्भणीयमित्याक्षेप एव पूर्वपक्षे कर्तुमुचितः, न तु शास्त्रस्यार्थविशेषनिष्ठत्वं सिद्धवत्कृत्याक्षेपः । अयमाद्यपक्षद्वयसाधारणो दोषः ।

तत्र नाद्यः, एवं हि तत्र तात्पर्यम्; प्रत्यग्ब्रह्मैक्यमेव उपनिषदामर्थ इति निर्धार्य खलु भवद्भिरद्वैतगोचरमीमांसा प्रवर्त्यते, तदेव तु प्रत्यग्ब्रह्मैक्यमसम्भवि, अत एवमर्था मीमांसा नारम्भणीयैवेति प्रसक्तस्थितं कश्चित्प्रत्यनेन सूत्रेण मीमांसाया आरम्भणीयत्वमाचार्येण समर्थ्यत इति; तन्न, प्रत्यग्ब्रह्मैक्यस्यापरमार्थतया तत्रोपनिषदामाचा-

र्यन्य च तात्पर्यासिद्धे, आत्मपदं विहाय जिज्ञास्यं वस्तु अनवधिकातिशयासङ्ख्येयकल्याणगुणगणविभूतिवैशिष्ट्यप्रतिपादकेन ब्रह्मपदेन उपस्थापयताचार्यः जीवब्रह्मभेदस्य ब्रह्मणस्सविशेषत्वस्य च वेदान्तार्थता स्वाभिमतता च स्पष्टमाविष्करोति। किंचाचार्यस्याद्वैततात्पर्यबुद्धावपि अद्वैतस्यासम्भवेपि कथं कारणविषयचिन्तानारम्भः? ननु अत्र विचार्यमाणं कारणत्वमुपादानत्वम्, तच्च न ब्रह्मणि सम्भवति, निर्विकारत्वात्, सिद्धे चाद्वैते विवर्ताधिष्ठानत्वरूपोपादानत्वस्य ब्रह्मणि सम्भवात् सद्विद्यादिकारणवाक्येषु किं प्रधानं जगत्कारणतया प्रतिपाद्यते उत ब्रह्मेति विचारप्रवृत्तिस्सम्भवतीति अद्वैतमेवाक्षिप्य समर्थ्यत इति चेत्, न, अद्वैतसिद्धावपि विवर्ताधिष्ठानत्वस्य अनुपादानत्वरूपत्वात् पारिणामिकोपादानत्वाश्रयणे अद्वैतासिद्धावपि ब्रह्मणो धर्मान्तरमादाय पारिणामिकोपादानत्वसम्भवेन पूर्वपक्षस्यानिराकरणीयत्वेन[1] तादृशपूर्वपक्षोन्नयनस्यानुचितत्वात्। किञ्च प्रत्यग्ब्रह्मैक्यसत्त्वेऽसत्त्वेपि वा प्रत्यग्ब्रह्मैक्यस्य विचार्यता कथमिह सिद्धवत् क्रियते? ब्रह्मणश्चेदचिद्भेदस्यैव शास्त्रे प्रतिपिपादयिषितत्वात्, स तु भेदः स्वाभाविको वा औपाधिको वेत्येव विवादः, यद्यैक्यं परमार्थं, तदा औपाधिकभेदविषयं शास्त्रम्, यदि भेदः परमार्थः, तदा स्वाभाविकभेदविषयं शास्त्रमित्येतावदेव, ततश्च इह प्रतिपाद्यस्य भेदस्य स्वाभाविकौपाधिकभेदत्वविचारः पृथगेव कार्यः, अयं विचारस्तु भेदगोचर एव। प्रयोजनाक्षेपोप्यनुपपन्नः, मानाभावेन हेत्वसिद्धेः। ज्ञानेनाज्ञाननिवृत्तिमित्यनुभवो यद्यस्ति, तदा स प्रातिभासिकसुखानुभवपरोक्षसाधारण इति न तेन तत्सिद्धिः, तत्सिद्धावपि कुतस्तन्मात्रनिवर्तकता? न हि निरुक्तोनुभवः इतरनिवर्त्यत्वाभावमपि विषयीकरोति। अतोयमनुभवो वेदान्तप्रतिपाद्यज्ञानाद्बन्धनिवृत्ति

---

१– निवारणीयतया – पा

न बाधितुं क्षमत इति नोक्तरीत्या प्रयोजनाक्षेपो युक्तः । एवं पूर्वपक्षन्यायानां आभासत्वात्तन्न्यायाङ्गीकारेण राद्धान्तश्चानुपपन्नः । प्रपञ्चमिथ्यात्वस्य सिद्धान्तयुक्तेः केनापि सौत्रपदेनानाघ्राणस्य प्रागेवाभिधानाच्च । मिथ्यात्वं च वेदान्तविजये निरस्तमेव ।

द्वितीये सिद्धान्तस्य बृपलोद्वाहमन्त्रता स्पष्टैव , अहमनुभवे कर्तृत्वादेर्मानेपि स्वरूपमानस्यावैकल्यात् ; अतएवावरणासम्भवाच्च । ननु प्रकाशमानेप्यज्ञानावरणमस्त्येव, अत एव प्रत्यक्षेण भासमानेपि चन्द्रे कश्चन्द्र इति प्रश्न इति चेत् ; तत्राज्ञानावरणं किमर्थं कल्प्यते , किं ज्ञानस्य जिज्ञासाविरोधित्वात् ज्ञानाभावार्थम् ? उत ज्ञाने सत्यपि जिज्ञासोन्मेषाय ? नाद्यः, असम्भवादनङ्गीकाराच्च ; अस्त्येव ज्ञानम् , तदनवधारणमेव अवधारणाभावः आवरणादेवेति चेत्; एवमप्यनभ्यासदशापन्नजलानवधारणे इदं जलमितिवत् चन्द्रानवधारणेनापि अयं चन्द्र इति व्यवहारो दुर्निवारः , प्रकृते चाज्ञानेनावधारणस्वरूपनिवृत्तिरनुपपन्नतादृशब्रह्मस्वरूपप्रतिबन्धः अनुत्पन्नानवधारणरूपब्रह्मस्वरूपोत्पादो वा न सम्भवति, ब्रह्मणोऽनाद्यनन्तत्वात् । न द्वितीयः , तत्र ज्ञाने सत्यपि जिज्ञासाहेतुतयाऽदृष्टादिकमेव किञ्चिदङ्गीक्रियताम् ; यदि ज्ञानसत्त्वेन प्रतिबन्धकाभावासिद्ध्या प्रश्नासम्भवात् प्रश्नदर्शनाच्च प्रतिबन्धकाभावबोधकेनाज्ञानपदेनाप्रसिद्धस्य कस्यचिद्व्यवहारमात्रात् प्रतिबन्धकाभावाधीनं कार्यं भवतीत्याभिमानः , तर्ह्यदृष्टादिकमेव सम्प्रतिपन्नं यत्किंचिदज्ञानपदेन व्यवह्रियताम् । वस्तुतस्तु प्रकृष्टप्रकाशत्वावच्छेदेन चन्द्रपदवाच्यत्वज्ञानवतस्तादृग्जिज्ञासाद्यदर्शनात् प्रकृष्टप्रकाशश्चन्द्र इत्युपदेशेन स्वरूपनिर्धारणानन्तरमपि 'कस्सोम' इति प्रश्नदर्शनाच्च प्रकृष्टप्रकाशावच्छेदेन चन्द्रशब्दवाच्यताज्ञानाभावाद्वाच्यताविषय एव प्रश्नः । किञ्चाशनायाद्यतीतशुद्धस्वरूपं वेदान्तवेद्यमहंप्रत्ययेन भातीत्यत्र किं कर्तृत्वादिविशिष्टतयैव भाति उत स्वरूपमात्रमिति विवक्षितम् ? उत विशिष्ट-

प्रतीतो स्वरूप न भातीति, नाद्य, स्वरूपस्य ज्ञातत्वादेव संशयप्रयोजनयो रसमर्थनात्, न हि पुरुषनिश्चये सत्यपि रूपादिज्ञान तत्र पुरुषसंशय जनयेदिति बुद्धि कस्यापि सम्भवति । न द्वितीय, असिद्धे, अन्यथा हि विशिष्टप्रतीतित्वभङ्ग, परस्पराध्यासवर्णनानुपपत्तिश्च । किंचित्स्वरूप भासते किञ्चिन्न भासत इति त्वदीये निर्विशेषे निरवयवे ब्रह्मणि न शङ्कासम्भव । ननु प्रकाशत एव स्वरूप अतो न भातीत्यनेना ज्ञानावरणमेव विवक्षितमितिचेत्, किन्तत ? न हि प्रकाशे विद्यमा नेपि प्रकाशाभावबोधकपदेन यस्य कस्यचित्पारिभाषिकस्य व्यवहारमात्रात् तेन प्रकाशाभावकार्यसम्भव, तथा सति चतुरङ्गक्रीडोपकरणेषु राजादि पारिभाषामात्रात् तैरेव राज्यपरिपालनादिप्रसङ्गात् । अनाद्यनन्तप्रका शस्य प्रतिबन्धनाशयो करणनिरपेक्षतया तत्सन्निकर्षप्रतिबन्धनाशयो श्चासम्भव स्पष्ट एव । नास्ति न प्रकाशत इति व्यवहारो नावरणम्, तस्यावरणकार्यत्वस्यैव वाच्यत्वात् । अत एव तद्योग्यताऽऽवरणमित्युच्यत इति चेत् किं प्रकाशमानेपि नास्ति न प्रकाशत इति व्यवहाराय प्रकाशाभाव करणापाटव विप्रलम्भबुद्धिर्वा आपाद्यते ? तत्राद्यस्यासम्भ वेनेतरयो पारिशेष्यात्र ताभ्या संशयोपपादनसम्भव । प्रकाशे सत्यपि तत्कार्यप्रतिबन्ध एवावरणमित्यपि न, अहमिति व्यवहारस्य विशिष्ट विषयत्वाभावप्रसङ्गा । स्वरूपमात्रगोचरव्यवहाररूप कार्यं प्रतिबद्ध्यत इति चेत्, न त दनुत्पत्त्यग्रहणादेव व्यवहाराभावोपपत्त्या तस्या वरणरूपत्वकल्पनानुपपत्ते । न च संशयोत्पादनमेवावरणम्, प्रकाशा भावादिकोटिस्मरणादिमुखेन संशयोत्पादकत्वस्यासम्भवात्, दोषत्वेन संशयोत्पादकत्वमपि प्रकाशप्रतिरोधमन्तरेण कथमुपपद्यते ? प्रकाशे सत्यपि संशयोत्पत्तावपि ज्ञानस्य सिद्धत्वे न जिज्ञासासम्भव इति विचाराप्रयोजक- संशयोपपादन व्यर्थमेव । किञ्च अशनायाद्यतीतरूपान्तरेण ब्रह्मणैक्य किमर्थमुच्यते ? न तु जीवेनैव ? अशनायाद्यतीतस्य ब्रह्मणस्तत्परवशेनैक्या

सम्भवादितिचेत् ; कथन्तर्हि जीवस्याशनायाद्यतीतं रूपान्तरमित्युच्यते । न हि तत्र षष्ठ्यर्थो मुख्यः, अद्वैतभङ्गात् ; उपचारे च जीवाभिन्नमशनायाद्यतीतरूपमितिस्यात् । अस्य स्वरूपस्य जीवाभेदसम्भवे ब्रह्मणः कथं तदसम्भवः ? अपि च - अशनायाद्यतीतत्वं किन्तेषां मिथ्यात्वेन तुल्यसत्ताकत्वाभावात् ? उत मिथ्याभूतैरप्यशनायादिभिरस्पर्शनात् ? नाद्यः, तावता रूपान्तरत्वासिद्धेः ; न द्वितीयः, असिद्धेरेव । किञ्च - जीवस्य अशनायाद्यतीतं रूपं अस्ति न वेति संशयो वाच्यः । तत्र स्वरूपांशे सन्देहाभावादशनायाद्यतीतत्वांशे संशयः पर्यवसितः । सोप्यनुपपन्नः, आमोक्षं जीवस्य तत्पारवश्यश्रवणात् । तथा च अशनायादीनां सत्यत्वसन्देह एवोक्त स्यादिति प्रपञ्चमिथ्यात्वसन्देह एव पर्यवसानात्तस्येम जिज्ञास्यता स्यात्, ब्रह्मणि सन्देहाभावान्न तस्य जिज्ञास्यता ।

तृतीयोपि पूर्वपक्षोऽनुपपन्नः । तत्र हि वेदान्तानां जीवब्रह्मैक्यपरत्वं मिथ्यावाद्युक्तरीत्या निश्चित्य शास्त्रानारम्भ उपपादितः ।

तत्राद्वैतस्य सिद्धत्वे न वेदान्तस्य गोचरः ।
सिद्धोपि यदि वेदान्तगोचरस्तर्हि गोचरः ॥
विचारस्य कथन्न स्याददैतेध न सिद्धता ।
नितान्तन्तु विचारस्य गोचरः स्यादथाविधिः ॥
अद्वैतवाक्यनिचयः कर्मशेषो भवेत्तदा ।
निष्प्रत्यूहैर्भेदवाक्यैस्तथा भेदस्सुनिश्चितः ।
अद्वैतं यदि वेदान्तमन्तरेण विचारतः ।
सिद्धयेद्विचारतः प्राग्वत्तत्संशयो न कथं भवेत् ॥

सिद्धान्तोप्यनुपपन्नः । सर्वेषां वेदान्तानां निर्विशेषजीवचैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्य उक्तस्य पूर्वपक्षस्य निरासाय विचारविधि-

वाक्यगतब्रह्मशब्दस्त्वया स्थापितः । न चायं सर्वानपि वेदान्तानुपक्रमादि दृढन्यायैर्निर्णीताद्वैततात्पर्यात्प्रच्यावयितुं शक्तः । तस्मादिहाद्वैतिदर्शितोपक्रमादिनयेभ्यः प्रबलतरन्यायैस्सर्ववेदान्तानां सगुणे ब्रह्मणि महातात्पर्यं प्रसाध्यते चेत्; एवंकृतपूर्वपक्षनिरासो लभ्यते, न तु ब्रह्मशक्तिप्रदर्शनमात्रेण । यदि तथैव क्रियते तदा स्पष्टमेव प्रतिपादके 'पृथगुपदेशा' दिति सूत्रे प्राधान्येन जीवब्रह्मभेदसाधनं त्वदभिमतमसंगतं स्यात्कृतकरत्वादिति ।

चतुर्थः पक्षोप्यनुपपन्नः । तत्र भाष्ये परीक्ष्येत्यादिवाक्यं विषय इत्युक्तम्; इदमसङ्गतम्, विचारकर्तव्यताया एव विषयत्वात् । न च परीक्ष्येत्याद्युक्तार्थानामपीह विवक्षिततया एतत्सूत्रसमानार्थतया एतत्सूत्रार्थविचाराङ्गविधायकतया वा विषयतया व्यपदेशो युज्यते, तादृशस्येहावाच्यत्वात्; संशयपूर्वोत्तरपक्षाणां विषयोह्यधिकरणेषु विषय उच्यते; न, विचारकर्तव्यतायां तदङ्गविधानासम्भवात्; तत्कर्तव्यतायाञ्च तत्सम्भवात्; अत एव विचारकर्तव्यतासंशयाधीनसंशयस्यापि तत्राभावात् स एव प्रधानविषयः, तदर्थमेव विचारकर्तव्यता विचार्यत इति वाच्यम्; 'अथातो धर्मजिज्ञासे' ति पदस्य शास्त्रोपक्रमस्थस्य शास्त्रविचारकर्तव्यताविचार एव प्रधानतात्पर्यात् तस्मादितरचिन्तानामेतदर्थत्वमेवोचितम् न तु विपरीतम्, तस्मादस्य विषयतयोपादानमसङ्गतमित्याक्षेपं हृदि निधाय टीकायां विषयत्वसमर्थनार्थं प्रधानभूतशास्त्रविचारकर्तव्यताचिन्ताशेषतयैव परीक्ष्येत्यादिवाक्यगोचरचिन्तोपन्यस्ता । एवं विचारस्य फलं हि तद्विषयं ज्ञानम्, ज्ञानञ्च ज्ञेयपरिच्छेदः, वेदान्तविचारजन्यं ज्ञानं ब्रह्म परिच्छिनत्ति ? न वा ? यदि परिच्छिनत्ति; तदा परिच्छेदातीतत्वभङ्गप्रसङ्गः, यदि न परिच्छिनत्ति ब्रह्म, यथावत्त प्रकाशेत । 'अयमिति हि परिच्छिन्नो घटोऽवगम्यते'

इत्युक्तं मूले। तत्र ज्ञानं च ज्ञेयपरिच्छेद इत्यत्र ज्ञेयपरिच्छेदो यदि ज्ञेयनिर्णयः, तदा यदि परिच्छिन्नचि; तदा परिच्छेदातीतत्वभङ्गप्रसङ्ग इत्यसङ्गतम्, परिच्छेदातीतत्वं ह्यानन्त्यम्, न हि निर्णये तद्भङ्गः, अनन्तत्वेन ब्रह्मनिर्णयतदभावयोः चोद्यासम्भवप्रसङ्गश्च। यदि ज्ञेयपरिच्छेदो गुणादिभिरिदमेतावदेवेत्यवधारणम्; तदा असम्भवः, न हि सर्वं ज्ञानमियद्गुणकमेवेति परिच्छेदात्मकम्, अयमिति हि परिच्छिन्नो घटोऽवगम्यत इति वाक्यविरुद्धं च। न हि घटश्चक्षुषा गृह्यमाणो रूपादिमात्रविशिष्ट इत्यवगम्यते, रसादेरपि सत्वात्तद्व्यतिरेकग्रहणासामर्थ्याच्च। अत एव यथावत्प्रकाशेत्यप्यसङ्गतम्, यत्किंचित्प्रकारविशिष्टज्ञानस्यापि यावत्प्रकाशत्वात्, एवं च क्षेपावलम्बनीय ग्रन्थ इति भाति, तदनुपपन्नम्, दूषणानारोहात्; तस्मादसङ्गतोय ग्रन्थ इत्याशङ्क्य टीकायांनिर्विशेषब्रह्मस्वरूपं जीव इति पक्षे जीवाद्भिन्नं ब्रह्मेति पक्षे चावृत्त्यार्थं ग्रन्थो योजितः। तदर्थश्च पूर्वपक्षोपन्यासे—स्पष्टः। तदिदमस्य जात्यन्धेन यष्टिदानम्। सिद्धान्तकोटीनां फलफलिभावदर्शनसमये यदा न शक्नोति तदा विचारस्याकर्तव्यत्वाच्छास्त्रमनारम्भणीयमित्युक्तम्। तदपि न सम्भवति, अङ्गविधानासामर्थ्यस्य विचाराकर्तव्यतानुपपादकत्वात्, यदा न शक्नोतीतिह्युच्यते, तदशक्तिश्च ब्रह्मणो विचारानर्हत्वादेव, ततश्चाङ्गविधानाशक्तिदशायां विचारस्य कर्तव्यता सिद्ध्यत्येवेति चेत्; किन्तत? न हि तावता तुल्यसाधनकत्वमात्रेण परस्परोपपाद्योपपादकभावो भवति, तदभावे च कथन्तादर्थ्येन संशयः? वस्तुतस्तु पूर्वपक्षेऽधिकार्याक्षेपेण परीक्ष्य निर्विण्णस्य तद्विज्ञानार्थिताक्षेपस्य सिद्धान्तेऽधिकारिसमर्थनेन तत्समर्थनस्य च सिद्धेरेव तस्य वाक्यस्य सूत्रविषयता युक्ता, प्राधान्येन तद्वाक्यार्थनिर्णयोद्देशेनाप्रवृत्तेर्विषयवाक्यत्वेनानुपपादनम् तत्प्राधान्येनाप्रवृत्तिश्च

लिङ्गावलम्बनेन पूर्वपक्षश्चानुपपन्नः, अहमितिप्रत्यक्षसिद्धस्य देहव्यक्तस्य भ्रमेणापूर्वत्वासिद्धेः । न च षड्विधतात्पर्यलिङ्गान्तर्गतैः पञ्चभिरेव न्यायैः प्राबल्यनिश्चयो विवक्षित इति वाच्यम्, तेषामप्यसम्भवात् । सदेवेति सजातीयविजातीयस्वगतभेदमिथ्यात्वमुपक्रान्तम्, तत्त्वमसीत्यभेद उपसंहृतः । एवमद्वैतस्यैवोपक्रमोपसंहाराविति मायिभिरिष्यते, नचायमर्थः पूर्वपक्षिण इष्टः, तेनैव करोमिभुञ्जइत्यादिना सत्यत्वव्यवस्थापनात्, अतस्तन्यजगत्कारणत्वमेवोपक्रान्तम्, तदेव च विस्तरेणोपपाद्यत इत्येव प्रतीयेत, तथा प्रतीतौ च 'ऐतदात्म्यमिदं सर्व' मिति तच्छरीरत्वपरं 'तत्त्वमिसी' ति च 'आयुर्घृत' मितिवदिति प्रतीयेत, ततश्च नाभेदोपसंहारप्रतीतिः । नाप्यभेदाभ्यासप्रतीतिः । फलस्य च नाद्वैतज्ञानसम्बन्धत्वप्रतीतिः, कारणाभावात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा अर्थवादः, एकविज्ञाने सर्वविज्ञानं च ज्ञातव्यान्तराभावात् इतरस्य सर्वस्यापि मिथ्यात्वेन ज्ञानाद्वेति तैरुच्यते, इयं च प्रतीतिः पूर्वपक्षिणो नास्त्येव, तदनुगुणोपपत्तिपरतया दैवर्णिता 'यदा सोम्येद' मिति वाक्यार्थप्रतीतिश्च नास्त्येव । अतः कथं पूर्वपक्षिणो भेदवाक्याद्वैतवाक्यस्य प्राबल्यबुद्धिष्षड्विधतात्पर्यलिङ्गैः स्यात् ? न च तदुक्तप्रकारातिरेकेण उपक्रमादि लिंगमभेदविषये उपपादयितुं शक्यम् । एवञ्चाद्वैतपरत्वेऽप्यपूर्वत्वाभावेन कथंचिदर्थवादत्वेन कर्मशेषत्वस्य वाच्यत्वात्ततो वरं भेदस्य जगत्कारणत्वादेश्चापूर्वतया तत्रैव वेदान्तानां तात्पर्यमित्येव बुद्धिः स्यात् । नन्विदं टीकायामेव फेनचित्पण्डितंमन्येनोक्तम्; तदज्ञानादेवोक्तम्, मूले तु तन्नोक्तमेव, अतो मूलस्यायम्भावः; 'अयमात्मा ब्रह्मे' ति अस्मिन् जीवात्मनि ब्रह्मपदप्रयोगात् अन्यत्रापि श्रूयमाणो ब्रह्मशब्दः तत्समानार्थक इति; हन्तैवं सति साधु समर्थितस्सन्देहाभावः, भेदश्रुतिषु जाग्रतीषु कथं सन्देहो न स्यात् ? एतत्परिहारार्थमेव टीकायां षड्विधतात्पर्य-

लिङ्गानलादद्वैतवाक्य प्रनलमित्युक्तम् डिम्भप्रलोभनार्थम् ; डिम्भा खलु किञ्चिदपूर्व वस्तु दास्यामीत्युक्ते तद्विशेषमनिरूपयन्त एव यत्किंचि दम्तु भोग्यमेव तदिति बुध्या कुतूहलिनास्तिष्ठन्ति, तद्वदिहापि षड्विध तात्पर्यलिङ्गाभिधानक्रमुकशङ्कापरिहारक मिश्चिद्वस्त्वस्तीत्युक्ते तदुपश्रुत्य केचिद्विप्रलब्धा भविष्यन्तीति बुध्या इदमुक्तम्, तस्यापि परित्यागे कथ मेकस्यापि विप्रलम्भ ? तस्मात्किंचिदद्वैतवाक्यमात्रश्रवणेन पूर्वपक्षो भेद वाक्यप्रदर्शनेन राद्धान्त इत्येव पर्यवस्यति । यदिद केभ्यश्चिद्रोचते तथैव ते विदाकुर्वन्तु ।

अपि च माध्वपूर्वपक्षनिराकरणे त्वया 'आत्मा ब्रह्मेत्यधीत' 'श्रुत्यन्तानामखण्ड' इति च श्लोकद्वयेनोक्त दूषणद्वय तवापि तुल्यमेव । तथा च

व्यध्वयोर्ध्वसनेनैव व्यध्वविध्वसन मतम् ।
व्यध्वस्य ध्वसनेनैव व्यध्वविध्वसन न तु ॥

राद्धान्तश्चानुपन्न । भेद प्रसाध्य भिन्नत्वात्तस्य ज्ञानाभावात् सशय स्सम्भवतीत्येव सिद्धान्ते सशयस्समर्थ्यते ? उत तदसमर्थनेनैव भेदे अभेदेपि सशयस्सम्भवतीति ? नाद्य, सर्वथेत्यस्य भेदे अभेदेपि सशय उप पद्यत इति टीकोक्ताभिप्रायविरोधात्, किञ्चात्रदुर्मेधसा पूर्वपक्ष्याभासेन सुमतिपरिकल्पितातिजुगुप्सितेन न्यायेनाहब्बुद्धिमात्रेण कारणत्वभेदाभेदादि सशयासम्भवमापादयता जीवस्यैवाशनायाद्यतीतरूपान्तरमपरिज्ञातमस्तीति वृषलोद्वाहमन्त्रेणेवाप्रमाणनुखतो वा भेदसमर्थनेपि सशयमुपपादयता ब्रह्म धर्मिकसशये ब्रह्मकोटिकसशयेपि धर्मिकोटिज्ञानस्य वाच्यतया तेनैव सशय प्रतिबन्धात् भेदेप्यभेद इव अविशेषात् सशयासम्भव कथ नापाद्येत ?

अतो भेदसमर्थनं व्यर्थम् । न द्वितीय ; पूर्वपक्षनिराकरणसमर्थसिद्धान्तयु-क्तेरकथनात् । धर्मिज्ञानस्य सशयाविरोधित्वं हि तन्निराकरणसमर्थो न्याय, स च नोपन्यस्त, किन्तु वृथैव शास्त्राचंक्रमण कृतम् । ननु धर्मिज्ञानस्य सशयाविरोधित्वमेव विवक्षितो न्याय ; स त्वाभिप्रायिक, धर्मिज्ञानस्य सशयाविरोधेपि किंकोटिकोगं संशय' किंनिबन्धनश्चेति जिज्ञासा-निवृत्तये कोटिनिबन्धनयो प्रदर्शन क्रियते त्रिषु धामास्वित्यादिनेतिचेत् ; न, एवमपि धर्मिज्ञानस्य सशयाविरोधित्व कथ समर्थ्यते ? अनुभवबला-दिति चेत्, किंत्वया पूर्वपक्षिणोनुभव उत्पाद्यते? उत्पन्नएवानुभवो ज्ञाप्यत इति चेत्तर्हि सत्येव तथानुभवे कथ पूर्वपक्षिण प्रत्यवस्थानसम्भव ? अनुभव-प्रच्छादनेनेति चेत्तर्हि तादृशसर्वातिशायिशक्तिमता तेन कृत प्रच्छादनन्त्वया कथ छिद्येत ? किंच पूर्वपक्षिणा सर्वैरपि जीवाभेदनिश्चयात् सशयाभा-वस्य केवलान्वयित्वमापाद्यते ? उत वस्तुतो जीवब्रह्मणोरभिन्नत्वात् ? नाद्य, असिद्धे, अहमनुभवसिद्धत्वादित्यनेन प्रागुक्तमेव स्थितमितीति वाक्येन च विरोधाच्च । न द्वितीय, षड्विधतात्पर्यलिङ्गबलात् बलवत्व-निर्धारणेनाभेदनिश्चयसम्भावनोक्तिविरोधात्, तत्र हि लोके तत्सम्भव प्रतिपाद्यत इति प्रतीयते । ननु षड्विधलिङ्गबलान्मया तत्त्व निर्धारितम्, अतो न सशयसम्भव इत्येव पूर्वपक्षिणस्तात्पर्यमिति चेत् ; न, तथा सति सिद्धान्ते मीमासासापेक्षत्वेन तत्परिहारोक्तिविरोधात् । न हि पूर्वपक्षि-णो निर्णयाय शास्त्रारम्भसमर्थनमुपपन्नम्, न हि पूर्वपक्षिण पूर्वोत्पन्नज्ञा-नार्थं शास्त्रारम्भसम्भव, न च गाविज्ञानार्थम्, पूर्वमेव तस्य ज्ञानोत्पत्त्यैव प्रत्यवस्थानस्य वाच्यत्वात् । किंच उपक्रमोपसहारादिन्यायसापेक्षत्वेपि न शास्त्रापेक्षा, स च न्यायो लोकत एवावगन्तु शक्यते । धर्मजिज्ञासासूत्रे पराभि-मतपूर्वपक्षे विश्वजिन्न्यायवदत्रयदुक्त अत्र नैकमेव वेदान्तवाक्यमुदाहृत्य जीवस्य प्रसिद्धमप्रसिद्ध वा रूप ब्रवीति तस्य पूर्वपक्षिणा शास्त्रविषयत्वमापाद-यितु शक्यम्, तस्यैकस्य केनचिच्चार्येण पूर्वपक्षे स्थूलादितेन जीवब्रह्मैक्यासि-

द्वावपि वाक्यान्तराणान्तत्परिपन्थिजीवब्रह्मभेदादिपरत्वप्रतीत्यनिर्द्धारणात् । अतस्तद्विचारार्थं शास्त्रारम्भापेक्षा स्यादेव । न च सर्वेषां वेदानां जीवब्रह्माभेदपरत्वे सार्वत्रिक एको न्यायोऽस्ति, उपक्रमादीनां श्रुतिलिङ्गादीनां च परस्परतबाध्यबाधकभावप्रकारशालिनान्तत्र व्यवस्थापितत्वात् । न च तेषां सर्वेषामेकस्मिन्नेवात्र पूर्वपक्षे व्युत्पादनं युक्तम् , तथा सति सर्वस्यापि शास्त्रस्यैकाधिकरण्यकल्पनाप्रसङ्गात् , तस्मात्तावतान्न्यायानां व्युत्पादकमेकं शास्त्रमिहापेक्षितमिति अस्मिन्नेव शास्त्रे पूर्वपक्षिणो व्याघातदोष आपतति न धर्ममीमांसापूर्वपक्षिणोऽपीति । इदं हि निरुक्तप्रकाराधिकरणमेवाक्षिपति । पूर्वपक्षानुत्थानस्यैवानेन सिद्धेः, अत एव व्यध्वविद्ध्वंसने माध्वपूर्वपक्षानुत्थानहेतुतयेयमेव युक्तिरुपन्यस्ता । अत्र पक्षान्तरोपन्यासक्रमान्वितेन क्रमेण उत्तरोत्तरस्य जघन्यत्वं व्यज्यते । पूर्वद्विके सिद्धान्त्यभिमतार्थानुवादेन पूर्वपक्षोत्थापनात्पूर्वपक्षिणस्तदभिमतार्थेन विचारापेक्षा, उत्तरद्विके *सिद्धान्त्यनभिमतार्थस्यैव पूर्वपक्षिणा समर्थनाद्विचारसापेक्षता वेदान्तैनैव* , पूर्वपक्षेऽद्वैतोपपादनाद्वेदान्तविषयत्ववदेव विचारविषयत्वसम्भवश्च । प्रथमद्विके प्रथमपक्षे पूर्वपक्षोक्तार्थानङ्गीकारेण सिद्धान्तीकरणाच्च व्याघात', द्वितीयपक्षे पूर्वपक्षोक्तार्थमङ्गीकृत्य रूपान्तरावलम्बनेन सिद्धान्तकथनात् जीवस्यैव रूपान्तरमित्यत्र षष्ठीमुख्यगौणत्वयोर्व्याघातः, उत्तरद्विकेऽपि प्रथमपक्षे पूर्वपक्षिणा प्रपञ्चमिथ्यात्वाङ्गीकारात् सत्यस्य ज्ञातत्वमवलम्ब्य पूर्वपक्षो युज्यते, द्वितीयपक्षे तु प्रपंचसत्यत्वाङ्गीकारात् जीवस्वरूपस्य ज्ञातत्वेऽपि जीव एव सत्यानां अज्ञातानां विशेषणानां सम्भवान्न पूर्वपक्षोत्थानसम्भवः, तस्मात्पापीयांस्तुरीयः पक्ष इति ।

इतरपक्षे सिद्धारम्भमेव शास्त्रं स्वार्थसाधकमित्यनुपपन्नम्; अनारब्धस्य वेदस्यैवार्थसाधकत्वात् , शास्त्रान्तराणाञ्च तदुपजीवनेनैव प्रामाण्यात् । ननु वेदातिरिक्तं शास्त्रं समर्थितारम्भयोग्यताकमेवार्थसाधकमिति विवक्षितमिति चेत्; किन्तर्हि योग्यमिति पदाध्याहारो विवक्षितः ?

तद्वनन्वितार्थकता। नहि योग्यमित्युक्ते समुचेतुं योग्यमिति वा अथ योग्यमित्युक्ते आरम्भयोग्यमिति वा सिद्ध्यति। अथशब्देनैव तावत्पर्यन्तोपस्थापनं विवक्षितमिति चेत्; तर्हि यत इति व्याख्यानमनुपपन्नम्। किञ्च सूत्रं विना ज्ञानासम्भवात्सूत्रं कर्तव्यमिति हि राद्धन्तो विवक्षितः। ततश्च सूत्रं कर्तव्यमित्येवार्थो युक्तः, न तु सूत्रं क्रियत इति, सूत्रपाठादेव सूत्रं क्रियत इति ज्ञातुं शक्यत्वात्। पाठानुपजीवने च न सूत्रपदाध्याहारसिद्धिः। किञ्च - आनन्तर्ये स्वरसस्य तन्मुखेनाधिकारसमर्थनद्वारा विचारकर्तव्यतासाधकतया सार्थस्याथशब्दस्यास्वरसानन्वयिप्रयोजनविधुरारम्भार्थत्वं कथन्नोपहास्यम्? आरम्यत इत्युक्तिं विनाप्यारम्भस्य ज्ञातुं शक्यत्वात्। नन्वस्य शास्त्रस्य न्यायग्रन्थात्मकत्वे जिज्ञासासूत्रं हि मानम्, अस्य तथात्वे न किंचिन्मानमस्ति; अतोस्याधिकारसमर्थनार्थत्वमिर्निबन्धनम्, अतो नेदं सूत्रं न्यायग्रन्थात्मकम्; किन्तु शास्त्रस्य न्यायग्रन्थात्मकत्वप्रख्यापनपरम्, तत्र यद्यपि ब्रह्मजिज्ञासेत्येतावदुक्त्वा जन्मादिसूत्रकरणेपि आद्यसूत्रत्वादेवेदमुत्तरस्याविचारात्मकत्वख्यापनार्थं क्रियत इति चाध्याहारेण योजनेति च सुगमम्; तथापि मङ्गलार्थप्रयुक्ताथशब्देनारम्भार्थेन क्रियत इति पदाध्याहारो व्यज्यते, एतेन धर्मजिज्ञासासूत्रमपि व्याख्यातम्, इतिचेत्; मैवं, अस्य विचारात्मकत्वे अत इति हेतून्यासस्यैव मानत्वात्, सम्भवत्यपि स्वारसिकार्थे तत्परित्यागेन कथञ्चिद्वर्णनस्यायुक्तत्वात्; तस्मादथशब्देन हेतुत्वयोग्यार्थोपस्थापनमेव युक्तम, अतश्शब्दस्य प्रकृतपरामर्श एव स्वारस्यात्। किंच जन्मादिसूत्राणां पूर्वेणैकवाक्यत्वमेव, एकवाक्यता च कर्तव्यपदाध्याहार एव युक्ता, न्यायं कर्तव्यतासमर्थनात्, न तु क्रियत इत्यध्याहारे, जन्मादिसूत्राणां प्रयोजनाभावात्, अतो यथोक्त एवार्थः। एतेन धर्मजिज्ञासा सूत्रमपि व्याख्यातम्। किञ्चाथशब्दस्यानन्तर्यपरत्वेऽतश्शब्दस्य तदुपस्थापितार्थपरामर्शित्वे च सम्भवत्यपि तत् परित्यज्य बह्वध्याहारेण अर्थवर्णनमतिक्लिष्टमेव। तेनैव जिज्ञासान्वयवर्णनमपि निरस्तम्।

न्त्रि तन्त्रत्वे बह्वीना जिज्ञासाना तत्तदर्थभेदानुसारेणाङ्गीकारे कथन्ना योग्यतार्थता सूत्रस्य ? ब्रह्मकर्तृकस्वामिनीनिज्ञासादीना सूत्रसापेक्षत्वाभावात्, एकत्वे तन्त्रत्वविरोध, स्ववचनव्याघातश्च, एकशेषजात्यर्थत्वपूर्वसरणीनामनपेक्षितत्वात्। तथा च न्यायेन विना वेदार्थस्य दुरवबोधतायाम्भूत न्त्रियत इत्येतावतैव चारितार्थ्यात् किमर्थं जात्यायर्थाना कीर्तनम्, उपयोगात्कीर्तने नात्रैव तत्समर्थनम्, हेत्वनुपन्यासात्, अनुवादमात्रे न किञ्चित्प्रयोजनम्, कथञ्चित् जिज्ञासोपयोगमात्रेणोपमर्थाना कीर्तने जननीस्तनक्षुत्तारोग्यादि कुतो न कीर्त्यते। किञ्च जात्यर्थाङ्गीकारे विरोध, त्रैवर्णिकाधिकारत्वात् ब्रह्मज्ञानस्य, ब्रह्मत्वेन जिज्ञासात्वेनैव ब्रह्मण इत्यर्थलाभात् कर्मणि षष्ठ्याश्च न प्रयोजनम्, जिज्ञासायास्साङ्गवेदाध्ययनमात्रसाध्यतया सन्न्यासासाध्यत्वाभावात् तद्ग्रहणमपि युक्तम्, अध्ययनसाध्यजिज्ञासात्वादेव वेदान्तेन ब्रह्मणे इत्यपि सिद्धमिति तद्ग्रहणञ्च व्यर्थम्, ब्रह्मवर्चनेत्यपि न वाच्यम्, तस्य तत्त्वेऽस्त्वे ब्रह्मगोचरजिज्ञासोक्त्यैव तत्सिद्धे, अतात्त्विकत्वे जिज्ञास्यत्वायोगात् अनुपपत्तेश्च, 'पृथगात्मन' मिति श्रुतिविरोधात् 'एष यदा तावदती' त्यनुसारेण अत्रसत्वेन जिज्ञासेति तु युज्यते कस्य भी ? चिदचितो, कुत ? श्रुतिसूत्राभ्याम्, श्रुतिरुपलक्षिता, सूत्र च 'ईक्षते' रित्यारभ्य चिदचितोर्ब्रह्मभेदमेव साधयति, भेद कि स्वाभाविक ? उतो पाधिक ? किं सत्य ? अथ वा मिथ्या ? इत्ययदेतत्। यादृशम्भादृशोवाभ्तु भेद प्रतिपाद्यमानस्तु स एवेत्यविवादम्।

अत्राथातो वेदान्तार्थजिज्ञासेति वक्तव्ये ब्रह्मजिज्ञासेत्युक्तिस्तत्वतो ब्रह्मण एव वेदान्तार्थत्वात्। तत्र च आत्मजिज्ञासेत्यनुक्त्वा ब्रह्मजिज्ञासेति वदन्नाचार्यो मिथ्यावादिनो निराचष्टे। यदि हि जीव एव ब्रह्म तदानीं हि तत्सूचनार्थमात्मजिज्ञासेत्येव वाच्यम्, जीवव्यावृत्तिप्रतिपादक गुणविशिष्टपर ब्रह्मपद प्रयुञ्जानस्य जीवब्रह्माभेदनिरसने ब्रह्मणो निर्विशेषत्व

निरसनेपि हि तात्पर्यं गम्यते । यदुच्यते निर्विशेषं वस्तु ब्रह्मशब्दार्थ इति ; तत्र किं लोकव्युत्पत्तिबलात्तस्य तादर्थ्यमुच्यते ? उतानुशासनानुरोधात् ? उत वैदिकव्युत्पत्तिबलात् ? नाद्यः, असिद्धेः ; अत एव न द्वितीयः, तत्र हि वृद्ध्यर्थकबृहिधातोरयं शब्दो व्युत्पाद्यते , वृद्धिश्च न निर्विशेषत्वम् , किन्त्ववधिनिरूप्यो धर्मविशेषः, अत एव तृतीयोपि निरस्तः ; 'बृहति बृंहयति' 'बृहन्तो ह्यस्मिन् गुणाः' 'बृहत्त्वाद्ब्रह्मणत्वाच्च' त्यादिना सविशेषस्यैव ब्रह्मशब्दार्थत्वप्रतीतेः, जिज्ञासापदेनापि निर्विशेषत्वं वारयति, ब्रह्मशब्दरूढ्या च देवतान्तरस्य वेदान्तार्थत्वनिरासस्सूच्यते । रूढिश्च भगवति - 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुन' इत्यारभ्य - 'यस्मिन्प्रयुज्यमाने तु गुणयोगस्सुपुष्कलः । तत्रैव मुख्यवृत्तोयमन्यत्र ह्युपचारत' इत्यादिगारुडपुराणादिवचनसिद्धा । अत्रानेन सूत्रेण समानार्थस्य 'परीक्ष्य लोका' निति वाक्यस्य स्मारणात्तत्र पुरुषपदेन भगवत एव सर्वविद्यावेद्यत्वोपदेशात् तन्मुखेनापि देवतान्तरस्य वेदान्तार्थत्वनिरसनं सूच्यते । एवमनेन सूत्रेणानारम्भमिथ्यादेवतान्तरवादिनो भगवान्पराशर्यो विजिग्य इति ।

सूत्रवाक्यार्थस्तु ; पूर्ववृत्तात्कर्माधिगमादनन्तरं विशिष्टाधिकारिलाभात् ब्रह्मविचारः कर्तव्य इति । तदाह भगवान्बोधायनः 'वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषे' ति । विंशतिलक्षण्या ऐकशास्त्र्यं च ,

उपदेशाद्द्वयोक्त्यादिस्वारस्याद्धर्मयोगतः ।
पूर्णोपदेशतश्चैक्यं पूर्वभागोपजीवनात् ॥

उपदेशस्तावद्भगवतो वेदाचार्यस्यैकव्यवहितप्रशिष्यो भगवान् बोधायनः परमर्षिः सम्प्रदायविच्छेदशङ्कागन्धरहितस्वाचार्यपरमाचार्ययोरभिमतमुपदेशसिद्धं च शास्त्रैक्यमनुगृह्णाति 'संहितमेतच्छारीरकं जैमिनीयेन

षोडशलक्षणेनेति शास्त्रैकत्वसिद्धि ' रिति । संहितमिति सङ्गतत्वाभिधानात् ऐकग्रन्थ्यं च विंशतिलक्षणी । वृत्तिकारो भगवानुपवर्षोपि प्रथमतन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्याह । ऐकग्रन्थ्यं हि वक्तृसंकल्पाधीनम् , अत एव परस्परविरुद्धनानाशास्त्रार्थप्रतिपादकस्य शाङ्करसर्वसिद्धान्तसंग्रहादेरैकग्रन्थ्यसिद्धिः । वक्तृसंकल्पश्चात्र ' संहित ' मित्यादितदीयसच्छिप्यसूक्तचैव ज्ञायते । यदि सम्प्रदायो नाद्रियते, तदा वेदे स्वरवर्णपदवाक्यपादगीतिविभागानुपूर्व्यादौ कस्ते प्रतिभूः? तस्मान्नयायमुखेन कस्यचिदर्थस्य मुनिभिः प्रतिपादने सोर्थो न्यायमुसगो ग्राह्य , तैरेवोपदेशेन प्रतिपादने उपदेशबलादेवार्थो ग्राह्य' । अत एव वेदाचार्यवक्तृकत्वाविशेषेपि सौत्रार्था न्यायत एव गृह्यन्ते , भारतार्थास्तूपदेशादेव । ऐकग्रन्थ्यन्तु तद्ज्ञोपदेशादेव ग्राह्यम् । अतएव शङ्करोप्यैकग्रन्थ्यमङ्गीचकार । अत एव तेन ' एक आत्मनश्शरीरे भावा ' दित्येतत्भाष्ये देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे व्यवस्थापनात् अत्र तद्व्यवस्थापनं पुनरुक्तमित्याशङ्क्य शबरस्वामिना तत्र तत्कृतन्तत्सूत्रारूढमिति समाहितम् । अत एव ब्रह्मजिज्ञासासूत्रे भामत्यां धर्मजिज्ञासासूत्रस्थस्य धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वमुक्तम् । तस्मात्प्रामाणिकानान्दुरपह्नवमैकशास्त्र्यम् ।

अथशब्दश्च शब्देन प्रकृतमपेक्ष्यानन्तर्यबोधन एव स्वरसः , लोके क्वाप्यनेवंविधस्थले अथ शब्दस्य प्रयोगादर्शनात् ; गत्यन्तराभावे योग्यतया बुद्धिस्थानन्तर्यं कचित् अथातो धर्मजिज्ञासेत्यादौ । तावन्मात्रगतेरप्यभावे स्वारसिकमानन्तर्यार्थत्वमपि परित्यज्यारम्भार्थत्वमङ्गीक्रियते कचिदथशब्दानुशासनमित्यादौ, अतोथशब्दस्वारस्यानुरोधादप्यैकग्रन्थ्यमवर्जनीयम् । तथा शारीरके 'तदुक्तम्' ' तदुक्तम् ' ' अस्य श्रुतेरिति चेत्तदुक्तं ' ' जीवमुख्यप्राणलिङ्गान्नेति चेतद्व्याख्यातं ' इति ' उक्तंसमा-

न्यायेदमर्थ्य ' मितिवन्निरुपपदेनैव जैमिनीयग्रन्थार्थः परामृश्यते। यत्र पूर्वतन्त्रसूत्रानुपन्यस्तजैमिन्युक्तार्थःपरामृश्यते, तत्र जैमिनिग्रहणमेव क्रियते। यद्यनयोर्भिन्नग्रन्थता स्यात्, तदा वक्तृनिर्देशोवास्मादधिकरणनिर्देशो वा। तदुभयविधुरोयं निर्देशो विंशतिलक्षण्या एकतामेवावगमयति। यद्यपि स्वोपबृंहणीयश्रुतिस्मृतिगतार्थपरामर्शेपि निर्देशोयमुपपन्नः, न चायन्तादृशः। ननु तदुक्तमित्यादिना परामृष्टानां अर्थानां जैमिनीयसूत्रेषु सत्त्वेपि सर्वैरपि भाष्यकारैस्तथाव्याख्यानेपि न तद्ग्रन्थोपजीवनेन तदर्थपरामर्शः, अपि तु ततोन्यत्रैव यत्र कचन वर्तमानानां तेषामर्थानां परामर्श इति; अहो नु खलु एवं वदन् सिद्धमन्नं परित्यज्य भिक्षामटतिदुर्मतिः, तस्मादुक्तग्रहणस्वारस्यादप्यैकशास्त्रचन्द्रुरपह्नवम्। आदिपदेन हेतुत्रयं संगृह्यते। आदिग्रहणन्तावत् दृश्यते, ' सर्ववेदान्तप्रत्ययञ्चोदनाद्यविशेषात्' ' श्रुत्यादि बलीयस्त्वाच्च न बाध' इति। न ह्यत्र व्याकरण इव गणपाठोस्ति; न च श्रुतिषु चोदनादीनां पाठो दृश्यते, येन 'एष भूतपतिरेष भूतपाल एष सेतुर्विधरणः' ' यस्मिन् द्यौः पृथिवी चान्तरिक्ष ' मित्यादिषु पठितानां 'पत्यादिशब्देभ्य.' 'द्युभ्वाद्यायतनं स्वशब्दा' दित्यादिष्विवादिशब्देन ग्रहणं स्यात्, तस्मादादिग्रहणमेकग्रन्थत्वेन सन्निहितानां संयोगरूपादीनामेव प्रतीतिर्भविष्यतीत्यभिप्रायमिति स्वरसतोऽवगम्यते। किञ्च- ' सर्ववेदान्तप्रत्यय ' मित्यत्र साध्यानुपादानादधिकाराशङ्कानिराकरणेन सूत्रस्य शाखान्तराधिकरणन्यायविषयत्वोपपादकतया तदीयमेव साध्यं लप्स्यत इत्यभिप्रायमेव, तदप्यैकग्रन्थ्यएवाञ्जसा भवति। किञ्च ' भेदादिति चे ' दित्यत्र हेतुर्नोपन्यस्त. पूर्वकांडोक्तहेतूनामन्वयो भविष्यतीत्यभिप्रायेण, तदप्यैकग्रन्थ्ये समञ्जसं भवति। धर्मयोग· - 'अथातो धर्मजिज्ञासे' ति सूत्रम्।

जिज्ञासादृत्ययुक्तीनां तथैवाक्षरलक्ष्मणोः।
समत्वाद्धर्मजिज्ञासासूत्रं शास्त्रमिदं यथौ॥

जिज्ञासा तावदविशिष्टा, साङ्गसशिरस्कस्वाध्यायाध्ययनजन्यापात-प्रतीतिसमुन्थतदर्थजिज्ञासायाः पूर्वोत्तरभागयोरपक्षपातात्, अतस्तदनुजिघृक्षया प्रवर्त्यमानग्रन्थस्य पूर्वोत्तरभागोभयविषयत्वौचित्यात् तत्कर्तव्यताप्रतिपादकमिदं सूत्र विंशतिलक्षणविषयमेव युक्तम् । क्रमसङ्गत्येकव्याख्यानरूपताभिरनपवादाभिरेकग्रन्थत्वञ्च युक्तमेव । कर्तृभेदात् परं शङ्काशूकावकाश, तमपि विचारयामः । किं जैमिनेर्ब्रह्ममीमांसाग्रन्थाकरणम् तदर्थापरिज्ञानात्? उतानुग्रहविरहात्? नाद्यः, भगवद्बादरायणशिष्यस्य तदयोगात्, तस्य ब्रह्मविदग्रेसरत्वस्य भगवतैव 'परं जैमिनिर्मुख्यत्वा' दित्यादिभिः ख्यापनाच्च । न द्वितीय., पूर्वमीमांसाग्रन्थस्याप्यकरणप्रसङ्गात्, परमपुरुषार्थोभ्यर्थिजनेष्वनुजिघृक्षाविरहस्तु ब्रह्मप्राप्तेरपुरुषार्थत्वात् तदर्थापरिज्ञानाद्वा स्यात्, न च तदुभय शङ्कामप्यर्हति । एवमाचार्यबादरायणस्य ब्रह्मज्ञानाङ्गत्वेपि कर्मणो ऽनिरूपण न तदज्ञानान्नाप्यनुजिघृक्षाविरहात् । तस्मादाचार्यान्तेवासिनोर्जगदनुग्रहप्रवणयोरन्यतरभागाकरणमन्योन्यसमयेनैकैकभागकरणादित्यनाग्रहचितैरभ्युपगन्तव्यम् । प्रमेयगौरवानुसारादाचार्यान्तेवासिनोर्भागव्यवस्था । अत एव हि 'आचार्यस्तु ते गतिं वक्ते' त्युक्तमग्निभि । तत्र यथाचार्यस्तु ते गतिं वक्तेति वाक्यानुसारात् भिन्नवक्तृकयोरप्येकवाक्यत्वम्, तथा पूर्वोक्तन्यायसहकृतवृत्तिकारवचनात् पूर्वोत्तरमीमासयोरेकवाक्यत्वमनुसन्धेयम् । आचार्यस्य शिष्यमुखेन पूर्वभागकारण शिष्यस्यानुग्रहशीलताप्रदर्शनार्थम्, स्वानुग्रहपात्रताप्रख्यापनार्थं च। तस्मात्स्वत प्राप्तसर्वविषयत्वबाधकाभावात प्रतिज्ञा कृत्स्नविषयैव । नचैव कृत्स्नस्यापि जैमिनिनैव करणापत्ति । नह्ययमथशब्द - 'अथ शब्दानुशासन' मित्यादिवदारम्भार्थकत्सन् स्वकर्तव्यप्रतिज्ञापर, किन्त्वध्ययनानन्तर्यपरस्सन् धर्मविचारकर्तव्यताप्रसाधनपर । यद्यपि विचारकर्तव्यता प्रसाधनस्य स्वकृतिवैयर्थ्यपरिहारार्थत्वात् साधितकर्तव्यभावस्य विचारस्य स्वकर्तव्यत्वम् सिद्ध्यति, तथापि न कृत्स्नस्यापि स्वकर्तव्यता । एवञ्नो भाभ्या सम्भूय चिकीर्षितस्य ग्रन्थस्यादौ कृत्स्नशास्त्रकर्तव्यता प्रसाधितेति

घन्तव्यम्। यद्युक्तार्थाननुगुणं सूत्रं तदा नोक्तार्थसम्भव·, नच लेशतोप्यनानुगुण्यं दृश्यते, किन्तु आनुगुण्यमेव । तथाहि– पूर्ववृत्तं तावत्समानम्, वेदाध्ययनानन्तर्यमथशब्दार्थ·, अध्ययनन्तदधीनमापातज्ञानञ्च भाग द्वयसाधारणमेव, न कर्मविचारासाधारणं पूर्ववृत्तं निर्दिष्टम्। युक्तिश्च समाना, अध्ययनविधेरक्षरग्रहणपर्यन्तत्वात् । अर्थज्ञानपर्यन्तत्वाभावेन स्वाध्यायस्य विवक्षितार्थत्वे मानाभावान्मीमांसा नारम्भणीयेति पूर्वपक्षे युक्ते — अर्थ परत्वस्य स्वत प्राप्तस्याध्ययनविधावपि बाधकाभावेन स्वाध्यायस्य विवक्षितार्थत्वान्मीमांसा आरम्भणीयेति राद्धान्तयुक्ते. - अध्ययनस्य स्वर्गार्थतया निधेस्स्वाध्यायस्याविवक्षितार्थत्वमिति पराभिमतपूर्वपक्षयुक्ते· - अध्येतव्य इत्यक्षरग्रहणपरम्परया जायमानवाक्यार्थज्ञानार्थनियमविधेर्विवक्षितार्थत्वमिति सिद्धान्तयुक्तेश्च समानत्वात् । अक्षराणि च समानानि, धर्मजिज्ञासेति धर्मपदस्योपासनेपि वृत्ते । यदि साक्षात्फलसाधनमपूर्वं धर्मस्तदेहाप्युपासनासाध्यं अपूर्वं धर्म । यद्युत्तरविचारेपि धर्मविचार, तर्हि तत्र ब्रह्मण प्राधान्यं भज्येतेति चेत् ' न, भगवदाराधनस्यैव कर्मज्ञानात्मकस्य विचारद्वयेनापि प्रतिपादनेनोभयत्रापि ब्रह्मण एव प्राधान्यात् । एवमपि 'अथातो ब्रह्मजिज्ञासे' ति ब्रह्मणो विशेषेण प्राधान्यं प्रतीयत इति चेत् ' सत्यम्, सिद्धरूपस्य ब्रह्मणो वेदान्तै· प्रतिपादनासम्भवशङ्कापरिहारार्थं तथा निर्देशात् । तथा च कर्मविचारस्य ब्रह्मनिरूपणानिरपेक्षत्वात्तत्सापेक्षोपासनफलविशिष्ट ब्रह्म विचार्यतया पुन प्रतिज्ञायते पूर्वपक्षिशङ्कानिराकरणाय । लक्षणञ्च समानम्; उपासनस्यापि चोदना लक्षणत्वात । यद्यप्यथातोब्रह्मजिज्ञासेति सपरिकरब्रह्मविचारं प्रतिज्ञाय उपासनाङ्गभूतकर्मणश्शारीरकतृतीयाध्याये निरूपणमुचितम्, तथापि कर्मविचारस्य बहुग्रन्थसाध्यत्वात् त्रैवर्गिकसाधारण्याच्चैषा ब्रह्मज्ञानापेक्षाविरहात् तृतीयाध्यायानिवेश· । त्रैवर्गिकाणां मुमुक्षूणाञ्च साधारणत्वात्त्रिवर्गे प्रथमप्रावण्यान्नित्यनैमित्तिकाननुष्ठाने प्रत्यवायेन समावर्तनप्रभृतिकर्मणा-

मनुष्ठेयत्वात्पाठक्रमानुसाराच्च कर्मविचार प्राङ्निवेशित । यद्यप्यथातो वेदान्तजिज्ञासेत्येन वक्तुमुचितम्, तथापि रागादेव विचारे प्रवृत्तिरिति सिद्धान्तयुक्तिज्ञापनाय श्रेयस्साधनत्व बोधयितु धर्मजिज्ञासेत्युक्तम् । आपातत श्रेयस्साधनत्वबोधे हि तन्निरूपणाय रागात्प्रवर्तेरन् । एवञ्च प्रवर्तकाभावादप्रवृत्तिपूर्वपक्षे रागात्प्रवृत्तिरिति सिद्धान्त इत्यधिकरणशरीर सूचित भवति । अर्थज्ञानकामाधिकारिकस्वाध्यायकरणकाध्ययनविधिनैव स्वफलसिद्धये विचारे प्रवर्त्यते पुरुष इति त्वनुपपन्नम्, अर्थज्ञानकाम इति पदाभावात्, विधे स्वफलसिद्धये विधेयतदङ्गातिरिक्तानुष्ठापकत्वासिद्धे, अर्थज्ञानजनकताया प्रत्यक्षसिद्धत्वेन विधानासम्भवात्, स्वाध्यायोऽध्येतव्य इति प्रतीयमानगुणकर्मत्वविरोधाच्च ।

एतेनार्थज्ञानकामाधिकारिकस्वाध्यायकरणकाध्ययननियमविधिरपि निरस्त । नाप्यर्थज्ञानफलकगुणकर्माध्ययन नियमविधि, अर्थज्ञान फलताया अश्रवणादेव । नचार्थज्ञानस्य विध्यस्पर्शे स्वाध्यायस्यापि विवक्षितार्थत्वप्रसङ्ग, स्वाध्यायाध्ययनविधिबलेनैवोपपत्ते । ननु अङ्गाध्ययनस्यार्थज्ञानपर्यन्तत्वमवश्याश्रयणीयम्, अन्यथा अध्ययनसंस्कृतवेदजन्यार्थज्ञानोपयोगित्वासम्भवेन वेदाङ्गत्वानिर्वाहात्, ततश्चाङ्गाध्ययनवद्वेदाध्ययनमप्यर्थज्ञानपर्यन्त स्यात्, स्यप्रत्ययस्वार स्यातिलङ्घनमपि 'वेदाङ्गानि समस्तानि कृष्णपक्षे तु सम्पठे' दित्यत्र द्वितीयाविभक्तिस्वारस्यातिलङ्घनवदेव स्यादिति चेन्न — 'यथा जरोपेण हवींष्यभिघारयती" त्यत्र प्रयाजशेषप्रातिपदिकानुसारेण तृतीयाविभक्त्यवगतगुणभावस्येव वेदाङ्गानीति स्मृत्यङ्गप्रातिपदिकानुसारेण तृतीयाविभक्त्यवगतप्राधान्यस्य त्यागेऽपि स्वाध्यायविधिवाक्यगतस्य प्रत्ययस्वारस्यत्यागे कारणाभावात् । तस्मात्तव्यप्रत्ययेन कर्मण ... भाव्यत्वावगमेन स्वपदेनैव भावनाया भाव्याकाङ्क्षाशान्तेरर्थज्ञानस्य ... कल्पनमनुचितम् । तच्च भाव्य किमित्यपेक्षा च यदीयकर्मत्वस्या

न्येनानभिधाननिमित्तः कर्मबोधनार्थस्तव्यप्रत्ययस्तस्य प्रथमान्तस्वाध्याय पदेनोपस्थापनासिवृत्ता ।

एतेन "स्वाध्यायोऽध्येतव्य" इत्यत्राध्ययनानुष्ठानसिद्ध्यर्थं विधिपरत्वाश्रयणस्यावश्यकत्वेन कर्मपरत्वस्याप्याश्रयणे वाक्यभेदप्रसङ्गादिति निरस्तम्, वाक्यभेदापादकासिद्धेः ।

यत्तु कैश्चिदुक्तम् — स्वाध्यायमध्ययनेन भावयेदिति विध्यर्थः, अध्ययनभावना च दृष्टं समीहितं भाव्यमपेक्षमाणा समानपदोपात्तमध्ययनं सन्निहितं च स्वाध्यायमसमीहितत्वादुपेक्ष्याक्षरावाप्तिप्रभृत्यर्थाव बोधपर्यन्तं यद्यदध्ययनसाध्यं दृष्टं पुरुषस्य समीहितन्तत्सर्वं भाव्यतया स्वीकरोति, नत्वक्षरावाप्तिमात्रम्, अश्रुतगौणफलत्वाविशेषात्, संकोचकाभावाच्च । नन्वक्षरावाप्तेरश्रुतत्वेपि प्रथमोपस्थितत्वादावश्यकत्वादर्थरहितस्वाध्यायभागे फलत्वेन क्लृप्तत्वात् सर्वस्वाध्यायानुगतत्वाच्च तस्या एव भाव्यत्वेनान्वये निवृत्तभाव्याकाङ्क्षा भावना नार्थावबोधपर्यन्तं धावतीति चेन्न ; - "स्थाणुरयं भारहारःकिलाभूदधीत्य वेदन्न विजानाति योऽर्थं" मित्यादिश्रुत्या ऽर्थज्ञानपर्यन्तत्वरहिताध्ययनस्य विफलत्वप्रतिपादनेन निन्दनादध्ययनस्यार्थावबोधपर्यन्तताया एवावश्याश्रयणीयत्वात् । किंचाक्षरावाप्तिः ग्रामाद्यवाप्तिवन्न संयोगादिरूपा, अनभ्युपगमात्, अननुभवाच्च, किन्तु स्वमात्राधीनोच्चारणानुकूलस्मृत्यनुकूलस्मृत्यनुभवसाधारणस्वाध्यायाक्षरावधारणरूपैव, अन्यानिरुक्तेः; नच तादृशोच्चारणानुकूलज्ञानजनकस्वाध्यायगोचरदृढतरसंस्कारप्रचयरूपत्वेन सा निर्वक्तुं शक्येति वाच्यम्, तादृशसंस्कारप्रचयस्य तादृशाक्षरावधारणं विनानुत्पत्तेः, ज्ञानमनुत्पाद्योच्चारणं प्रति हेतुत्वानिर्वाहाच्च, स्वरूपे फले चापेक्षणीयतया स्वाध्यायावधारणस्यैव तत्प्राप्तिरूपत्वौचित्यात् । नच तदवधारणस्याप्यनुभवरूपस्य व्यवहिततया संस्कारमनुत्पाद्योच्चारणहेतुत्वानिर्वाहेण स्मरण रूपस्य तस्य संस्कारं विनोत्पत्त्यभावेनच त्वदभिमतस्वाध्यायावाप्तिपदार्थ

भूततदवधारणेपि तत्स्वरूपे स्मरणे तत्फले उच्चारणे च तादृशसंस्कारप्रचयस्यावश्यापेक्षणीयतया तादृशस्वाध्यायावधारणमेव तदवाप्तिः ननु तादृशसंस्कारप्रचय इत्यत्र किं विनिगमकमिति वाच्यम्, यत्र यदक्षरावधारणात्प्रागेव स्वस्वव्यासेतरस्योच्चारणानुकूलयावत्समवधानं तत्र तदक्षरावधारणस्य संस्कारोत्पत्तिक्षण एव उच्चारणहेतुत्वसम्भवेन सर्वत्रोच्चारणे तस्य संस्कारनिरपेक्षताया एव विनिगमकत्वात्। तथाच तादृशस्वाध्यायाक्षरावधारणात्मिकायास्तदवाप्तेर्न तत्त्वेन भावनाभाव्यत्वं शक्याभ्युपगमम्, तस्य लिखितपाठादिजन्यतादृशावधारणसाधारणतया ऽतिप्रसक्तत्वेनाध्ययनभावनाभाव्यत्वानवच्छेदकत्वात्, तादृशावधारणरूपावाप्तौ अध्ययननियमासम्भवाच्च; किन्त्वलौकिकश्रेयस्साधनस्वाध्यायाक्षरावधारणत्वेन, तत्र स्वाध्यायाक्षरांशस्य गौरवग्रस्तत्वेनालौकिकश्रेयस्साधनावधारणत्वमेव लाघवात्सामान्यरूपत्वाच्च तदवच्छेदकं वाच्यम्, तच्च तदर्थावधारणेप्यविशिष्टमिति कथमध्ययनविधेर्नार्थज्ञानपर्यन्तत्वसिद्धिः ! ननु उक्तावधारणत्वस्य स्मृतिपुराणादिसाध्यार्थावधारणादिसाधारणतयातिप्रसक्तत्वेनाध्ययनभावनाभाव्यतावच्छेदकत्वनिर्वाहाय तादृशावधारणत्वे स्वाध्यायाक्षरांशप्रवेश आवश्यकः, एवञ्च नार्थावधारणसंग्रह इति चेन्न;— विध्यन्तरापेक्षितस्वाध्यायसाध्यावधारणत्वस्यापूर्वीयस्वाध्यायसाध्यावधारणत्वस्यवानुगतानतिप्रसक्तस्य पराभिमतस्वमात्राधीनोच्चारणानुकूलस्वाध्यायगोचरदृढतरसंस्कारप्रचयरूपावाप्तिन्यापेक्षया वा स्वमात्राधीनोच्चारणानुकूलस्मृत्यनुभवसाधारणस्वाध्यायाक्षरावधारणत्वापेक्षया वा लघुभूतस्यैवाध्ययनभावनाभाव्यतावच्छेदकत्वेन विवक्षितत्वादिति ।

अत्रोच्यते । स्वारसिकपदार्थस्याभिधानादेवायञ्च वाक्यार्थः । तव्यप्रत्ययमनादृत्यार्थकर्मत्वांगीकारेपि नैवं वाक्यार्थस्सम्भवति, किन्त्वध्ययनेन स्वाध्यायं भावयेदित्यर्थः स्यात्, नहि भावनायां भाव्यमाकांक्षमाणायान्तां विहाय समभिव्याहृतपदार्थस्य तदुपसर्जनीभूताध्ययनाव-

च्छेदकतयान्वयो युक्तः, स्वाध्यायस्याध्ययनभावनाभाव्यत्वेनान्वये सति तत्साध्यताया आप्यत्वविषयनिबन्धनत्वात्तादृशस्वाध्यायसाध्यताया अध्ययनावच्छेदकत्वं विना अनुपपत्तेः स्वाध्यायाध्ययनेन स्वाध्यायं भावयेदिति पर्यवस्यति । अस्तु वा स्वरूपेण साध्यस्यैव भाव्यत्वम्, अथापि स्वाध्यायावाप्तिरेव भाव्या स्यात्, समानपदोपात्तस्वाध्यायनिष्ठत्वात्, अध्ययनभावनां प्रति अर्थज्ञानापेक्षया सन्निहितत्वात्, दृष्टादिव्यापकत्वात्, तत्र फलतया पल्लसत्वाच्च; एवंच स्वाध्यायाध्ययनेन स्वाध्यायं भावयेदिति वाक्यार्थः । नचाक्षरावाप्तेरसमीहितत्वम्, अर्थज्ञानेपि तुल्यत्वात्; सामान्यावच्छेदकं यद्भिस्तैरेव स्वाध्यायावाप्तेस्समीहितत्वाभिधानाच्च । अध्ययनाकरणे प्रत्यवायश्रवणात्प्रत्यवायपरिहारो वा भाव्यस्स्यात् । 'स्थाणुरय' मित्यादिवाक्यञ्चाध्ययनविधेर्नार्थज्ञानाधिकारिकत्वमवगमयितुं शक्नोति, परन्तु क्रत्पर्यवसाय्यध्ययननिन्दति क्रतौ प्ररोचना युक्तम्भवितुम् ।

यदुक्तम्—स्वाध्यायावाप्तिस्स्वाध्यायावधारणम्, स्वाध्यायावधारणत्वञ्च नाध्ययनजन्यतावच्छेदकमिति; अस्त्वेवम्, अनवच्छेदकत्वे दोषाभावात्, अवच्छेदकतापुरस्कारेणैव साध्यतावगमे सति विधिवैयर्थ्यपरिहारायाध्ययनजन्यावाप्तेरेव नियमादृष्टानुविद्धायाः क्रतूपयोग्यर्थज्ञानार्थता कल्पनात् । अस्तुवा ऽलौकिकश्रेयस्साधनस्वाध्यायावधारणमध्ययनेन भावयेदिति कार्यतावच्छेदकान्तर्भावेन वाक्यार्थ ।

यच्चोक्तम् - विध्यन्तरापेक्षितस्वाध्यायसाध्यावधारणत्वमपूर्वीयस्वाध्यायसाध्यावधारणत्व वा लघ्विति; तन्न, स्वाध्यायसाध्यत्वं हि न स्वाध्यायेन जन्यता, अर्थज्ञाने तदसिद्धेः; तस्य पदज्ञानजन्यत्वात्; किन्तु प्रयोज्यत्वमात्रम्, तथाच प्रायश्चित्तविध्यपेक्षितं यल्लिपिमूलोच्चारणाधीन स्वाध्यायावधारणं तस्याप्यध्ययनसाध्यत्वप्रसङ्गः, स्वाध्याय साध्यावधारणमात्रस्य भाव्यत्वे प्रथमावधारणप्रभृतिचरमावधारणपर्यन्तानां

ानानां सहस्राणां वा सम्भवाचेपा नियमाद्दष्टानुषेध कल्पनीय,— ति गौरवम्, एवच स्वतात्पर्यमावेदयन्तीं श्रुतिमनादृत्य स्वाभीष्टा .र्थबोधनाय श्रुतिपीडने तच्छ्रुतिद्रोहादनर्थपरम्परातश्च न कदाचिदपि ुक्ति । तस्माद्यथाश्रुति विधिकर्मत्वबोधनमेवेष्टव्यम् ।

नन्वेकस्य शब्दस्य एकस्मिन्प्रयोगे वृत्तिद्वयेन युगपद्बोधकत्व ाञ दिग्क्षेपु न दृष्टमिति चेत्? किमत, पुष्पवच्छब्दे तद्दर्शनात्, यथादर्शनन्तत्र शक्तिद्वय युगपद्बोधकमिति यदि तदेहापि तद्बलादेव ुगपद्बोधनमेष्टव्यम् । इयांस्तु विशेष, पुष्पवत्पदे दिवाकरनिशाकर ाक्त्यो परस्पराव्यभिचारो दर्शनादेव, इह तु भावकर्मान्यतरशक्त्य व्यभिचारेण विधिशक्तेर्बोधकत्वदर्शनेपि क्वचित्तच्छक्त्योर्विधिव्यभिचारेण ोधकत्व दर्शनादेवेष्टव्यम् । "विष्णुरुपांशु यष्टव्य" "श्रोतव्यो मन्तव्य" इत्यादौ यदि तत्रार्हार्थस्तव्य, तर्हि तच्छक्तेर्व्यभिचारो विधि ाक्तिव्यभिचार एव दर्शनात् स्वभाव इति न काचिदनुपपत्ति । विधे ध्ययनान्वयित्वात्कर्मत्वस्यान्यान्वयित्वात् कथ व्यधिकरणयोरेकेनाभि ानमिति कथन्ता तु निर्निबन्धना, दृश्यते हि यजेतेति यागान्वयि वेधे कर्त्रन्वयिसङ्ख्यायाश्चैकेनाभिधानम् ।

यच्चोक्त साङ्गाध्ययनसम्पादितमेवार्थज्ञान फलवदुत्तरकर्माङ्गमित्य यासिद्धौ तादृशार्थज्ञानरूपविद्याविरहान्न शूद्राणा क्रत्वधिकार इत्यपशू ाधिकरणविरोधापात, शूद्राधिकारस्यापि तथासति दुर्वारत्वापातात्, नु "न शूद्राय मतिन्दद्यात्" "न चास्योपदिशेद्धर्मन्न चास्य व्रत ादिशेत्" "पद्युवा एतत् श्मशान यच्छूद्र, तस्माच्छूद्रसमीपे ाध्येतव्यम्"। "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्या श्रोत्रप्रति रण धारणे शरीरभेद उदाहरणे जिह्वाच्छेद" इत्यादिनिषेधवचनैरु देष्ट्रादिसागम्यीवाधाच्छूद्रादेर्वेदार्थज्ञानासम्भवेन वैदिककर्मस्वनुष्ठानमस-

सक्तेरेवागमान्न विरोध इति चेन्न; — अध्ययनविधेरर्थज्ञानपर्यन्तानियमवि-
रवाभावपक्षे शूद्रानुष्ठितवैदिककर्मणानिष्फलत्वे मानाभावेन निषिद्धाग
म्यागमनादौ रागिण इव निषिद्धाध्ययनविचारादौ रागिणश्शूद्रस्य प्रवृत्ति
सम्भवेन तदनुष्ठानप्रसक्ते तदनुष्ठितयागादेरपि तस्मिन् स्वर्गादिफल
सम्पादनप्रसङ्गात् ; निषेधस्यानिष्टफलत्वप्रतिपादनपरत्वेपि तदनुष्ठितविहित
कर्मविफलत्वप्रतिपादनपरत्वासिद्धे ; यद्यपि " तस्माच्छूद्रो यज्ञेनवक्लप्त "
इति शूद्रस्यानधिकार श्रूयते, तथापि " यज्ञेनवक्लप्त " इति वैदिक
कर्मविशेष एव स श्रूयते, नतु वैदिककर्ममात्रे, किंच तथाविध-
श्रुति मूलत्वोपनयनाधानादिकारणान्तराभावगादायापि प्रवृत्तत्वसम्भवेन
साक्षाच्छूद्रस्य तन्निषेधकत्वायोग, " गर्भाष्टमेषु ब्राह्मणमुपनयीत गर्भैका
दशेषु राजन्य गर्भद्वादशेषु वैश्यम्, " " वसन्ते ब्राह्मणोग्नीनाद
धीत ग्रीष्मे राजन्यश्शरदि वैश्य " इत्यादावुपनयनाग्न्याधानादौ राज
सूये राजत्वस्येव ब्राह्मणत्वादीना कारणत्वेनोपादानेन शूद्रे च तदभावेन
तत्कारणकोपनयनादीनामभावोऽध्ययनात्तन्मूलत्वाच्च निषेधस्मृते , तथाचा
क्षरावाप्तिपर्यन्तत्वपक्षे उपनयनादेराधानादेश्च त्रैवर्णिकाध्ययनतदनुष्ठेय-
कर्मस्वेव कारणत्वेनान्यथासिद्धतया शूद्राधिकारनिषेधस्मृतिर्न तदधिकार
निषेधपर्यवसायिनी ; नन्वध्ययनविधेरर्थावबोधपर्यन्तत्वनियमाविधित्वपक्षेपि
कथमुक्तातिप्रसङ्गो न स्यादितिचेत् ? उच्यते, उक्तरीत्या अध्ययनसम्पा
दितमेवार्थज्ञान फलवदुत्तरकर्माङ्गत्वान्यादृशमित्यस्मिन्पक्षे नियमशरीर
पर्यवसानेन शूद्रस्य चोपनयनादिसंस्कारविरहादुपनयनाङ्गकनियमाध्ययन
सम्पादितस्वाध्यायार्थज्ञानाभावेन तादृशस्यैव स्वाध्यायार्थज्ञानस्य फल
वदुत्तरकर्माङ्गत्वेनान्यादृशस्य तस्यातथात्वेनोक्तातिप्रसङ्गानवकाश इति ;
तस्मादध्ययनविधिरर्थज्ञानपर्यन्त इति स्थिते विधिमात्रस्यानुष्ठेयभावना-
र्थत्वादशत्रयवत्या एव भावनाया अनुष्ठेयत्वादत्रेतिकर्तव्यतारूपांशस्य
सामान्यतो विधिवाक्यार्थत्वेपि यागादिविधिष्विवेतिकर्तव्यताया असम्भ

वेन योग्यतया मीमांसापरपर्यायो विचार एवेतिकर्तव्यतात्वमर्हतीति स एवेतिकर्तव्यतात्वेनाध्ययनविधिना शेषरूपेणाक्षिप्यत इति तस्य वैधत्व मकामेनापि स्वीकार्यमिति ।

अत्रोच्यते । यदुक्तमध्ययनसम्पादितमेवार्थज्ञान फलवद्बुतरकर्माग नान्यादृशमिति स्वपक्षे नियमपर्यवसानमिति, तत्स्वपदमनुपदमेवोपन्यस्त विस्मृत्योक्तम्, स्वाध्यायसाध्यावधारणत्व क्रत्वन्तरोपयोगित्वविशेषित कार्यतावच्छेदकमिति ह्युपन्यस्तम्, तत् कथ त्वधिकारे अपशूद्रत्व सिद्धि ? क्रतूपयोग्यवधारणत्वं कार्यतावच्छेदकमित्युक्तौ क्रतूपयुक्तपर शाखातदर्थावधारणयोरपि स्वाध्यायाध्ययनसाध्यत्वप्रसङ्ग । अपिच प्रमाणानुरोधीहि प्रमेयनिश्चय, नतु स्वामीष्टनिर्णयानुरोधि प्रमाणम्, ततश्चास्य स्वाध्यायविधेरपशूद्रत्वे प्रामाण्याभावे सिद्धे यदि तत्र प्रमाणान्तर न स्यात् तस्य तदा सशूद्रत्वमेव स्यात्, आचारस्यैव वा प्रामाण्य स्यात्, न चात्र क्रतूपयोग्यवधारणत्वमवच्छेदकम्, ततश्च कार्यतावच्छेदकापुरस्कारेणैवार्थज्ञानार्थतया अध्ययननियम्यत इति चेत् ? एवमपि नापशूद्राधिकार, स्वाध्यायाध्ययनस्य तदर्थज्ञान मत्येव नियाम्यत्वात्, वस्तुतस्तु अपशूद्रत्वे आचार्याननुग्रह एव गति, आचार्या खलु शूद्राणामनधिकारप्रयुक्तो यज्ञदानादिनिषेध इत्यभिप्रायेण प्रथम "नशूद्रायेत्यनुजगृहु, निरुक्ताशयस्पष्टीकरणार्थमनन्तर "पद्युहवे" त्यायनुजगृहु । अत्र शूद्रस्य हेयत्ववचनमनधिकारितात्पर्यकमिति हृदयम् । अनधिकारप्रयुक्त एव दण्डविधिरित्यभिप्रायेण अनन्तर 'अथ हास्ये' त्यादिकमनुजगृहु । यदि स्वर्गसाधनमेव शूद्रानुष्ठितोपि याग, तदा तस्य पुण्यकृत्त्वान्न तन्निमित्तदण्डविधिर्युज्यते, अतोनधिकार एव वचनस्य तात्पर्यमित्याचार्याणा हृदयम् ।

वस्तुतस्तु नात्रापशूद्रनयविरोधशङ्कावकाश , तथाहि - इत्थ हि तदधिकरणशरीरम् , किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकार , उतापशूद्राणा त्रयाणामिति । तदर्थमिदं विचार्यते - किं कामश्रुतिप्रयुक्त विद्यार्जनम् , उत स्वाध्यायविधिसिद्धविद्योपजीविन्य कामश्रुतय इति । द्वेधा चात्र पूर्वपक्ष , एकस्तावत् स्वाध्यायाध्ययन क्रत्वनुष्ठानज्ञानौपयिकतया विहित क्रत्वङ्ग क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते, क्रतवश्चा विशेषेण चातुर्वर्ण्यमधिकुर्वाणा चतुर्णामध्ययनं प्रयुञ्जते, तत्र त्रयाणा ' वसन्ते ब्राह्मणमुपनयी ' तेत्यादिभिरुपनयनसस्कारोऽध्ययनाङ्गत्वेन विहित , चतुर्थस्तु विध्यभावादनुपनीत एव अधीत्य विद्या लब्ध्वाधिकरोतीति ; द्वितीयस्तु न क्रत्वङ्गमध्ययनम् , श्रुत्याद्यभावात् , अक्षरग्रहणादिदृष्ट कार्यपरम्परया वाक्यार्थज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्ते स्तत्रैवाध्ययन स्वविधिना विनियुज्यते, न तद्द्वारेण क्रतौ, तेनाधानादी वान्यङ्ग ज्ञानाङ्गमध्ययनञ्च क्रत्वङ्गम् , अतस्तेन विनापि क्रतूनामवैगुण्या दनधीतवेद एव शूद्र उपदृष्टृवचनादनुतिष्ठन्नधिकरोति । क्रतवोऽविशेषेण चतुरोऽप्यधिकुर्वन्तस्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनन्नप्रयुञ्जते, शूद्रस्य त्वन्यतस्सिद्धविद्यात्वाभावात्तदार्जनमपि प्रयुञ्जते, अतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाण प्रकृतोपनयनसंस्कृतान् किमर्थं वयमाचार्यसमीपमानीता इत्येव प्रयोजनमपेक्षमाणान् ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वन् तेषामेवाध्ययन विधत्ते, न शूद्रस्य, तथाप्य विहितेनैवाध्ययनेनोपायान्तरेण वा विद्या लब्ध्वाधिक्रियेतेति ।

सिद्धान्तस्तु क्रतुविधयोऽन्यथानुपपत्त्या विद्यार्जनमाक्षिपन्ति , यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्यान्द्विजन्मनो लभन्ते तदा तैरेव लब्धात्मानोऽनुपपत्तिक्षयान्न चतुर्थस्य विद्यामाक्षिपन्ति, मन्त्रवत्सु चानधीत वेदस्य कुतोऽधिकार , कुतस्तराञ्चानग्नेरग्निसाध्येषु ' तस्मात्त्रयाणामधिकार इति ।

यदा नैवं विहितोपायसिद्धज्ञानवत एव विषयोधिकुर्वन्ति तदा तदेत ज्ज्ञानमकर्मकालोपात्तमप्यभिवक्तृनामङ्गमिति तच्छून्यस्य स्वाच्छन्द्येन विद्यामार्जयतोपि न सिद्ध्यत्यधिकारः ।

अत्राधिकारानिरविशेपपर्यवसानसापेक्षाः क्रतुविधयः स्वापेक्षित-विद्याप्रयुक्तिलाघवमपेक्षमाणादशूद्रस्याप्यधिकारे तत्र विद्याप्रयुक्तिगौरव-भियाताननधिकुर्वन्तः परशास्त्राधीनविद्याप्रयुक्तावपि स्वशास्त्राधीनविद्यया [ विधया ] अन्यथासिद्धत्वेन तत्र प्रयुक्तचपेक्षाविरहात् त्रैवर्णिकेषु प्रयुक्ति लाघवं पश्यन्तः तानेवाधिकुर्वन्तीति न्यायनिष्कर्षः । तथाच स्वर्गकाम स्त्रैवर्णिको यजेतेति क्रतुविधितात्पर्यं पर्यवसितम् । एवञ्च कथमप शूद्रत्वासिद्धिः ।

नन्वर्थज्ञानोद्देशेन विधानाभावे कथं क्रतुविधिना विद्यायाः प्रयुक्तयभाव इति चेत्? तथासति वा कथं प्रयुक्तचभावः? नहि स्वाध्यायाध्ययनविधिना प्रयुक्तिसम्भव, फलस्याप्रयोज्यत्वात्ः तथाचाध्ययनविधिप्रयुक्ताध्ययनगृही तस्वाध्यायध्यभावलभ्या विद्या न केनापि प्रयोज्या, प्रवृत्तिं विनैव तस्मि द्धेरिति हि वाच्यम्, तथाच गुणकर्मत्वपक्षे अर्थकर्मत्वपक्षे च समा-नमेव प्रयुक्तिलाघवमिति सिद्ध पक्षद्वये प्यपशूद्रत्वमिति । तस्मात् नार्थज्ञानोद्देशेन स्वाध्यायावच्छिन्नाध्ययनविधि, किन्तु तव्यप्रत्ययानु-सारात् स्वाध्यायोद्देशेनैवाध्ययनविधि, स्वाध्यायस्य कर्मतया साध्य-त्वेन भाव्यत्वोपपत्तेरिति । अपिचानध्ययने प्रत्यवायश्रवणेनाध्ययन विधेर्जीवनाधिकारत्वाच्छान्ताधिकाराकाङ्क्षस्य नार्थज्ञानाधिकारकल्पनाव काश । अर्थज्ञानोद्देशेन विधावपि नाध्ययनविधिर्विचार प्रयुङ्क्ते, साध्यं हि साधनेन विनानुपपद्यमानं स्वगोचराकाङ्क्षामुखेन स्वसाधने नन्यथासिद्धे चिकीर्षामुत्पाद्य तत्प्रयुङ्क्ते, यथा – स्वर्ग परमापूर्वं परमापूर्वं यागम्, इत्यादिलोकसिद्ध एव चायमर्थः । ततश्चाध्ययनस्य तद्भावनाया वा विचारसाध्यत्वाभावान्न ताभ्यां विचारप्रयुक्तिः, किन्त्वर्थ

ज्ञानेनैव । तच्च फलमेवेति फलरागादेव लोकसिद्धकार्यकारणभाव-ग्रहानुरोधेन विचारे प्रवर्तते पुरुषः । अतः कथमर्थज्ञानोद्देशेन विधानेऽपि वैधता विचारस्य । यदि परमध्ययनविधिनार्थज्ञानं विधीयेत स्वाध्यायार्थज्ञानेन क्रत्वादि भावयेदिति तदा विचारस्यार्थज्ञानप्रयोज्यता पातालशंक्येतापि, नतदिष्टम्, युक्तं वा, अर्थज्ञानभावनाबोधकपदाभावात् । प्रवृत्तिलाघवमपेक्षमाणस्य विधेर्लोकसिद्धकार्यकारणभावग्रहेणाध्ययनविध्यभावेऽपि रागादेवावश्यप्रवृत्तिविषयत्वयोग्ये विचारे स्वाध्यायाध्ययनप्रवृत्तिमङ्गीकुर्वतः परमसाहसिकस्य हासपात्रतां विना किमुत्तरं वक्तव्यम् ।

नन्वध्ययनं हि गुणकर्म, अतस्तद्विधिरर्थज्ञानस्य दृष्टफलत्वात्तत्साधनं विचारं प्रयुङ्क्ते, अवहननविधिरिव वैतुष्यार्थमावृत्तिम्, इति चेन्न; — तत्रावृत्तावघातस्यैव विधानात्, तस्यैव हि लोकतः प्राप्तस्य नियमः । किञ्चात्र कर्मत्वानुगुणं फलं स्वाध्यायावाप्तिरेव, तत्कर्म समवेतत्वात् । वैतुष्यवत् । अतोऽध्ययनविधिरध्ययनावृत्तिमेव प्रयुञ्जीत, नान्यत् । विचारस्याध्ययनविध्यंशत्रयान्तर्भावश्चासिद्धः, अर्थज्ञानं किमंशः, अध्ययनं केनांश, उपनयनगुरुशिश्रूषादि कथमंशः, अतस्तत्र विचारो नावकाशं लभत इति । किमंशसाधनतामात्रेणाध्ययनाङ्गत्वशङ्का न कस्यापि सम्भवति । यागादिविधिष्विवेतिकर्तव्यताया असम्भवेनेत्यप्यसङ्गतम् । गुर्वनुवृत्त्यादेर्विधानादेव योग्यतया विचार इतिकर्तव्यतेत्यप्यसङ्गतम्, अध्ययनं प्रति विचारस्यायोग्यत्वात् । तस्माद्यथा तुषविमोकस्य दृष्टत्वात् यागार्थपुरोडाशोपयोगाच्च व्रीहीणां पूर्वमनुपयुक्ततया प्रतिपत्तिकर्मणो भिन्नत्वात् अवहननस्य तत्संस्कृतव्रीहीणां वितुषाणां भाव्युपयोगाकाङ्क्षिणां पुरोडाशमुखेन क्रतूपयोग इष्यते, एवमर्थज्ञानस्य ब्रह्मयज्ञजपादेश्च दृष्टफलत्वात्पूर्वमनुपयुक्तस्वाध्यायाध्ययनस्य प्रतिपत्तिकर्मणो भिन्नत्वाद्गृहीतस्य स्वाध्यायस्योत्तरोपयोगा-

काङ्क्षिणोर्थज्ञानजपमुखेनादृष्टोपयोग इष्यते । अस्यच नियमविधित्वाल्लिगित पाठादिकं व्यावर्त्यते । एवञ्चानधीतस्वाध्यायजन्यार्थज्ञानादि न क्रतूपयोगीति सिद्ध्यति ।

नन्वेवं सति विचारनिर्वृत्तेः प्राक् स्वशाखोक्तकर्मानुष्ठानं न स्यात्, व्यर्थत्वात्, इति चेत्, — शिष्टाः खलु बालानपि नित्यनैमित्तिकान्यनुष्ठापयन्ति. अतो नित्यनैमित्तिकेषु स्वाध्यायाध्ययनवदना धीतस्वाध्यायजन्यार्थज्ञानापेक्षेति वा अधीतस्वाध्यायजन्यार्थज्ञानविधुराणां कर्मणामनुकल्पत्वं वा कल्प्यताम् । वस्तुतस्तु नाध्ययनमर्थज्ञानस्याध्ययनजन्यस्यैव विहितकर्मानुष्ठानोपयोगित्वात् तन्मुखेन पुरुषार्थपर्यवसायि, अपितु ब्रह्मयज्ञजपादिमुखेनैव, भाव्युपयोगमाकाङ्क्षमाणस्य संस्कृतस्वाध्यायस्य होमादिव्यापकेन तेनैवाकाङ्क्षाशान्तेः । अतो धर्मपदेन सूचनानुपपन्नत्वाच्च रागात्प्रवृत्तिरित्येव राद्धान्तवर्णनमुचितम् ।

ननु धर्मजिज्ञासा न कर्तव्येति पूर्वपक्षिणोक्ते तत्प्रयुक्तपदमेव गृहीत्वा तेन धर्मिणन्निर्दिश्य कर्तव्यत्वप्रतिज्ञाया कथं धर्मिनिर्देशकेनैव हेतुसूचनसम्भवः ? उच्यते, पूर्वपक्षिणा वेदार्थविचारो न कर्तव्य इत्येवोच्यते, कृत्स्नस्वाध्यायस्याविवक्षितार्थत्ववादिनस्तस्य विशिष्य धर्मग्रहणे प्रयोजनाभावात्, सिद्धान्तिना तु राद्धान्तयुक्तिसूचनाय धर्मग्रहणं कृतमिति । लक्षणस्य कर्मोपासनसाधारण्यं स्पष्टम् । अथवा अधर्मस्यापि विचार्यत्वाद्धर्मपदं वेदार्थमात्रोपलक्षणम्, धर्मपदेनोपलक्षणस्य पूर्वोक्तसिद्धान्तयुक्तिसूचनं प्रयोजनम्, एवं कर्मब्रह्मोभयसङ्ग्रहादक्षरसाम्यम् । लक्षणमपि समानम्, ब्रह्मणोपि चोदनाप्रमाणकत्वात् । चोदना हि विधिवाक्यं यागादिरूपाराधनतात्पर्यकन्तत्फलप्रदनित्याराध्यतात्पर्यकञ्च, अर्वाचीनदेवतानां प्रळयकालास्थायिनीनां सर्गाद्यफलप्रदानासामर्थ्यात्, ततश्चार्वाचीनानां फलप्रदत्वे अकृताभ्यागमकृतविप्रणाशप्रसङ्गः । एवञ्च

भगवत्येव क्वचिद्देवतान्तरकञ्चुकिते क्वचिच्च तदकञ्चुकिते चोदनानां तात्पर्यम्। अत एव स्मरन्ति — "ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान्। सर्वभूतान्तरात्मानं विष्णुमेव यजन्तिते॥" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्तिते"॥ "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्"॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान्हि तान्॥" इति। अत्रच ब्रह्ममीमांसाया इव कर्ममीमांसाया असाधारण्येन कर्तव्यत्वविषयपूर्वपक्षानुत्थानात् अथातो धर्मजिज्ञासेति सामान्य प्रतिज्ञालक्षणतन्निरूपणानन्तरं कर्मविचारासाधारणप्रतिज्ञाया अकरण मिति मन्तव्यम्। तस्मादथातोधर्मजिज्ञासेति शास्त्रादावेव ब्रह्ममीमांसाया अपि प्रतिज्ञातत्वादैकग्रन्थ्यसिद्धिः। ऐकग्रन्थ्ये सत्यस्य ग्रन्थस्य पूर्वापदेशतासिद्धिश्च भवति। एतच्छास्त्रप्रतिपाद्यभगवदुपासनाङ्गतया "विविदिषन्ति यज्ञेन दानेन तपसानाशकेने" ति कर्माणि विधीयन्ते। अतस्तन्निरूपणमप्यत्रैव कार्यम्। असिना जिघांसति अश्वेन जिगमिषतीत्यादाविवात्र यज्ञादीनां प्रकृत्यर्थवेदनसाधनतयैवान्वयः, नतु प्रत्ययार्थ साधनतया, "क्रियावानेष ब्रह्मविदां वरिष्ठ." । "कर्मणैव हि संसिद्धिमास्थिता जनकादय" । "पुण्य ज्ञानं वर्धयति क्रियमाणं पुन.पुनः।" "कषायपक्ति· कर्माणि ज्ञानन्तु परमागतिः' । 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते"। इत्यादिश्रुतिस्मृत्यनुसारात्। वेदेच प्रकृत्यर्थप्राधान्यनैव सनन्तप्रयोगो भूयान् "तद्विजिज्ञासस्व" 'निदिध्यासितव्यः' 'विजिज्ञासितव्य.' इत्यादि। किञ्च विविदिषन्तीत्यस्य सन्निधौ 'मनसैवानुद्रष्टव्य' मिति विशदवेदनं विहितम्। 'एतमेव विदित्वा मुनिर्भवतीति स्तुतम्। अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र विध्यन्ताकांक्षा, नतु तदुभयरहिताया विविदिषायाः। यदि

ग्रन्थद्वयस्य परस्पराकांक्षितार्थप्रतिपादकता न स्यात्तदानीं कथमैक्ग्रन्थ्यमिति शंक्येतापि । उपजीवनप्रकारश्च दर्शितः । इतोन्ये प्रकारभेदा अपि भूयांसः स्पष्टाश्च ।

ननु जैमिनीयग्रन्थे ईश्वरस्य निराकरणात्तद्विरोधाद्वेदाचार्यग्रन्थस्य कथमनर्थान्तरैकग्रन्थ्यम् ? उच्यते, किं जैमिनेरीश्वरो नाभिमतमिति वा जैमिनिर्विप्रलम्भक इति वा भ्रान्तस्येयं शङ्का, उत तस्मिन् तद्भ्रान्तिविधुरस्य ? आद्ये तस्य ब्रह्मविदग्रेसरतया भगवतैव दर्शितत्वात् न तस्मिन् भ्रमविप्रलम्भौ भवत इत्युत्तरम् । द्वितीयेपि किमैकग्रन्थ्यमाक्षिप्यते ; उत विरुद्धतया भगवद्द्रोहिभिर्व्याख्यातानां सूत्रागामाचार्यजैमिन्यभिमतोर्थः क इति जिज्ञास्यते ? आद्यस्तु न सम्भवति, अज्ञानवयोधविप्रलम्भयोर्निरसनेन विरुद्धसूत्रकरणासम्भवात् । अपिच यदि परोक्तरीत्या देवताभावनिमित्त एव तत्रत्यायः, कथन्तर्हि अनुष्ठान ब्रह्माङ्गीकारयोरविरोधः । अतो ब्रह्मसिद्ध्यविरोध्येव तत्र न्यायोभिप्रेत इति सर्वैरपि ब्रह्मवादिभिरास्थेयम् । जिज्ञासा तु वेदान्तविजये निरूपितास्माभिः ।

ननु कथं तर्हि वेदाचार्येण केषाञ्चिदर्थानां जैमिनिमतत्वेनोपन्यासस्तन्निरासश्च क्रियते ? श्रवणकाले जैमिनिना शङ्कितानामर्थानां तद्बुद्धिप्रचिख्यापयिषया तथोपन्यस्य निरास इति ब्रूमः ।

ननु कर्मब्रह्मगीमांसयोरैकशास्त्र्यनिरूपणे किं प्रयोजनमिति चेत्तर्हि तन्निरसने वा तव किं प्रयोजनमध्यवसितमायुष्मतेत्युत्तरम् । वस्तुतस्तु अथशब्दस्यारम्भार्थत्वासम्भवः, तत्स्वारस्यलाभः, उत्तरत उक्तमित्यादेः स्वारस्यम्, एतन्निरूप्यार्थापेक्षितनिरूप्यार्थान्तराणामपीहैव ग्रन्थे निरूपणात् पूर्णोपदेशत्वम्, अविच्छिन्नसम्प्रदायाभियुक्तोपदेशात्प्रहश्चेतीमानि प्रयोजनानीत्युक्तप्रायमेव । अत एव सुस्थं पूर्वनिरूपितकर्माधिगमानन्तर्यं ब्रह्मविचारकर्तव्यताया: ।

ननु केन विचारागम ? जिज्ञासापदेनेति ब्रूमः । अत्र केचित्-जिज्ञासाशब्दो न विचारपरः, लक्षणाप्रसङ्गात्; किन्तु ज्ञानेच्छापरः, अतो भवतीत्येवाध्याहार इत्याहुः, तन्न, साङ्गवेदाध्ययनादेवागतप्रतीत्या पूर्वोत्तरभागसाधारण्येन जिज्ञासोदयेन तस्या कर्मविचारानन्तर्यस्य साधनचतुष्टयानन्तर्यस्य चासम्भवात्; अतो लक्षणापि न दोषाय । वस्तुतस्तु नलक्षणा, सविशेषणे हीति न्यायेन ज्ञान एव कर्तव्यतान्वयात्; किन्तु विशेषणान्वयो ऽस्वरस इत्येतावत्, तच्च स्वरसार्थान्तराभावदृढीकार्यम् । नचास्वारस्यमपि, जिज्ञासानिदिध्यासनादिपदाना प्रकृत्यर्थप्राधान्येनैव बहुश प्रयोगात् । जिज्ञास्यलक्षणपरजन्मादिसूत्रविषयवाक्ये जिज्ञास्यलक्षणसमर्पके तद्विजिज्ञासस्वेति ज्ञानप्राधान्यदर्शनादिहापि ज्ञानप्राधान्यमेव युक्तम् । कर्तव्य इत्यस्याहार्थस्तव्य, भवतिक्रियाध्याहारवादिनापि विचारकर्तव्यतासमर्थन एव सूत्रतात्पर्यमिष्यते, तस्यैव शाब्दत्वे सम्भवति तत्परित्यागो न न्याय्य इति ।

अत्र नीलकण्ठमतानुसारिण आहु — कर्मविचारानन्तर्यमेवाथशब्दार्थः, कर्मविचारस्य तदनुष्ठानचित्तशुद्धिद्वारा कर्मफलनित्यत्वानित्यत्वविचारप्रवर्तनेन कर्मफलानित्यत्वविवेकवैराग्य शमदमादि मुमुक्षाजिज्ञासाहेतुतया ब्रह्मविचारोपयुक्तत्वात् पूर्ववृत्तत्वम्, विशुद्धचित्तस्य च “तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते” — “प्राप्यान्त कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे” इत्यादिश्रुतिभिः कर्मफलानित्यत्वव्याप्तिज्ञापनादिलक्षणोपपत्त्यादितात्पर्योपबृंहिताभिस्सर्गप्रळयाद्यर्थवादसहिताभिस्स्वर्गाद्यनित्यत्वासिद्धेर्नित्यत्वावबोधिमन्त्रार्थवादाना प्रशसामात्रपरत्वसिद्धे कर्मफलानित्यत्वनिश्चय उपपद्यते, अतो वैराग्यादिकमिति । तत्र कर्मभेदफलसम्बन्धसाधनतारतम्यफलतारतम्याना न्यायेनैव

कर्मविचारदशायामेव नि रुपपादनेनानित्यत्वनिश्चयस्य कुत कर्मानुष्ठानापेक्षा ? किञ्च कर्मतत्फलविचारात् कर्मफलानित्यत्वविचारप्रवृत्तेश्चित्त शुद्धिसापेक्षत्वेऽनयोर्न क वैलक्षण्य किमपि न पश्याम । नापि कर्मप्रतिपादकवाक्यार्थज्ञानात् कर्मफलानित्यत्वप्रतिपादकवाक्यार्थज्ञाने, नहि देहात्मभ्रमादिदार्ढ्येन सद्विवेकादिज्ञानस्येव कर्मफलस्यानित्यत्वमेव नियमेन पश्यतो यागादिफलानित्यत्वे विचिकित्सायतस्तदनित्यत्वग्रहे चित्तशुद्ध्यपेक्षा, अनुष्ठितकर्मणामपि तद्यथेहेत्यादिवाक्ये आवृत्तिविधानादिन्यायसह कारत्वेन नहिनिन्दान्यायेन ब्रह्मज्ञानार्थवादताप्रतीतिस्सामान्यविषयतया चातुर्मास्यफलस्वर्गान्यविषयताप्रतीतिश्च न निवारयितु शक्या । चित्तशुद्धेस्तन्निवारकत्वे न्यायापेक्षापि न स्यात् । न्यायस्फुरण एव चित्तशुद्धेरुपयोग इति चेत् ? कर्मविचारेपि तदपेक्षाप्रसङ्गात् । सूक्ष्मन्यायस्य तदपेक्षत्वे कर्मविचार एव तदपेक्षा स्यात्, तन्न्यायानामेव सूक्ष्म त्वात् । फलानित्यत्वव्याप्तिस्तु लोके सर्वैरपि स्पष्टमेवावगम्यते । श्रुतिबलादेवहि नित्यत्वशङ्का । सा च वेदान्तन्यायेषु वाक्यनिबन्धनपूर्वपक्ष शङ्कावत्नाशुद्धिसापेक्षा, तत्रापि अशुद्ध्यपेक्षाङ्गीकारे ब्रह्मविचारस्य कर्मानुष्ठानापेक्षा भज्येत ।

अस्तु तेनैवोक्तम्, चित्तशुद्धिरहिता प्रथम धर्मविचारशास्त्राभ्या सादक्षय्यादिवाक्यमपि रात्रिसत्रादिन्यायै फलपर मन्यमानास्तद्विरोधि न्यायञ्च तत्राव्युत्पादित परामृष्टुमक्षमा स्वयमेव ब्रह्मजिज्ञासासूत्रार्थे न प्रवर्तन्ते, येतु प्राग्जन्मानुष्ठितैरेव तथाभूतै कर्मभिस्सम्पन्नचित्त शुद्धयस्त एवैतत्सूत्रपरिज्ञाने प्रवर्तन्ते, अनन्तरमेतत्सूत्रपाठेन नित्यानित्यविवेक लब्ध्वा तन्मूलमैहिकामुष्मिकफलेभ्यो वैराग्य शमदमादिसाधन मुमुक्षुत्वञ्च प्राप्य सहजसिद्धायाश्शिवभक्तेरतिशयञ्च प्राप्य जन्मादिसूत्रमारभ्य प्रवर्तिष्यमाणब्रह्मविचारे प्रवर्तन्त इति । तत्र चित्त

शुद्धेः प्रथमसूत्रप्रवृत्तिहेतुत्वे न किञ्चिदपि श्रुत्यादिकं प्रमाणं पश्यामः । चित्तशुद्ध्यभावे चित्तस्य विषयाकर्षात् प्रत्यग्विचारे न प्रवर्तत इति यदि, तदा चित्तशुद्धिश्शास्त्रप्रवृत्तावेव हेतुः, न प्रथमसूत्रे, जन्मादिसूत्र मारभ्य हि शास्त्रं परेषां मते । एकसूत्रपाठेन नित्यानित्यवस्तुविवेक इत्यप्यसङ्गतम् ,. न तावदिदं सूत्रं उपदेशरूपेण तदुत्पादकम् , न्यायनिबन्धनत्वात् , तत्समर्थपदादर्शनाच्च ; नापि न्यायप्रदर्शनमुखेन, त्वदीये संशयपूर्वपक्षराद्धान्तोपन्यासे प्रधानतया तदर्थतया वास्यार्थस्य विचार्यत्वानुक्तेः । किञ्चास्मिन् सूत्रे यदि स न्यायो व्युत्पाद्यस्तदा एवं सूत्रसन्निवेशोऽसङ्गतः, कर्मविचारानन्तर्यब्रह्मजिज्ञासयोरवक्तव्यत्वात् । नित्यानित्यन्यायप्रतिपादकसन्दर्भेण हि भवितव्यम् । किंच विषयप्रयोजन सम्बन्धाधिकारिरूपानुबन्धिचतुष्टयप्रदर्शनपरमिदं सूत्रमिति हि सर्वैरिष्यते, ननु तदुत्पादकमिति । धर्मविचारानन्तरं तदाराधनरूपधर्मानुष्ठानशुद्ध चित्तस्य विवेकादिसम्पत्त्या ब्रह्मज्ञानेच्छा भवतीत्येतावान् सूत्रवाक्यस्य शब्दार्थ इति ह्युक्तम् । तत्रान्यतस्सिद्धचित्तशुद्धेः हेतुतयानुवादवत् नित्यानित्यविवेकस्याप्यन्यतस्सिद्धस्यैवेहानुवादो युक्तः । यदि शुद्धचित्तस्यै तत्सूत्रमवृत्तस्यानेन सूत्रेण नित्यानित्यविवेकादिसम्पत्या ब्रह्मज्ञानेच्छा भवतीति सूत्रवाक्यार्थः, तदा नित्यानित्यविवेकार्थन्यायो विवक्षित इति वक्तुं शक्येतापि, नचैवं वाक्यार्थः कस्मैचिद्रोचते । किंच "तद्य-थेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति वाक्ये व्याप्तिप्रदर्शनेनोपपत्तिरूपतात्पर्यलिङ्गावगमात् ब्रह्मज्ञानानन्त स्थिरफलत्वे तात्पर्यनिर्णयान्नित्यानित्यविवेको भवति , अयंच न्यायोऽनइशब्देनोच्यते, अतोऽनेनैव सूत्रेण नित्यानित्यविवेकसिद्धिरिति ह्युच्यते, तदनुपपन्नम् , स्पष्टतात्पर्यस्य वाक्यस्य सत्वशुद्धिविरहात् ज्ञानाला-भेपि कर्मानुष्ठाने तत्सिद्धौ सुखेनैव ज्ञानलाभात् तल्लब्धये कुतस्सूत्र मपेक्ष्यते । यदि शुद्धचित्तस्यापि स्पष्टतात्पर्यलिङ्गस्य वाक्यस्यार्था-

वचोधो न सिद्धयतीत्युच्यते, कथं तर्हि अथ इत्येतावन्मात्रेण तत्सिद्धिः । तथासति अत इदमेवमित्येतावन्मात्रेणैव सर्वार्थसिद्धौ विंशतिलक्षणीसूत्राणामपि वैयर्थ्यमेव ।

सिद्धान्तस्तु नैतद्दोषगन्धवार्तामपि सहते, 'अथातश्शेषलक्षणम्' अ थातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे' त्यादावथशब्देन पूर्वग्रन्थसिद्धार्थस्य परामर्शाद्धेतुभाव एवातश्शब्दस्य तात्पर्येण तद्धेतुभावोपपादकेपि अतश्शब्दस्य तात्पर्यसम्भवात् । परपक्षेप्येवं कर्मविचारस्य हेतुभावोपपादके तात्पर्याङ्गीकारे कर्मविचारानन्तरं ततएव हेतोः कर्मानुष्ठानेन 'विशुद्धचित्तस्य न्यायप्रतिसन्धानेन नित्यानित्यविवेकात् ब्रह्मजिज्ञासा भवतीत्येतावल्लभ्येत, नत्वत्र तन्नयायव्युत्पादनम् ।

केचित्तु — साधनचतुष्टयानन्तर्यमथशब्दार्थमाहुः; तत्र विवरणमतानुसारिणस्त्वाहुः — मुमुक्षाधिकारिविशेषणम्, तत्र हेतुश्शमदमादिः, तत्र इहामुत्रार्थफलभोगविरागः, तत्र नित्यानित्यवस्तुविवेक इति; तन्न, अधीतवेदान्तार्थस्य विचारात्प्रागनिर्णयेन मुमुक्षाया असम्भवात् ।

अत्राह नवीन — न तावन्नित्यानित्यवस्तुविवेकासम्भवः, आमनुष्यादाब्रह्मलोकं कर्म कार्यम्, कार्यञ्च सर्वमनित्यं घटादिवदिति न्यायानुगृहीतया "तद्यथेह कर्मचितो लोकः क्षीयते" इति स्पष्टश्रुत्यैव विचारात् प्रागेव कर्मफलस्यानित्यत्वावधारणसम्भवात् । आत्मा च नित्य इत्यवगम्यते, अन्यथा कस्यापि मते मोक्षाय प्रवृत्त्यसम्भवात्; तस्यानन्दरूपत्वमपि परमप्रेमास्पदत्वात् "आनन्दाध्येव खल्विमानीत्या" दिवाक्याच्च निश्चीयते । नचैवं विचारानारम्भप्रसङ्गः, अन्यस्याप्येवं निश्चेतुं शक्यत्वादिति वाच्यम्; यत्र मानान्तरविरोधो वर्तते तद्धि शब्दश्रवणमात्रान्न निश्चेतुं शक्यते, अद्वैतसमन्वयश्च तत्तत्पूर्व

पक्षन्यायमानान्तरादिना प्रथमं विरुद्धतया प्रतीयत इति न वाक्यमात्रान्निश्चेतुं शक्यते । ब्रह्मणो नित्यानन्दरूपत्वन्तु न तथेति तच्छब्दादेव निश्चेतुं शक्यते । नहि परमात्मनः सुखाभेदे प्रत्यक्षविरोधोऽस्ति । नचानित्यसुखस्य नित्यार्थभेदविरोधः, अनुकूलतर्काभावेन सुखमात्रे अनित्यत्वावधारणायोगात् । सौषुप्तिकसुखावमर्शदर्शनेन जीवसुखस्यापि नित्यतया तद्विनाशबुद्धेरन्यविषयत्वावधारणसम्भवात् । किञ्च येन यदेकं न्यायेन निश्चितं तेन इतरदपि न्यायेन निश्चेतव्यमिति न नियमः, पुरुषाणां विचित्रबुद्धितया न्यायानां चालौकिकविषयतयातिसूक्ष्मत्वात्तन्नियमानुपपत्तेः । अन्यथा धूमाग्न्योर्व्याप्तिस्सर्वै रेव गृहीतेति सर्वापि व्याप्तिरेवं भावेति वैशेषिकादिग्रन्थान्तरारम्भो व्यर्थ एव स्यात् । एतादृश एव पुरुषोऽस्मिच्छास्त्रेऽधिकारी, तदुक्तम् - " नात्यन्तमज्ञो नोतज्ञस्सोऽस्मिञ्शास्त्रे ऽधिकारवान् " इति । एवंच ब्रह्मसुखस्य जीवसुखस्य च नित्यत्वं तदितरभोगानाञ्चानित्यत्वं सुनिरूपणम् । ततो वैराग्यम्, ततश्शरीरेन्द्रियचेष्टाया मनोवृत्तेश्च निमित्ताभावाच्चित्तेन्द्रिययोर्व्यापारोपरमरूपौ शमदमौ भवतः, ताभ्यांच तितिक्षादिः, ततश्चाविक्षिप्तचित्तो निरस्तानर्थव्रातानानतिशयानन्दगळिताखिलभेदमात्मानं वेदान्तवाक्यैर्बोधिगम्य मुमुक्षुर्भवति, ततो " ब्रह्मविदाप्नोति परं " " तरतिशोक " मित्यादिश्रुतितो ज्ञानस्य मोक्षहेतुतान्निश्चित्य जिज्ञासत इति ।

अत्रोच्यते- यदि न्यायोपबृंहितवाक्येन नित्यानित्यवस्तुविवेकः, तदा ज्ञातव्यान्तरपरिशेषाभावप्रसङ्गाद्विचारविधेरेवोच्छेदप्रसङ्गः । तथाहि- मुमुक्षासिद्ध्यै हि नित्यानित्यवस्तुविवेकादेः पूर्ववृत्तत्वमिष्यते, अत्र यद्य द्वैतनिश्चयाभावेपि मुमुक्षा जायते, तर्ह्यानन्दत्वनित्यत्वयोर्निर्धारणं किमर्थमपेक्ष्यते ? नित्यपुरुषार्थनिर्धारणाभावे अनित्यसुखवैराग्याभावेन कथं मुमुक्षेति यदि, तदा प्राप्तियोग्यताज्ञानाभावे कथं सा ? कथंचाद्वितीयत्वज्ञानं विना अभेदलक्षणप्राप्तियोग्यताज्ञानमित्यपि पश्य । किञ्च यद्य

द्वैतनिश्चयो विचारात्प्राङ्नास्तीत्यभिमतम्, तदा परमप्रेमास्पदत्वेनानन्द रूपताज्ञानं ब्रह्मणि कथमुपपाद्यते । ननु जीव एव तदुपपाद्यत इति चेत्? किं तस्य प्रयोजनम्? तत्स्वरूपस्य पुरुषार्थताबुद्धिरिति चेत्? तर्हि तत्स्वरूपस्य सिद्धताज्ञानादेव न साध्यताबुद्धिरिति न तादर्थ्येन विचारप्रवृत्तिसम्भवः । किञ्च स्वयमेव "ब्रह्मविदाप्नोति परम्" इति ज्ञानस्य मोक्षसाधनताज्ञानमानन्दरूपताज्ञानञ्च उपपादयता परब्रह्मण एव प्राप्यताबुध्द्युपपादनात् ब्रह्मणा सह स्वस्याभेदज्ञानाभावे स्वस्य रूपस्यानन्दरूपताबुद्धेः क उपयोगः? किञ्चाभेदबुद्ध्यभावे कार्यानित्यताज्ञानवतो नित्यापुरुषार्थज्ञानमसम्भवि । यच्च सूक्ष्मत्वादनिर्धारणमुक्तम् तदनुपपन्नम्, सुखीस्यामित्येव सुखे प्रेमदर्शनेन प्रेमास्पदतामात्रस्य सुखरूपतासाधकत्वं कस्यापि बुद्धिमनधिरूढम्, कार्यं सर्वमनित्यमेवेति बुद्धौ विद्यमानायामपि अभेदमबुद्ध्वापि नित्यसुखस्य साध्यता सुख विनाशप्रत्यक्षस्याप्यविषयता कृत्स्नसुखस्याप्येकता जगत्कारणे प्रकृति पुरुषसन्देहे विद्यमान एवानन्दरूपताञ्च परमसूक्ष्मरतिदुर्भगैरप्यार्थे पश्यतो दुर्मेधसः बुद्ध्यगोचरं किमपि सौक्ष्म्यं जलचन्द्रघटाकाशादि न्यायेष्वभेदसाधकतया ऽभिमतेषु लेशतोपि न पश्यामः । मानान्तर निरोधस्सुखनित्यत्वेपि तुल्यः । तस्मात्यदनिर्धारितमित्युक्तं तन्निर्धारणमथ र्जनीयमेव । यन्निर्धारितमित्युच्यते तदेव तु सन्दिग्धम् । तथाहि आनन्दत्वन्तावत् जगत्कारणे सन्दिग्धम्, कारणत्वस्य प्रधानचेतनगतत्व सन्देहेनानन्दपदस्यापि मुख्यगौणार्थत्वसन्देहात् "अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः" इति मोक्षदशायां आनन्दाभावप्रतीतेर्मुक्तिकाले प्राप्यतया विद्यमानस्य तस्यानन्दस्वरूपत्वासम्भावनयाच "आनन्दाद्ध्येवे" ति वाक्यार्थनिर्णयाभावात् । परमप्रेमास्पदत्वेनानन्दरूपतानिर्धारणसम्भवो प्यहन्त्वस्यैवाहमथ प्रेम्णि प्रयोजकत्वात् । सुखत्वस्य प्रेमप्रयोजकत्वं स्वसमवायान्तर्भावेनैव, अहं सुखीस्यामित्येवेच्छादर्शनात् परसमवेत

तया ज्ञाते निरुपाधिकेच्छाया अदर्शनात् । शैलगततृण ज्ञाते द्वेषदर्शनात्, कुत्राप्यसमवेतो निरतिशयानन्द कश्चिदस्तीति केनचिदुक्ते सिद्धताज्ञानविरहदशायामपीच्छाया अदर्शनाच्च । तस्मादहन्त्वमपि प्रेम प्रयोजकमेव । अथवा अहं सुखीस्यामिति प्रेम्णो दर्शनात् सुखविशिष्टात्मन्येव प्रेम, न स्वात्ममात्रे, नापि सुखमात्रे, अहं स्यामिति तु प्रेम चन्दनादाविव सुखसाधनताप्रयुक्तम् । वस्तुतस्तु सुखवदहमर्थोऽपि परमप्रेमास्पदमेव, तत्रच तत्त्वादेव, तथैवानुभवात्, अहं स्यामिति ह्यनुभव । नच तस्य तत्त्वमानन्दात्मकचैतन्याभेदाध्यासादेवेति वाच्यम्, तथासति विश्वमेव परमप्रेमास्पदं स्यात् । तदङ्गीकारेच वस्तुत्वादेव विश्वस्य परमप्रेमास्पदत्वम्, नतु चैतन्याभेदादिति स्यात् । किञ्च त्वदभिमतसुखस्य निरुपाधिकप्रेमास्पदत्व यदि क्वचिद्दृश्येत तदानीमेव तदभेदाध्यासादन्यत्र तदिति स्यात्, नचेदस्ति, लोके हि सुखतया सम्प्रतिपन्ने तरतमभावमुपगते वस्तुन्येव प्रेमास्पदता दृश्यते । तरतमभावो वृत्तिगत एव, नतु स्वरूपगत, व्यक्त्यैक्यात्, तरतमभावेन प्रेमतारतम्यदर्शनादपि प्रेम्णस्तादृशवस्त्वेव विषय । तस्माद्यदि चैतन्यस्वरूपस्य तरतमभावापन्नवस्तुना वृत्तिरिति त्वदभिमतेनैक्याध्यासोऽस्ति तदा तद्वस्त्वभेदाध्यासनिबन्धनमेव चैतन्यस्य प्रेमास्पदत्वमिति स्यात्, यदि तेन नैक्याध्यास, तदा चैतन्यस्य न प्रेमास्पदतागन्धोऽपीति स्यात्, तस्मादहमर्थस्य प्रेमास्पदत्वन्निरुपाधिकमेव । तस्मादनुभवबलादहन्त्वानन्दत्वरूपप्रेमास्पदतावच्छेदकद्वयाङ्गीकारो न दोष । एतेन सुखाश्रयत्वनिबन्धनमेवाहमर्थस्य प्रेमास्पदत्वम्, न तत्स्वरूपनिबन्धनमिति प्रत्युक्तम्, सुखप्रतिसन्धानं विनैव स्वस्मिन्निरुपाधिकप्रेमास्पदत्वदर्शनात् । तथा नित्यत्वमपि सन्दिग्धमेव, "नात्माश्रुतेरि" त्यादिना तस्यापि विचारात्, "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यती" त्यादिना विनाशप्रतीतेस्तस्य विचार्यत्वाच्च । नच धर्मविचारदशायामेव शरीर

वियोगानन्तरमपि स्थायित्वनिश्चयान्नित्यत्व निश्चितमेवेति वाच्यम् , सर्व भूतमोक्षान्तरस्थायित्वस्यानिश्चयादेतच्छरीरानन्तर शरीरान्तरसम्बन्धस्यैव ग्रहात् । यदुक्तम् आत्माच नित्य इत्यवगम्यते, अन्यथा कस्यापि मते मोक्षाय प्रवृत्तिर्न स्यादिति, तत्र किंनित्यत्व स्वप्रकाशसिद्धमित्यभिमतम्, उत शास्त्रेण ज्ञातव्यमिति ? आद्यमुपहास्यम् । द्वितीये तत्तच्छास्त्रेण तत्वहितपुरुषार्थान्निश्चित्य स्वहिते प्रवर्तत इति तत्तच्छास्त्रश्रवणात्प्रागात्म नित्यत्वज्ञानाभावे तथैव न कस्यापि मते दोष । यच्च नित्यत्वप्रती त्युपपादनम् , तद्यदि जीवानन्दविषये, ब्रह्मज्ञानस्य कुतो नित्यताव गमोपपादनम् । आत्मत्वहेतुना तत्रापि नित्यत्वावगमविवक्षायामीक्षत्या घधिकरण दत्तजलाञ्जलि स्यात् । किञ्चैव नित्यानन्दब्रह्मनिर्धारणाभावा त्तन्मूलवैराग्यमसम्भावितम् । तन्निश्चयेपि न वैराग्यसम्भव , त्वयैव प्रति षिद्धत्वात् । सौषुप्तिकपरामर्शानुसारात् जीवसुखस्यापि नित्यत्व ह्युक्तेच । विनाशबुद्धेरन्यविषयत्वोपपादनेन सर्वं सुख नित्यमेवेत्यवगमेन कथमितर भोगेष्वनित्यताबुद्ध्या तत्र वैराग्यम् ? अवच्छेदकानित्यताज्ञान न वैराग्यप्रयोजकम् , तथासति ग्रामे स्थिरतया ज्ञाते गृहारामक्षेत्रावच्छेदाना मनित्यताज्ञानात् ग्रामे वैराग्यापत्ते । नचावच्छेदकवैराग्यमेवेह विवक्षित मिति वाच्यम्, तत्र भोग्यताबुद्धिविरहे नित्यसिद्धवैराग्यस्यानित्यता ज्ञाननैरपेक्ष्यात् । भोग्यताबुद्धौ चानित्यताज्ञानादपि न वैराग्यम्, सार्वभौ मस्य सहस्रसवत्सर राज्यमनुभवतोपि क्षणमात्र कन्दुकक्रीडादर्शनात् । यदि तस्य नित्यसुखविरोधिता ज्ञायेत, तदा पर ततो वैराग्य स्यात् । तज्ज्ञानञ्च त्वयैवापह्नुतम् , अवच्छेदकताबुध्द्युपपादनेन समानकाली नत्वबुध्द्युपपादनात् । किञ्च स्वरूपानन्दापेक्षया वैषयिकसुखानामल्पा ल्पानामप्युत्कर्षस्य नित्यानन्दाविरोधस्य च ज्ञायमानत्वात् न वैराग्य सम्भव । इदानीमानन्दस्वरूपमावृतम्, विषयसम्बन्धाधीनवृत्तितारतम्ये नावरणनिवृत्तितारतम्यात् प्रकाशतारम्यम् , मोक्षेत्यन्तावरणनिवृत्तावन

चच्छिन्नानन्दप्रकाश इति बुद्धिरसम्भवतीति चेन्न, — स्वरूपस्यैव प्रकाश रूपतया तरतमभावनिश्चयासम्भवात् । नह्यावरणतरतमभावस्सन्नपि स्वरूप एव तरतमभावसम्पादनक्षम । किञ्चाऽवरणनिवृत्तितारतम्यस्य प्रकाशतारतम्यप्रयोजकत्वे सुखवृत्त्यभावदशाया स्वरूपसुखप्रकाशो न स्यात्, ततश्च परमप्रेमास्पदत्वञ्च स्यात्। निरवयवे निर्धर्मके स्वरूपे ईषदनावृतमिति शङ्का नोत्थानमर्हति। आवरणनिवृत्तितारतम्यमप्यनुपपन्नम्, तदपिह्यावार्यस्य सावयवत्वे सधर्मत्वे वा भूयोवयवावच्छिन्ना ल्पावयवावच्छिन्ननिवृत्तौवा किञ्चिद्धर्मावच्छिन्नभूयोधर्मावच्छिन्ननिवृत्तौ वा स्यात्, नचैतत्सम्भवति। किञ्च नास्ति न प्रकाशत इति व्यवहारयोग्यतावरणमित्युच्यते, को नाम तन्निवृत्तौ तरतमभाव ? उत्कृष्टसुख गोचरत्वास्तीति व्यवहारयोग्यताप्रतियोगित्व निवृत्तेरुत्कर्ष इति शङ्का नोदेतु समर्था, सुखतदावरणनिवृत्त्युत्कर्षयो परस्परनिरूप्यतयान्योन्याश्रयात्, आवरणनिवृत्तितारतम्यस्यैव सुखतारतम्यरूपतया आत्माश्रयाद्वा।

किञ्च — शमादे कथ मुमुक्षाहेतुता ? नचाविक्षिप्तचित्तैरेवा वेदान्तादात्मावगमे मुमुक्षेति वाच्यम्, मुमुक्षाया प्रागेव तादृगात्मावगमे तत श्रवणे प्रवृत्त्यनुपपत्ते । यद्यापातप्रतीतेरेव सा, तर्हि नित्यानित्यविवेकदशायामेव सिद्धेति न तस्यादृशगाद्यपेक्षा । दुरीश्वरद्वारबहिर्वितर्दिस्थदुरासिकाविक्षिप्तचित्ता निरन्तररसिकविलासिनीचर्वितसारगद्गदकण्ठा अपि ह्यद्वैतनिर्द्धार्य तत्रैव प्रगल्भवाचश्चितुरचराटिप्रालिप्सया चातुर्वर्ण्यबहिष्कृतपञ्चपल्लीपालदुरीश्वरनामाङ्कितग्रन्थानपि रचयन्त परस्परसिष्यत्यादिन उपलभ्यन्ते । तस्मादद्वैतस्य निर्धारणेऽपि न शमापेक्षा । किं पुनरापातप्रतीतौ ।

" शान्तो दान्त " इति श्रुतिस्तु शमादेरपासनार्थतामाह । नच " प्रशान्तचित्तायेति " वाक्यमन्यार्थानुवादरूपमङ्गत्वबोधनसमर्थम्, ग्रहणोपयोगिचित्तावधान पूर्वकाण्डादिसाधारण लोकसिद्धमेवहि तत्रानूद्यते ।

नहि “ शमदमाद्युपेतस्स्या ” दिति ब्रह्मविचारान्तर्निरूपयिष्यमाण शमादि ब्रह्मविचाराधिकारिविशेषण भवितुमर्हम् । विपर्यस्तश्चैषा साध्यसाधनभाव तथाहि - वैषयिकसुखविरागो नानित्यताज्ञानमात्रात् , तज्ज्ञाने सत्यपि प्रेम्णो दर्शनात् , किन्तु मोक्षोपाय कामयमानस्य शमदमादेस्तदङ्गत ज्ञानादेव, मुमुक्षयैवच मोक्षोपायकामनेति मुमुक्षयैव शमादिस्साध्यते । मुमुक्षापि न सम्भवति, ब्रह्मस्वरूपानन्दस्य नित्यमनुभूयमानत्वात् । नच भेदभानदशाया दु खसभिन्नतया स्वरूपानन्दस्यासत्कल्पतया मुमुक्षा सम्भवतीति वाच्यम् , असत्कल्पता किं द्युमणिसन्निधौ खद्योतादेरिवा प्रकाश , किंवा प्रबलव्यसनाभिभूते सुहृद्दर्शनादेरिव यथापुर सुखानु त्पादकत्वम् , किंवा प्रबलानर्थसवलितविषसपृक्तमधुभक्षणजन्यसुखस्येव स्वविषयकामनानुत्पादकत्वम् ? नाद्य , तथासति प्रेमानुपपत्ते । न द्वितीय , स्वत पुरुषार्थतया सुखोत्पादकत्वेन पुरुषार्थत्वासिद्धे । न तृतीय , सर्वदा प्रेमदर्शनात् , त्वयातदभ्युपगमाच्च । अथस्यात् — ब्रह्मानन्दोहि परमपुरुषार्थ , स स्वाभाविकाभेदाद्यद्यपि प्राप्त एव, तथाप्यौपाधिकभेदेना प्राप्तत्वभ्रमात् कामना सम्भवत्येव, कण्ठचामीकरन्यायादिति , उच्यते, स्वाभाविकाभेदो यद्यगृहीतस्तदा प्राप्तियोग्यताज्ञानाभावान्न काम्यता , नहि भिन्नस्य भेद कालान्तरे सम्भवति । यदि ज्ञात , कुतो प्राप्तताभ्रम ? कुतो मुमुक्षा ? कुतो जिज्ञासा ? कण्ठचामीकरन्यायश्च विषम , तत्र न प्राप्तत्वबुध्यनन्तर काम्यते, किन्तु प्रागेवेति ।

किञ्च यद्यपरोक्षज्ञान मोक्षसाधनत्वेन निर्णीत स्यात् , तदा मुमुक्षा ज्ञानकामनाद्वाराधिकारस्स्यात् । तच्च विचारारम्भात् प्रागसन्दिग्धमेव प्रपञ्चमिथ्यात्वज्ञान विना निवर्त्यत्वग्रहणासम्भवात् । यदि कश्चित्स्वा

श्रवणविधिबलात् श्रवणे प्रवृत्तिं कल्पयेत्, सोयं "सोहं मन्त्रविदेवास्मि नात्मविदि" ति श्रवणाधिकारिण आत्मज्ञानाभावोक्त्या प्रतिवक्तव्यः । नच मोक्षसाधनज्ञानाभाव एव तत्रोच्यत इति वाच्यम्, मन्त्रविदेवाऽस्मीत्युक्त्या ज्ञानस्वरूपस्यैव निषेधावगमात् ।

वस्तुतस्तु पूर्वकाण्डविचार इवात्रापि जिज्ञासुरेवाधिकारी; नच तदर्थमेव साधनचतुष्टयापेक्षा, प्रकारान्तरेण जिज्ञासोत्पत्तेः प्रागभिधानादिति ।

वाचस्पतिमतानुसारिणस्तु— नित्यानित्ययोर्वसन्तीति नित्यानित्यवस्तूनि, तानि च सत्यत्वासत्यत्वसुखत्वदुःखत्वानि, सत्यत्वादिधर्मिणः तद्धर्माणाञ्च विवेको नित्यानित्यवस्तुविवेक इति । तदिदमसारम् । तथाहि किमात्मानात्मनोरन्यतरस्मिन् सत्यत्वं सुखत्वं च इतरस्मिन्नसत्त्वं दुःखत्वं चेति विवेको विवक्षितः, अथवा प्रपञ्चो ऽसत्योदुःखात्मकश्च तदधिष्ठानं सत्यं सुखरूपं चेति विवेको विवक्षितः? नाद्यः, वैराग्याहेतुत्वात् । न द्वितीयः, निरूपणीयपरिशेषासिद्धेः । नच निर्गुणत्वं निरूपणीयं शिष्यत इतिवाच्यम्, दृगन्यन्मिथ्या दृश्यत्वादिति प्रपञ्चमिथ्यात्वसिद्ध्यैव निर्गुणत्वसिद्धेः । अपिच प्रपञ्चाधिष्ठानस्य सत्यस्य कथं सुखत्वनिश्चयः? "यो वै भूमा तत्सुखमि" ति वाक्यादिति चेत्? कथमनेनाधिष्ठानस्य सुखरूपतासिद्धिः । यत्र "नान्यदि" ति वाक्यशेषादिति चेत्? तत्र किं "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा योवै भूमा तत्सुखं यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं अथ-यदल्पं तन्मर्त्यंनाल्पे सुखमस्ती" ति वाक्यस्य यस्मिन् दृष्टे तत उत्कृष्टं भोग्यं न पश्यति स एव भूमा सुखम्, यस्मिन् दृष्टे तत उत्कृष्टं भोग्यं पश्यति तद्वैषयिकसुखं अल्पम्, नाल्पे सुखत्वमस्तीत्यर्थो विवक्षितः; अथवा यस्मिन् दृष्टे तत उत्कृष्टं भोग्यं विषयं न पश्यति स भूमा

सुखसाधनं निरवधिकानन्दद्वैतत्वनुभवगोचरं, यस्मिन् शब्दादिविषये दृष्टे सत उत्कृष्टं भोग्यं विषयं पश्यति तद्रूपं किञ्चित्सुखजनकं तस्मिं श्चल्पे सुखं नास्ति शब्दाद्यनुभवेन जातमपि सुखमल्पत्वात् मर्त्यत्वा दनित्यत्वाच्चासुखकल्पमित्यर्थः, यद्वा यस्मिन्नधिष्ठाने तत्तत्तरसाक्षात्कृते ततोऽन्यद्यथापुरं सत्यत्वेन न पश्यति स भूमा सुखम्, यस्मिन् दृष्टे ऽन्यत्सत्यत्वेन पश्यति तदल्पं विनाशि तत्र सुखत्वमेवेति ? तत्र नाद्यद्वितीययोरधिष्ठानस्य सुखत्वसिद्धिः । यद्यप्याद्ये सिद्ध्यति, तथापि अधिष्ठानं सुखमित्येवरूपप्रतीतेरनेन वाक्येन न सिद्धिः । नापि तृतीयः, घटादौ सुखत्वाप्रसक्त्या तत्र सुखस्य निषेधासम्भवात् । वपयिकसुखेषु सुखत्वं निषिध्यत इति चेन्न, भूमएव तत्त्वेन तत्र निषेधासम्भवात् । अपिच भूम्नस्सुखत्वसिद्धावपि तस्य स्वीयपुरुषार्थताज्ञानाभावे वैराग्यासम्भवात् स्वपुरुषार्थतासिद्धिर्वाच्या, सा च स्वस्याभिन्नतया प्राप्यताज्ञाने स्वस्य भूम्नो भेदेन मिथ्यात्वप्रसङ्गात् पुरुषार्थभागिनोसिद्ध्यापत्त्या स्वाभिन्नतयैव भूमसुखस्य स्वपुरुषार्थता वाच्या, तथाचाभेदोऽपि ज्ञात एव । एवञ्चासत्यवादिना प्रपञ्चमिथ्यात्वं ब्रह्मणो निर्गुणत्वं जीवब्रह्मणो रभेद इत्येव ज्ञात्वा सर्वम् । तच्च नित्यानित्यविवेकदशायामेव ज्ञातमिति विचारानारम्भापादकस्य कथं विचाराधिकारता । ननु सर्वोऽप्यर्थो ज्ञात एव, तथापि वेदान्तानान्तत्र समन्वयो न ज्ञात इति तत्परिज्ञानार्थो विचार इति चेन्न, सर्वस्याप्यर्थस्य वेदान्तं विनैव ज्ञाने वेदान्तानामनुवादकत्वप्रसङ्गात् । वेदान्तरेव ज्ञाने न विचार्यैरविशेषः ।

किंच तत्वज्ञाने जाते किमर्थस्समन्वयागमः ? तत्समन्वयापरिज्ञाने एषामर्थाना तद्विरोधशङ्का स्यादिति तु न सम्भवति, तथासति वैराग्यासिद्धिप्रसङ्गात् । यत्र नित्यानित्यविवेको न प्रसिद्धनित्यानित्यविषयः, किन्तु सत्यासत्यविषय इत्यत्र नियामकमुक्तं परिमळभाष्ये 'नित्यानित्यवस्तुविवेकानन्तरं नित्यफलप्रेप्सामनपेक्ष्य तावद्विवेकमात्रेण

सकलकर्मफलविराग उक्तः, नित्यवस्तुप्रेप्सया तत्प्राप्त्युपायान्वेषणं पश्चादुक्तम्, अयं क्रमो नित्यत्वं सत्यत्वमिति व्याख्याने युज्यते, न स्थायित्वमिति व्याख्याने, अस्थायिनं भोगं भुञ्जानस्तत्परित्यागे स्थायिभोगलाभमालक्ष्य हि ततो विरज्यते, नान्यथा, अनृतासक्तस्तु तदनृतत्वनिश्चये सति तत्परित्यागे ऽतथाभूतवस्तुलाभप्रतिसन्धानाभावेपि ततो विरज्यते, नहि रजतार्थी क्वचन रजतभ्रमेण प्रवृत्तस्तन्मिथ्यात्वनिश्चये सति तत्परित्यागे सत्यरजतस्य स्वलभ्यत्वप्रतिसन्धानाभावे ततो न निवर्तते, किन्तु ततो निवृत्तस्सत्यरजतप्राप्त्युपायं किंचित्पश्यतिचेत्तत्र प्रवर्तते, इति; तन्न साधु, असत्यत्वनिश्चयमात्रात् सुखसाधनतया ज्ञायमानान्निवृत्त्यनुपपत्तेः । रजतान्निवृत्तिस्तु तथात्वेन ज्ञाते रजते कटकादीष्टसाधनताज्ञानविरहादेव । अत एव इन्द्रजालादिदर्शने प्रवर्तन्ते पुरुषाः । अत एव चाङ्गुल्यवष्टम्भेन चन्द्रद्वित्वमुत्पादयन्ति कुतूहलिनः, उपनेत्रेण च वर्णस्थौल्यं दृष्ट्वा इति । नन्वत्र सर्वत्र इष्टसाधनमिथ्यात्वज्ञानेपि इष्टमिथ्यात्वज्ञानं नेति चेत्? किन्तर्हि इष्टंसुखमपि मिथ्यात्वेन ज्ञातव्यम्? एवं सति शुक्तिरजतेपि वैराग्यासिद्धिप्रसङ्गः । आनन्दस्य सत्यताविवेकोक्तिविरोधश्च । नन्वत्र न सुखे वैराग्यमपेक्षितम्, परन्तु तदवच्छेदकवृत्तावेवेति चेत्? न - तर्हि तन्नित्यानित्यविवेकसाध्यम्, सुखतत्साधनातिरिक्तवैराग्यस्य लतस्सिद्धत्वात् ।

ननु सुखवृत्तेस्सुखाभेदेन ज्ञानात्तस्यान्तत्साधने च रागो भवति, मिथ्यात्वज्ञाने तु नेतिचेत्? कथं नित्यसिद्धसुखस्य तदभेदेन ज्ञायमाने रागः? तदभिव्यक्तेस्तदुपपत्तिः, अत एव खल्वभिव्यक्तितरतमभावाद्रागतरतमभावो दृश्यत इति चेत्? तर्हि तदभिव्यक्तेस्सत्यत्वे न ततो वैराग्यस्य सम्भवः, मिथ्यात्वेपि सुखाभिव्यक्तेरेवाव्यभिचारेण रागप्रयोजकतया न वैराग्यसम्भवः । नच सत्यतया ज्ञायमानसुखाभिव्यक्तित्वं असत्यत्वेनाज्ञायमानसुखाभिव्यक्तित्वं वा रागप्रयोजकम्, गौरवात् ।

तस्मादुत्कृष्टसुखविरोधिताज्ञान प्रबलतरव्यसनानुबन्धित्वज्ञान वा, सुख वैराग्यप्रयोजकम् , उत्कर्षश्च कालस्वरूपाभ्यान्द्रष्टव्य ।

इति जिज्ञासाधिकरणं प्रथमम् ।

## जन्माद्यधिकरणम् ॥२॥

न चेदमपि ब्रह्मविचारो नारम्भणीय, लक्षणासम्भवेन चिदचिद्विलक्षणवस्त्वसिद्धया वेदान्ताना कर्मकर्तृमुखेन कर्मप्रशसार्थत्वादित्यत्राह—

१- जन्माद्यस्य यतः ॥१—१—२॥

तैत्तिरीये श्रूयते – "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति । अत्र सशय किमिद वाक्य ब्रह्म लक्षणत प्रतिपादयितु शक्नोति नेति । तदर्थं जन्मादिकारणत्वे धर्मिभेद प्रसज्यते नेति । यदा धर्मिभेद प्रसज्यते तदा "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादिप्रतिपन्न निस्समाभ्यधिकाद्वितीयवस्त्वसिद्धया तादृशवस्तुनो लक्षणत प्रतिपत्तु मशक्यतया तत्र वेदान्ताना प्रामाण्यासम्भवेन ब्रह्मविचारो नारम्भणीय इति सिद्धयति । यदा धर्मिभेदो न प्रसज्यते तदा निस्समाभ्यधिकाद्वितीयवस्तुसम्भवेन तस्य लक्षणत प्रतिपत्तु शक्यत्वात् वेदान्तानान्तत्र प्रामाण्यसम्भवात् आरम्भयोग्यो ब्रह्मविचार इति सिद्धयति ।

अत्र व्यावृत्तिसमानाधिकरणव्यावर्तकधर्माणा स्वेतरधर्माश्रयया यद्धर्म्यपेक्षया स्वाश्रयभेदकत्वस्यौत्सर्गिकतया जन्मादिकारणत्वैर्धर्मिभेद प्रसज्यते, नच दण्डकुण्डलकमण्डलुभिरपि धर्मिभेदप्रसङ्ग , प्रत्यक्षेण तदपवादात् मानान्तरागोचरे तत्र ब्रह्मणि न तथापवाद इति धर्मिभेद प्रसज्यत एव , ननु माभूत्तर्हि कारणत्व लक्षणम् , माभूवश्च कारणत्वादयो धर्मा , येनोक्तदोष प्रसज्यते, किन्तु प्रपञ्चगतजन्मादिकमेव लक्षण स्यात् , लक्षण हि नाम इतरव्यावृत्तवस्तुप्रत्यायकम् , ततश्च यश्चन्द्रशब्दवाच्य इति जिज्ञासाया शाखाग्रे चन्द्र इति वाक्ये यथा

शाखाया उपलक्षणतया इतरव्यावृत्तवस्तुप्रत्यायकत्वम् — एवमिहापि मुमुक्षुभिर्जिज्ञास्यं ब्रह्म किमिति जिज्ञासायां यतोवेत्यत्र जन्मादेरुपलक्षणतया इतरव्यावृत्तवस्तुप्रत्यायकत्वमस्त्विति चेन्न ,- उपलक्षणत्वे हि ज्ञाताकारो ज्ञाप्याकार उपलक्षणमित्याकारत्रयं वाच्यम् , यथा - शाखोपलक्षणम् , ज्योतिर्मण्डलसम्बन्धितेजःपिण्डत्वं ज्ञाताकार, चन्द्रशब्दवाच्यत्वं तत्र ज्ञाप्याकार इति ; इहच न ज्ञाताकारोस्ति, मानान्तरागोचर स्वात्; सत्यादिलक्षणवाक्यप्रतिपन्नस्य सत्यत्वादेर्ज्ञाताकारता तु न सम्भवति, धर्मिभेदप्रसङ्गादेव, तत्रापि कथञ्चिदुपलक्षणत्वाङ्गीकारे तत्र ज्ञाताकारसिद्धये एतद्वाक्यस्यापेक्षणयीत्वात् अन्योन्याश्रयः ; किंच वेदान्तेषु निर्विशेषं हि वस्तु प्रतीयते, तत्र ज्ञाप्याकारश्चानुपपन्नः. तस्मादुपलक्षणत्वानुपपत्त्या जन्मादिकारणत्वानां नानात्वाद्धर्मिभेदो ऽवर्जनीयः; इत्येव मखण्डार्थवादिकल्पितकुतर्कावलम्बनेन पूर्वः पक्षः ।

अखण्डार्थत्वायुक्तमौत्सर्गिकत्वं निर्निबन्धनम् , क्वचिद्दर्शनमात्रेणाङ्गीकारे अभेदकत्वमेवोत्सर्ग इति वैपरीत्यं किन्न स्यात् । तदङ्गीकारेपि न दोषः, एकेनैव तच्छब्देन व्यक्तचैक्यस्वरसैकवचनान्तेन उपादानातिरिक्तस्य लयस्थानत्वासम्भवरूपतर्कसहकृतेन प्रति निर्देशेनापवादात् । उपलक्षणत्वेपि न दोषः, लक्षणजिज्ञासाप्रयोजकज्ञानविषयाकारो हि ज्ञाताकार, यथा ज्योतिर्मण्डलमध्यवर्तित्वम् , तज्ज्ञानादेव ह्यस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्न , एवमिहापि भृगुप्रश्नस्य मुमुक्षुपास्यताबोधनिबन्धनत्वात् सैव ज्ञाताकार, तथा प्रतिपन्ने वस्तुनि निरतिशयब्रह्मत्वं ज्ञाप्याकार । वस्तुतस्तूपलक्ष्योपलक्षणरूपाकारद्वयमेव नियतम् , चन्द्रशब्दवाच्यं किंचिदस्तीत्येतावन्मात्रं जानतां प्रश्नेपि शाखाग्रे चन्द्र इत्युपलक्षणदर्शनात् । सविशेषमेव ब्रह्म वेदान्तैः प्रतिपाद्यत इतीहाभिप्रेतं प्रागेवाभिहितम् । अतो लक्षणतः प्रतिपत्तुं

शक्यतया वेदान्तानां ब्रह्मणि प्रामाण्यसम्भवात् ब्रह्मविचारः कर्तुं योग्य इति राद्धान्तः ।

वाक्यार्थस्तु— अस्य- चिदचिदात्मकस्य प्रपञ्चस्य, यतोजन्मादि तद्ब्रह्मजिज्ञासा कार्येति । आदिपदेन स्थित्यादिपरिग्रहः । वाक्ये यत्प्रयन्त्यभिसंविशन्तीत्यत्र प्रयन्ति सन्ति यदभिसविशन्तीति योजना । यद्यपि यत्प्रयन्ति यदभिसंविशन्तीति यच्छब्दानुषङ्गेण लयस्थानत्वम्मुक्त-प्राप्यत्वं चोच्यत इति वक्तुं शक्यम्, अभिसंविशन्तीति बन्धकत्वमुच्यत इति वा वक्तुं शक्यम्, तथापीमानि भूतानीत्यत्र चिदचितोर्विवक्षितत्वाद्चिदंशे मुक्तप्राप्यत्वान्वयासम्भवेन एकदेशान्वयो ऽस्वरसः । किञ्च प्रतिकार्यं यत्पदावृत्तेर्दर्शनेन प्रळयसवेशनयोर्भिन्नकार्यत्वे यत्प्रयन्ति यदभिसविश-न्तीति यच्छब्दावृत्तिप्रसङ्गः । बन्धहेतुत्वार्थकत्वपक्षे सन्निहितयत्पद-मुल्लङ्घ्य व्यवहितस्य येनेति पदस्यानुषङ्गः । संसारमभिसविशन्तीति कर्माध्याहारप्रसङ्गश्च । संविशन्तीत्यस्य स्वापार्थकस्य बन्धपरत्वाङ्गीकारे लक्षणा, व्यवहितानुषङ्गश्च । तद्विजिज्ञासस्व तद्ब्रह्मेत्यत्र तत्तद्ब्रह्मेति विजिज्ञासस्वेत्यन्वयः । प्रथमतच्छब्दो यच्छब्दप्रतिनिर्देशकः, द्वितीयस्तु बुद्धिस्थमुमुक्षुजिज्ञास्यत्वपरामर्शी । मुमुक्षुभिर्जिज्ञास्यत्वस्य बुद्धौ विपरि वृत्त्या खलु भृगुणा प्रश्नः कृतः ।

अत्र जन्मकारणत्वादीनि प्रत्येकमेवेतरव्यावर्तनसामर्थ्यात्तथैव लक्ष-णानीति केचिदाचार्याः । अपरेतु -'अधीहि भगवो ब्रह्मे' ति मुमुक्षु भिर्जिज्ञास्यं ब्रह्म किमिति पृष्टे यद्युत्पत्तिकारणं ब्रह्मेत्युच्यते तदा शिष्यस्य स्थितौ कारणान्तरशङ्कया तस्याप्येतत्तुल्यताज्ञानेन जिज्ञा-स्यान्तरशंकया इदमेव जिज्ञास्यमिति बुद्धिर्न स्यादिति श्रुतौ समुदा-यस्यैव लक्षणत्वाभिप्रायेण यच्छब्दावृत्तावपि तच्छब्द एक एवोक्तः, तदनु-साराच्च सूत्रेपि समुदायस्यैव लक्षणत्वं विवक्षितमित्यनुगृणन्ति ।

यत इति हेतौ पञ्चमी, 'नतु जनिकर्तुः प्रकृति' रित्यपादान संज्ञानिबन्धनपञ्चमी, स्थित्यादिकर्तुः प्रकृतावपादानसंज्ञाया अविधानात्, ततश्चोपादानत्वकर्तृत्वयोर्ग्रहः, विषयवाक्यानुसाराच्च । तत्र यद्यपि येन-यदिति स्थित्यादिहेतोः पदान्तरेण निर्देशाद्यत इति जनिकर्तुरुपादान संज्ञानिमित्ता पञ्चमी सम्भवति. अथापि यथाप्राप्तमनुवादत्वात् सदेवेति प्रापकवाक्यानुरोधात् हेतावेव । तत्र हीदं सदासीत् स्यामित्युपादानत्वं तदैक्षततत्सृजतेति कर्तृत्वञ्च प्रतीयते । किञ्च विषयवाक्यगत येन य-दिति द्वितीयातृतीयार्थयोस्सङ्ग्राह्यत्वाच्चात्र हेतुपञ्चम्येव प्राप्नोति ।

परेतु—यतो वा इमानि भूतानीति श्रुत्युक्तं ब्रह्मणो जगत्कारणत्वं लक्षणं सम्भवति नवेति सन्देहे प्रपञ्चसत्यत्वे तेन निर्विशेषब्रह्मावगत्य सम्भवात् मिथ्यात्वे कृतकत्वेन नित्यस्यैव तेन सत्यस्य ब्रह्मणो लक्षयितु मशक्यत्वान्न सम्भवतीति पूर्व पक्षः; मिथ्याभूतेनापि प्रपञ्चजन्मादिना निष्प्रपञ्चं ब्रह्म ताटस्थ्येन लक्षयितुं शक्यम्, यद्रजतमभात्साशुक्ति रिति वत्, एवमस्य शाखाग्रे चन्द्रमा इति वत् तटस्थलक्षणत्वेपि प्रकृष्ट प्रकाशश्चन्द्र इति स्वरूपलक्षणेन स्वरूपविशेषावगमवत् "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त" इत्यादिनिर्णयवाक्यावगतेन स्वरूपलक्षणेन ब्रह्म स्वरूपविशेषावगतिर्भवतीति सम्भवति तटस्थलक्षणमिति सिद्धान्त इति ।

अपरेतु "तद्विजिज्ञासस्व तद्ब्रह्मे" ति वाक्यस्थं ब्रह्म किं जीवः उत विष्णुरिति चिन्ता, तदर्थं ब्रह्मशब्दस्य रूढ्यर्थजीवत्यागेन यौगि-कार्थविष्णुग्रहणे हेतुर्नास्ति उतास्तीति, तदर्थं विष्णुदेशस्थब्रह्मशब्द-स्वारस्याय यतोवेति पूर्ववाक्यं जीवे कथञ्चिन्नेतु शक्यं उताशक्यमिति । पूर्वपक्षस्तु- जीवएवेदं ब्रह्म "ब्रह्मजातिजीवे" त्याद्यभिधानात् ब्रह्म शब्दस्य तत्र रूढेः, विष्णौ तु तस्य यौगिकत्वात्. योगाद्रूढेर्बलीयस्त्वात्;

नच जीवपरत्वे यतोवेत्यादिपूर्ववाक्योक्तकारणत्वमेव बाधकम्, विष्णु-देहगतब्रह्मशब्दस्वारस्याय जीवस्याप्यदृष्टद्वारा तत्र हेतुत्वोपपत्ते, इमानीत्यनेन जीवकर्तृककार्यजातस्यैव निर्देशोपपत्तेश्चेति । सिद्धान्तस्तु — विष्णुरेव जिज्ञास्य ब्रह्म, विष्ण्वेकनिष्ठस्य कारणत्वस्य जिज्ञास्ये यतो-वेति श्रवणात्, तस्य जीवेऽनुपपत्त्या रूढेरपि बाधात्, अदृष्टद्वारा जीवकारणत्वे एककारणत्वप्रतिपादनास्वारस्यात्, अभिसंविशन्तीति पदोपस्थापितमुक्तप्राप्यत्वस्य च सर्वथानुपपत्ते, इमानीति सर्वनाम्नश्च सङ्कोचकाभावात, किंच ' तदेव ब्रह्म परमं कवीना " मिति श्रुतौ विष्णौ विद्वद्रूढिरुक्ता, नच स्वस्यामुख्यत्वे मुख्यान्तरे वा सति स्वस्य परमत्वम्, साचासम्भाविताज्ञानमूला रूढ्यन्तराद्बलीयसीति ।

अन्येतु जन्मादीनां वैय्यधिकरण्येन लक्षणत्वं न सम्भवतीति पूर्वपक्षं कृत्वा तेषान्तटस्थलक्षणत्वं राद्धान्तयन्ति ।

इतरेतु जन्मच तदादिश्च तथा सर्वो द्वन्द्वो विभाषैकवद्भवतीत्याहुः ।

अत्र विभक्तिविपरिणामेन ब्रह्मशब्दानुषङ्ग सर्वपक्षसाधारणो दोष, यत्प्रयन्ति यदभिसंविशन्तीति योजनोक्तदोषस्त्वपरान्येतरपक्षसाधारणः । किंच आद्ये पक्षे किं जिज्ञासासूत्रे सविशेषस्य जिज्ञास्यत्वमुक्त्वा तस्यात्र लक्षणमुच्यते, उत निर्विशेषस्य ? नाद्य, शास्त्रस्य सविशेष परत्वप्रसङ्गात्, लक्षणासम्भवपूर्वपक्षानुत्थानाच्च । न द्वितीय, लक्षणस्यानाकाङ्क्षितत्वात्, कृत्स्नस्यापि मिथ्यात्वेन व्यावर्त्यासिद्धेः । मिथ्या वस्तुनो व्यावर्त्यत्वे तत्प्रयोजिकाया विद्यमानताया लक्षणेपि सत्त्वात् लक्षणाक्षेपो न सङ्गच्छते । किंच दृगतिरिक्तस्य मिथ्यात्वेन दृशस्सत्यत्वेन च ज्ञानात् दृग्रूपस्वरूपलक्षण सत्यत्वेन मिथ्यावस्तुव्यावृत्तिश्च ज्ञाते एवेति कुतो लक्षणाकाङ्क्षा । विवरणमते प्रपञ्चमिथ्यात्वव्युत्पा

दनमेव प्रथमसूत्रम्, वाचस्पतिमते साधनसम्पत्तिदशायामेव मिथ्यात्व-निर्व्यूढमिति पूर्वपक्षश्चानुपन्नः, — मिथ्यावस्तुनोपि विद्यमानतया लक्षणत्वसम्भवात्, अन्यथा लोके लक्षणस्यैवासिद्ध्यापातेन इह लक्षणापेक्षा कुतः स्यात्। मिथ्यावस्तुनो व्यावर्तकत्वाभावे सिद्धान्ते ताटस्थ्योक्त्या कथं परिहारः। एतेन लक्ष्यसमसत्त्वस्यैव लक्षणत्वमित्यपि ध्वस्तम्, तटस्थलक्षणत्वस्याप्यभावप्रसङ्गाच्च। शुक्तिरजतस्यापि तच्छुक्तिव्यावर्तकत्वमस्त्येवेति कथं मिथ्यावस्तुनो लक्षणत्वासम्भवः। दृष्टान्तश्च विषमः, कृतकत्वं हि नित्यनासम्बन्धात् न तदन्यस्माद्व्यावर्तयति, कारणत्वन्तु ब्रह्मगतम्, तत्कथमन्यस्मान्न व्यावर्तयेत्। एवं सिद्धान्तो प्यनुपपन्नः, ताटस्थ्योक्तिर्वैयर्थ्यात्। नहि ताटस्थ्यं मिथ्यावस्तुनो लक्षणत्वोपपादकम्, किन्तु साक्षादसम्बन्धिनः। मिथ्यात्वे हि साक्षात्सम्बन्धवत् परम्परा सम्बन्धोप्यनुपपन्न एव। दृष्टान्तश्च विषमः, रजतभानविषयत्वस्य सत्यस्यैव शुक्तिस्वरूपलक्षणत्वात्। बाधानन्तरमपि शुक्तौ पूर्वरजतस्य विद्यमानतां ये जानन्ति मिथ्यावादिनस्तेषां रजतमपि शुक्तिस्वरूपलक्षणमेव, शुक्तिस्वरूपसम्बन्धादितरस्माद्व्यावृत्तिबुद्ध्युपयोगाच्च। तस्मात्ताटस्थ्योक्तिर्व्यर्था। साक्षादसम्बन्धात् पूर्वपक्षकरणे हि ताटस्थ्योक्तिस्सफला स्यात्। ननु पूर्वपक्षे जगत्कारणत्वस्य ब्रह्मस्वरूपलक्षणत्वं न सम्भवति, तस्य मिथ्यात्वे ब्रह्मणो मिथ्यात्वप्रसङ्गात्, सत्यत्वे तस्य प्रपञ्चनिरूप्यत्वेन निरूपकसत्यत्वमन्तरेण निरूप्यसत्यत्वाप्रसिद्ध्या प्रपञ्चस्यापि सत्यत्वप्रसङ्गेन निर्विशेषस्वरूपलक्षणत्वासम्भवादिति विवक्षितम्, अतस्तटस्थलक्षणत्वेन परिहारस्सिद्धान्ते युक्त इति चेन्न; — साक्षात्सम्बन्धि स्वरूपलक्षणम्, परम्परासम्बन्धविशेषवत् तटस्थलक्षणमित्येव विभागात्। नहि स्वरूपमेव लक्षणं सम्भवति, लक्षणं हि नाम पूर्वं स्वरूपे ज्ञातेपि इतरव्यावृत्त्यवबोधाय जिज्ञासायोग्यं वस्तु, नच स्वरूपन्तादृशम्, स्वरूपस्य ज्ञानेनेतरव्यावृत्तिबुद्धौ लक्षणाकाङ्क्षा-

विरहात्, तज्ज्ञानेपि तद्बुद्धौ न व्यावृत्तिबुद्धये स्वरूपजिज्ञासा स्यात्, किन्तु धर्मजिज्ञासा। नच निरंशे ज्ञाताज्ञातस्वरूपद्वय वस्तु शक्यम्। किंचैव पूर्वपक्षे सति निरूपकस्य मिथ्यात्वेपि निरूप्यसत्यत्वस्य प्रपञ्चाभावरूपे ब्रह्मण्यङ्गीकृतत्वेन तथैव परिहारे कर्तु शक्ये सिद्धान्ते ताटस्थ्योक्तिर्व्यर्था। किंचात्र तटस्थलक्षण एव सूत्रे शब्दत प्रतिपन्नेपि स्वरूपलक्षणपरत्वं किमर्थमिष्यते? यदि परिमळोक्तरीत्या तटस्थेन शाखाग्रेण देशान्तरस्थवस्तुव्यावृत्तिसिद्धावपि तद्देशस्थनक्षत्रान्त्याव्यावृत्तिवदिहापि कारणत्वेन शङ्काहवस्त्वन्तराद्व्यावृत्तिर्न सिद्ध्यतीति तदर्थं स्वरूपलक्षणेपि तात्पर्यमित्युच्येत, तदा तटस्थलक्षणं व्यर्थम्। नन्वानन्दाद्ध्येव खल्विमानि जायन्त इत्यानन्दस्य जगत्कारणतयोपदिष्टत्वात् तादृशस्वरूपलक्षणप्रतीत्यर्थमेव तटस्थलक्षणकीर्तनमिति चेन्न, — तटस्थलक्षणप्रतिपन्नस्वरूपातिरिक्तस्वरूपस्य स्वरूपलक्षणेन प्रतिपत्तौ साद्वितीयत्वस्यावर्जनीयत्वात्। किञ्च - कारणत्वस्यान्यत्र सम्भावनायामानन्दस्वरूपे कथमन्यत्र सम्भावना? तेन विषमो दृष्टान्त. प्रकृष्टप्रकाशत्ववदन्यत्र सम्भावनाविरहासिद्धे। किंच तटस्थलक्षणेन स्वरूपप्रतिपत्तिरस्ति नवा? नास्य लक्षणत्वस्यैवाभावप्रसङ्गात्। आद्ये किमर्थं स्वरूपलक्षणम्? इतरव्यावृत्तिबुद्धिजननार्थमिति चेत्? किमस्या प्रतीते पूर्वप्रतीतिवैलक्षण्यम्? पूर्वाप्रतीतानन्दत्वगोचरतेति चेद्वस्तुतस्तर्हि न साद्वितीयत्वम्। पूर्वाप्रतीतानन्दस्वरूपगोचरतेत्युक्तावप्ययमेव दोष। किंच सत्यज्ञानमित्येतदपि स्वरूपलक्षणमित्युच्यते तदप्यनुपपन्नम् अनृतादिव्यावृत्तिबुद्धिहेतुतया हि तस्य लक्षणता वाच्या स्वरूपमात्रस्य समानाधिकरणलक्षणवाक्येन लक्षणया प्रतीता कथ व्यावृत्तिसिद्धि? सत्यत्वादिविशिष्टकदेशलक्षणत्वाद्व्यावृत्तिबुद्धौ वैशिष्ट्ये मानान्तरं वाच्यम्, तत्रापि लक्षणायामुक्त एव दोष। तस्य मुख्यार्थत्वाङ्गीकारे चानन्त्यावेदकत्वप्रसङ्ग। इष्टापत्तावानन्दस्वरूपविशेषासिद्धि। किंच — सत्य ब्रह्मेत्येतावतैव स्वरूपलक्षणसिद्धे ज्ञानादिपदं निरर्थम्? ज्ञानादिस्वरूप

लक्षणार्थमिति चेत् ? किन्तत्सत्यस्वरूपादन्यत् ? तथासत्यद्वैतभङ्ग, सामानाधिकरण्यभङ्गश्च । अस्तुवा अभेदे सत्येव स्वरूपभेद, तथा प्यनेन पदेनास्य स्वरूपस्य लक्षणेत्ययन्नियम कुत ? नहि गगाया स्तीरविशेषसम्बन्धित्ववत् सत्यत्वस्य ज्ञानस्वरूपव्यावृत्तसत्यसम्बन्धित्व गृहीतमिति ।

द्वितीयपक्षे जीवादिषु रूढ्यङ्गीकारेण पूर्वपक्षो गारुडपुराण निरुद्ध, ब्रह्मजानिर्जीवेत्यादिकश्चासिद्धमित्याहु । अत पूर्वपक्षोऽप्यनुपपन्न । किंच प्रथमाधिकरणे त्वया सर्वेषामद्वैतवाक्याना विचारविधिवाक्यगतब्रह्मशब्दमुख्यार्थत्वानुरोधेनैवान्यथानयनाविहापि तदनुरोधाय 'यतोवे' त्यस्य तत्प्रकरणान्न्चेवान्यथानयन युक्तमिति । राद्धान्तोऽप्यनुपपन्न, योग्यार्थानुरोधायापि बहूना वाक्यानामन्यथाकरणे क्रियमाणे रूढ्यर्थानुरोधाय अन्यथाकरणे का विचिकित्सा । "तदेव ब्रह्म परम कवीनामि" ति परमशब्दो मुख्यपर, मुख्यत्वरूपोत्कर्षस्यैव परमशब्देन विवक्षितत्वात्, तदेव ब्रह्मशब्दस्य मुख्योर्थ इति ब्रह्मवादिनो वदन्तीत्यर्थ । किंच ब्रह्मणश्चिदचिद्विलक्षणत्वचिन्ताया कथमुपोद्घाते निवेश ।

अन्यपक्षो जघन्य एव, तत्र पूर्वपक्षो नोपपन्न, यतो आयन्ते सद्ब्रह्मेत्युक्तौ कथ लक्षणवैय्यधिकरण्यशङ्का ? नहि जात ब्रह्मेत्युक्तम्, येन जन्मनो लक्षणत्व प्रतीयेतासम्भवश्च शक्येत, यत इति यच्छब्दनिर्दिष्टस्य कारणत्वावगमात् जन्मादेस्समभिव्याहाराच्च जन्मादिकारण ब्रह्मेत्यवगमेन कारणत्वमेव लक्षणमिति स्वरसतोवगम्यते । नापीदन्त्व नापि जन्मादि । सिद्धान्ते ताटस्थ्योक्तिरनुपपन्ना कारणत्वस्य स्वरसतो लक्षणतया प्रतीयमानस्य स्वरूपगतलक्षणत्वात् । नच जन्मादिकारणत्वापेक्षया जन्मादिकमेव लध्विति वाच्यम्, तथासति लाघवेन जन्मैकमेव लक्षण स्यात् । यदि प्रयोजनवशात् गौरवम्मृष्यते, तदा वैयधि-

कार्यत्वादित्यनुमानं कृतिजन्यत्वं विषयीकुर्वत् लाघवादेककृतिजन्यत्वं विषयीकरोति, तथाचादृष्टाद्वारिका तदद्वारिकावा जन्या कृतिः कार्यमात्रे क्षित्यादिमात्रे वा नैको हेतुस्सम्भवतीति अगत्या अतिरिक्तेश्वरसिद्धिः। नच कार्यमात्रे क्षितौ वा कृतिजन्यत्वं सिद्धमिति सिद्धसाधनमिति वाच्यम्, अनुमितिसमानाकारसिद्धेरेव प्रतिबन्धकत्वात्, अन्यथातिप्रसङ्गात्। नचेहसा, एककृतिजन्यत्वस्यानुमितिप्रकारस्य कार्यत्वावच्छिन्ने सिद्धिविरहात्। वस्तुतस्तु कार्यं प्रति ज्ञानेच्छाकृतीनां हेतुता, उपादानं च तत्र हेतुः, नचानयोरनासन्नयोः कारणत्वम्, इति — विषयविषयिभावः कारणप्रत्यासत्तिर्घटादावनयोः कल्पितः, — इति क्षित्याद्युपादानस्यापि तज्जनकज्ञानादिना सह स एव सम्बन्धः, क्लृप्तत्वात्, इति अदृष्टजनकज्ञानादिना सह क्षित्याद्युपादानस्य तत्सम्बन्धाभावात् न तदादाय सिद्धसाधनमिति क्षित्याद्युपादानगोचरज्ञानादिमदीश्वरसिद्धिः।

नान्विन्द्रियादिनिरूपितकार्यतावच्छेदकं लाघवात् प्रत्यक्षत्वम्, एवं ज्ञानजन्यतावच्छेदकमिच्छात्वम्, इच्छाजन्यतावच्छेदकं कृतित्वमिति कथं नित्यप्रत्यक्षेच्छाकृतिसिद्धिरिति चेन्न, प्रत्यक्षत्वमिच्छात्वं कृतित्वं च कार्यतावच्छेदकं कल्पयित्वा कर्तृजन्यतावच्छेदकं घटत्वपटत्वादिकमनन्तं कल्प्यताम् — उत जन्यत्वविशेषितज्ञानत्वादित्रयं कार्यतावच्छेदकं कल्पयित्वा कर्तृजन्यतावच्छेदकं कार्यत्वमेव सर्वसाधारणं कल्प्यतामिति विनिगमे प्रथमपक्षे बहूनां कर्तृजन्यतावच्छेदकत्वकल्पनाया अतिगौरवग्रस्ततया लाघवात् द्वितीयपक्ष एवाश्रीयते।

ननूक्तानुमाने शरीरजन्यत्वमुपाधिः, नच तस्य साध्यव्यापकता आहूतकर्त्रभावादप्रयोजकत्वम्, कार्यकारणभावस्यैव विपक्षे बाधकत्वात्, तथाहि अस्ति घटादौ कार्ये शरीरजन्यत्वम्, तत्र जन्यतावच्छेदकं न

घटत्वादिकम्, अननुगमात्; नापि कार्यत्वम्, उभयमते क्षित्यादौ व्यभिचारात्, किन्तु कर्तृजन्यत्वमेव, लाघवात्, अनुगतत्वाच्च; ननु कार्यत्वावच्छेदेन कर्तृजन्यत्वं गृहीत्वा उत्तरकाले शरीरजन्यतावच्छेदकतया कल्पनीयम्, अन्यथा कर्तृजन्यत्वाग्रहेण कस्य शरीरजन्यतावच्छेदकत्वं कल्प्येत, तथाच उपजीव्यत्वात् प्राथमिकत्वाच्च कर्तृजन्यतावच्छेदकतया गृहीतकार्यत्वाबाधेनैव शरीरजन्यतावच्छेदककल्पना, तदबाधश्च न कर्तृजन्यत्वस्य शरीरजन्यतावच्छेदकत्वे — इति घटत्वादिकमननुगतमपि शरीरजन्यतावच्छेदकत्वेन कल्प्यत इति चेन्न,- शरीरजन्यतावच्छेदकत्वेन कर्तृजन्यत्वकल्पनायां कर्तृजन्यत्वग्रह एवोपजीव्यः, नतु कार्यत्वावच्छेदेन कर्तृजन्यत्वग्रहः, येनोपजीव्यबाधस्स्यात्, तथाच जन्यत्वपुरस्कारेणैव क्वचिद्घटादौ कर्तृजन्यत्वग्रहाच्छरीरजन्यतावच्छेदकत्वकल्पना तस्य सम्भवत्येवेति चेन्न; - उपजीव्यत्वाभावेपि वस्तुलाघवमस्त्येव, कर्तृजन्यत्वस्य शरीरजन्यतावच्छेदकत्वापेक्षया जन्यत्वस्य कर्तृजन्यतावच्छेदकत्वे लाघवात्। नचात्र भिन्नविषयतया लाघवानवतारः, परस्परविरोध्यर्थपर्यवसायिनोर्लघुगुरुप्रमाणयोरेव लाघवावतारात्, अत्रापि कर्तृजन्यत्वजन्यत्वयोर्मध्ये शरीरजन्यतावच्छेदकत्वकर्तृजन्यतावच्छेदकत्वान्यतरकल्पनायां क्षित्यादिषु कर्तृजन्यत्वं तज्जन्यत्वं वा स्यादिति विरुद्धार्थपर्यवसाने लाघवावताराविरोधात्। वस्तुतस्तु शरीरत्वं साक्षात्प्रयत्नाधिष्ठितत्वमेव, तज्जन्यत्वं क्षित्यादावप्यस्ति, तज्जनकपरमाण्वादेरीश्वरप्रयत्नसाक्षादधिष्ठितत्वात्, अतस्साधनव्यापकत्वान्नायमुपाधिरिति।

सिद्धान्तस्तु - किमत्र लोकदृष्टकार्यकारणभावानुरोधेन कर्ता साध्यते, उतान्यथा? आद्ये घटादिकार्ये शरीरव्यापारस्य तत्र ज्ञानस्यच कारणताग्रहादिहापि तथा साधने सर्गाद्यसमय ईश्वरशरीरसर्गार्थं शरीरान्तरसर्गापेक्षया तस्यापि तथापेक्षया तथानवस्था। द्वितीये साधनमाकस्मिकमेव स्यात्। अतएव "नावेदविन्मनुते तं बृहन्तं" "तं त्वौपनिषदं पुरुषं वेद" "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्याद्युच्यते।

यरणेन प्रत्यवस्थित पूर्वपक्षिण प्रति समानाधिकरणधर्मोक्त्यातिरासस्य प्रयोजनत्वादिदमपि मृष्यताम् । लघुभूतस्य व्यधिकरणस्यापि लक्षणत्वोपपादनसम्भवात् गुरुणो लक्षणत्वमनुपपन्नमिति चेन्न, — सम्बन्धार्थं कारणत्वस्यापेक्षिततया लाघवासिद्धेः । अन्यथा सम्बन्धविशेषेण जगत एव लाघवात् लक्षणत्वप्रसङ्ग इति ।

इतरपक्षे आदिपदे तदाद्यर्थकत्वस्य वक्तव्यतया बहुव्रीह्यर्थलक्षणाप्रसङ्ग । सर्वो द्वन्द्व इत्येतन्नङ्गावश्च जघन्य ॥ २ ॥

इति जन्माद्यधिकरणं द्वितीयम् ।

---

## अथ शास्त्रयोनित्वाधिकरणम् ।

ननु — 'यतो वे' त्यादिवाक्य जगत्कारणत्वेनेश्वर प्रतिपादयतीत्युक्तमयुक्तम्, अनुमानेन तत्सिद्धेरित्याह—

३ शास्त्रयोनित्वात् ॥ १ - १ - ३ ॥

ननु 'यतो वे' त्यादिवाक्ये उपादानत्वस्यापि प्रतिपन्नत्वात्तस्य चानुमानागोचरत्वात्तेन रूपेण प्रतिपादनसम्भवात् कथमीश्वरस्य तद्वाक्यप्रतिपाद्यत्वाक्षेप इति चेत् ? उच्यते नैयायिकोऽत्र पूर्वपक्षी, स च जगत ईश्वरोपादानकत्वस्य स्वानभिमतत्वात् तदनुपादानत्वसाधककुतर्कबलेन श्रुतेरतदर्थता आनुमानिकेश्वरानुवादरूपता उपादानत्वादिप्रतिपादकांशस्य तदर्थवादरूपतां च मन्वान कारणवाक्याना ब्रह्मण्यप्रामाण्यमापाद्य तद्विचारारम्भमाक्षिपति । सिद्धान्ते चानुमानान्निराक्रियते । अनुपादानत्वसाधककुतर्कस्तु प्रकृत्यधिकरणे निराकरिष्यते ।

अत्र संशय — ईश्वरोनुमेयो नवेति । अत्र पूर्व पक्ष — ईश्वरोनुमेय एव । तथाहि— अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि सम

येतानि जन्यानि, अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरा-परोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि, समवेतत्वे सति प्रागभावप्रतियोगित्वात्, घटादिवदित्यनुमानादनित्यज्ञानवदस्मदादिजन्यत्वस्य क्षित्यादौ बाधात्पक्ष धर्मताबलान्नित्यज्ञानादिमान् जनकतया सिद्ध्यति । अतएव तस्य सर्वज्ञत्वमपि, ज्ञानादौ नियतविषयकत्वस्य सन्निकर्षादिरूपहेतुप्रयोज्य तया निर्हेतुके तत्र कारणव्यावृत्त्या नियतविषयकत्वस्यापि व्यावृत्तेः । ननु– पक्षे उपादानपदं यत्किञ्चिदुपादानपरम्, स्वोपादानपरं वा ? नाद्यः, रूपाद्युपादानशब्दादिगोचरजन्यकृतिजन्यतया शब्दादौ पक्षता वच्छेदकाव्याप्तेः; नान्त्य, क्षित्यादौ स्वोपादानगोचरजन्यकृत्यप्रसिद्ध्या तदजन्यत्वाप्रसिद्धेरिति चेन्नः- स्वोपादानगोचरजन्यकृतिजन्यत्वावच्छिन्ना ये घटादयस्तद्भिन्नत्वस्य विवक्षितत्वात्. तस्य च शब्दे क्षित्यादौ चा-विकल्पात् । वस्तुतस्तूपादानगोचरकृतित्वावच्छिन्नजनकत्वाप्रतियोगित्वं विवक्षितम्, अतो नोक्तदोषावकाशः, स्वविषयसमवेतकार्यं प्रत्येव कृतेरुक्तरूपेण हेतुत्वात् । अतएव न स्वपदान्तर्भावेनाननुगमशङ्कापि, तस्याप्रवेशात् । नच स्वविषयसमवेतकार्यं प्रति स्वोपादानगोचरकृति त्वेन हेतुता, नतूपादानगोचरकृतित्वेनेत्यप्रसिद्धिरिति वाच्यम्, उपादान गोचरकृतित्वं यत्र कारणतावच्छेदककोटिप्रविष्टं तादृशकारणताप्रतियोगित्व स्य विवक्षितत्वात् । स्वोपादानगोचरकृतित्वस्याप्यवच्छेदकत्वेप्युपादान गोचरकृतित्वं प्रविष्टमेव । अस्तुवा क्षित्यादे प्रत्येकं पक्षता, तथापि नक्षतिः, पक्षसमे व्यभिचारसंशयस्यादोषत्वात् । तत्तदुपादानगोचर-मपि ज्ञानं पक्षधर्मताबलान्नित्यमित्युक्तरीत्या सर्वज्ञसिद्धिः । साध्ये स्वोपादानगोचरज्ञानादिमज्जन्यत्वं विवक्षितम्; नचार्थान्तरम्, अन्यो-पादानगोचरज्ञानादेरन्यकार्यहेतुत्वेऽतिप्रसङ्गात्, परिशेषात्स्वोपादानगोचर-ज्ञानादिमज्जन्यत्वसिद्धिः । यद्वा कार्यमात्रं क्षित्यादिकं वा कृतिजन्यं

लिङ्गान्तरेणानुमानेन सार्वज्ञ्यसिद्धिरनुपपन्ना, कारणविरहात्, सर्वविषयत्वे चिकीर्षाकृत्योरपि सर्वविषयत्वप्रसङ्ग, अनादिसिद्धे तद्वाधोक्तो सिद्धेरेव चिकीर्षाकृतिनिरस्प्रयोजकतया घटोत्पत्त्यनन्तरं तयोरसम्भवान्न नित्यत्वसम्भव, तस्मान्नित्यताङ्गीकारे तयोस्सर्वविषयत्वमपरिहार्यमेव । याच लाघवात् एककृतिविषयत्वसिद्धिरुक्ता, सानुपपन्ना, अदृष्टाद्वारककृतिजन्यत्व एव लाघवेनापूर्वकल्पने गौरवात्, तथाच सिद्धसाधन दुष्परिहरम । यच्चोक्त ज्ञानादीनामुपादानस्य च हेतुत्वे सति प्रत्यासत्त्यपेक्षायामन्यत्र सिद्धत्वाद्विषयविषयिभाव एव प्रत्यासत्तिरिति, तन्न, ज्ञानादीना घटादिकार्ये साध्ये उपादानेन विषयत्वरूपासत्तिरिव तत्काले ज्ञानादिसाध्यादृष्टसमवधानरूपासत्तिरपि दृश्यते, इयचेहाप्यस्त्येवेति कथमुपादानविषयत्वकल्पना, क्षित्यादेर्ज्ञानादिसाध्यत्वेतिप्रसङ्गवारणस्य एतावतैव सिद्धेरुपादानविषयत्वस्याकल्पनीयत्वात् । शब्दस्मानादावपि शब्दपरोक्ष्यादेरुपादानागोचरस्यैव जनकत्व दृश्यते, अत कथमुपादानगोचरत्व नियम ? यदप्युक्त घटत्वादीनामनन्ताना कर्तृजन्यतानच्छेदकत्वकल्पनापेक्षया कार्यत्वस्यैव तत्कल्पन लध्विति, तन्न, कृतेश्शरीरव्यापारे तत्र चिकीर्षायास्तत्र ज्ञानस्यच जनकत्वावधारणेनोक्तलाघवानवतारात् । घटादे कृतिजन्यत्वेपि शरीरव्यापारद्वारैव कृतेर्जनकत्वावधारणान्न तन्नैरपेक्ष्येण हेतुत्वसम्भव । यद्यपि परमाणूना तमसो वा साक्षात्प्रयत्नाधिष्ठेयत्वेन शरीरत्वात्तत्प्रेरणमुखेनैव न्यायोत्पादकत्वाच्छरीरव्यापारद्वारकत्व कृतेरुपपद्यते, तथापि ज्ञानेच्छाकृतीना द्वारद्वारिभावो नित्यानामनुपपन्न, तेषामनित्यत्वाङ्गीकारे चिकीर्षायास्सुखदुःखाभावान्यतरोद्देशसाध्यतया तयोश्च कर्मसाध्यतया ईश्वरस्य कर्मवश्यत्वञ्च प्रसजेत् ।

सूत्रार्थस्तु—शास्त्रम्, योनि कारण यस्य तच्छास्त्रयोनीति बहुव्रीहि । जिज्ञासासूत्रे ब्रह्मज्ञाननिर्देशाज्ज्ञानादेर्विचारात्मकज्ञानविशेषपर्यवसानेपि तस्यैव

प्रयोगादत्र धर्मिनिर्देशकपदाकांक्षया बुद्धिस्थस्य ब्रह्मज्ञानपदस्यैव सुखेनाध्याहारो भविष्यतीत्यभिप्रेत्य सूत्रलाघवार्थमिह धर्मिनिर्देशो न कृतः । एतदर्थमेव विचारपद एव प्रयोक्तव्येऽपि जानातेः प्रयोगः । एवञ्च भाष्यादौ योनिः कारणं प्रमाणमिति निर्देशस्सिद्धार्थकथनपरः । अथवा योनिशब्दो ज्ञापकहेतुपरः, शास्त्रप्रमाणकत्वात् कारणब्रह्मजिज्ञासा कार्येति योजनायामर्थात् ब्रह्मण एव धर्मित्वलाभ इति ।

परेतु - इह लक्षणीकृतजगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं पूर्वसूत्रे अस्येति पदेन सूचितस्य जीवव्यावर्तनस्य स्थिरीकरणार्थं वेदकारणत्वेन दृढीकुर्वता भगवता सूत्रकारेण वेदस्य नित्यत्वात् ब्रह्मणस्सर्वकारणत्वमनुपपन्नमित्यपि शङ्का निराक्रियते । तन्निराकरणञ्चानुषङ्गिकम् । अनुषङ्गलब्धेऽर्थे च न पृथक्सङ्गत्यपेक्षा, अतो वेदानित्यत्वव्यवस्थापनं वियत्पादे संगतत्वात्र कर्तुं युक्तमिति शङ्का नोत्तिष्ठति ।

" अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेद " इत्यादिवाक्यं ब्रह्मणो वेदकारणत्वेन सर्वज्ञत्वं साधयति नवेति सन्देहे — न तावद्वेदवकर्तृत्वेन तस्य तत्साधनम् , वेदस्य पौरुषेयत्वापातात् ; नापि वेदोपादानत्वेन, कार्योपादानयोरेकशक्तिमत्त्वस्य मृत्पिण्डघटादिषु ब्रह्मतत्कार्यान्तरेषु च बहुशो व्यभिचारदर्शनेनाप्रामाणिकतया वेदस्य सर्वार्थप्रकाशनशक्तिमात्रेण ब्रह्मणि तदसिद्धेः ; तत्सिद्धौ वा वेदः स्वयमज्ञ एव जीवानान्तत्तदर्थगोचरप्रकाशजनक इति ब्रह्मणोऽप्यज्ञस्यैव प्रकाशकत्वापत्तेश्च ; एवमपि ब्रह्मणो वेदाविषयनदीवालुकासंख्यादिप्रकाशकत्वालाभाच्च, इति पूर्व पक्षः । राद्धान्तस्तु- वेदकर्तृत्वेन तस्य तत्साधयत्येव, कर्तृत्वमिह नार्थमुपलभ्य रचयितृत्वम् , येन सापेक्षत्वलक्षणम्पौरुषेयत्वमापद्येत ; नाप्युच्चारयितृत्वमात्रम् , अध्यापकसाधारण्येन तावता वेदे ब्रह्मवक्तृकत्वविशेषासिद्धेः ; सर्ववेदोच्चारणेन महोपाध्यायता-

मात्र हि तदा ब्रह्म स्यात्, किन्तु ब्रह्म स्वतन्त्रमप्यध्येतॄणां पुरुषार्थसिद्धये नियतक्रमस्वराद्यपेक्षमाणं पूर्वपूर्वकल्पेषु स्वकृतेनैव नियतेन क्रमादिना विशिष्टान्वर्णान् करोति सर्गादौ, "धाता यथापूर्वमकल्पयत्" इति श्रुतेः। एतदेवचाध्यापकविलक्षणं ब्रह्मणो वेदकर्तृत्वं यदन्यदीयक्रमाद्यनपेक्षणेन पूर्वमपि स्वकृतेनैव क्रमेण विशिष्टेषु वैदिकवर्णेषु कर्तृत्वम्, तथाचातीतानागतानन्तकल्पस्थवैदिकक्रमस्वरादिप्रतिसन्धानं अनन्तवेदिकवर्णपदवाक्यप्रतिसन्धानञ्च ब्रह्मणो न मानान्तरात्, तस्यान्तःकरणसम्बन्धाभावेन मानान्तराप्रवृत्तेः, किन्त्वनावृतस्वरूपचैतन्यबलादिति सङ्कोचकाभावाद्यावत्स्वसंसृष्टप्रकाशवत्सर्वज्ञं ब्रह्म सिद्ध्यति। आनुमानिकेश्वरवादिनामपि सर्वज्ञसिद्धिरेवमेव, सर्वस्यापक्षत्वेन हेतुतया सर्वगोचरज्ञानासिद्धेः। वेदोपादानत्वेन वा तस्मिन् तत्साधयति, दीपगताया प्रकाशनशक्तेः तदुपादाने वह्नावपि दृश्यमानतया कार्यकारणयोरेकशक्तिकत्वस्य औत्सर्गिकत्वेन वेदगतायाम्सर्वार्थप्रकाशनशक्तेर्बाधकाभावेन तदुपादाने ब्रह्मण्यपि प्राप्ते। नहि घटगतोदकाहरणशक्तेर्मृत्पिण्ड इवान्धकारगतावरणशक्तेः प्रकाशरूपत्वेन श्रुतिसिद्धे ब्रह्मणीव वेदगतसर्वार्थप्रकाशनशक्तेस्तं प्रति परिणामितयोपादाने नीहारेणावृतेत्यादिभिरावरणत्वेन सिद्धे अज्ञान इव वेदगतसर्वार्थप्रकाशनशक्तेर्ब्रह्मणि बाधोऽस्ति। यद्वा वेदगता सर्वार्थप्रकाशनशक्तिस्तदुपादानगता, कार्यगतप्रकाशशक्तित्वात्, दीपप्रकाशशक्तिवदिति विशिष्यानुमीयते, अत उदकाहरणादिशक्तौ न व्यभिचारः। यद्वा तदुपादानगतत्वमात्रं साध्यम्, ननु यावत्तदुपादानगतत्वम्, तच्चाबाधितं ब्रह्मगतत्वमात्रमादाय सिद्ध्यतीति न कश्चिद्दोषः। नच वेदवद्दीपवच्च ब्रह्मणोऽपि जीवज्ञानहेतुत्वेन साध्यपर्यवस्येदिति न सर्वज्ञसिद्धिरिति वाच्यम्, स्वप्रकाशसर्वव्याप्तचैतन्यरूपत्वेन श्रुतिसिद्धे ब्रह्मण्यावरणनिवृत्त्यनुकूलायाश्शक्तेः पक्षधर्मताबलात् साक्षात्तदनुकूलत्वेनैव सिद्धेः, नहि कुलालादिज्ञानमिच्छाद्वारैव कार्यानुकूलन्दृष्टमिति क्षित्या

दिकार्यानुकूलतयानुमीयमानमपि ज्ञानमिच्छाद्वारैव तदनुकूलमनुमानवादिभिरनुमीयते, एवमपि वेदविषयार्थगोचरज्ञानालाभेन सार्वज्ञ्यासिद्धिरिति शङ्का तु पूर्वन्यायेनैव परिहरणीया । ननु ब्रह्मणस्स्वसंसर्गियावदर्थप्रकाशकत्वेऽतीतानागतवस्तुज्ञानासिद्धेः कथं सार्वज्ञ्यसिद्धिः? उच्यते, उक्तरीत्या ब्रह्मणो विद्यमाननिखिलप्रपञ्चसाक्षात्कारसिद्धौ तज्जनितसंस्कारवत्तया च स्मरणोपपत्तेः अतीतसकलवस्त्ववभाससिद्धिः । नच ज्ञानसूक्ष्मावस्थारूपसंस्कारो नित्यचैतन्ये न भवेदिति शङ्क्यम्, तस्य स्वरूपेणाकार्यत्वेपि दृश्यवच्छिन्नरूपेण कार्यत्वोपपत्तेः। सृष्टेः प्राङ्मायायास्सृज्यमाननिखिल पदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्तमानत्वात् तत्साक्षितया तदुपाधिकस्य ब्रह्मणोपि तत्साक्षत्वमित्यनागतवस्तुविधानसिद्धिरित्येवं ब्रह्मचैतन्यस्य कालत्रयवर्तिवस्तुविषयत्वसिद्धिरिति केचिदाहुः ।

अन्येतु स्वरूपज्ञानेनैव ब्रह्मणस्स्वसंसृष्टावभासकत्वात् सर्वज्ञत्वम्, अतीतानागतयोरविद्याचित्रभित्तौ विमृष्टानुन्मीलितचित्रवत्संस्कारात्मना सत्वेन तत्संसर्गस्याप्युपपत्तेः; नतु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वम्, "तमेव भान्तमनुभातिसर्वमि" ति सावधारणश्रुतिविरोधात् । सृष्टेः प्रागेकमेवाद्वितीयमित्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रळयस्य वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्तरूपे ईक्षणे तत्पूर्वके महाभूतादौ च सृष्टत्वाभावप्रसङ्गाच्चेति ।

यत्त्वत्र भाष्ये वर्णकान्तर प्रदर्शितम्, तदित्यम्— पूर्वसूत्रे जीवेषु जगत्कारणत्वस्यासम्भावना ब्रह्मणि तत्सम्भावना चा स यत इति पदाभ्यान्दर्शिता, अतो नैय्यायिकाद्यभिमतेश्वरानुमानमेवोपन्यस्तमिति स्याद्भ्रमः, तन्मूलपूर्वपक्षनिराकरणार्थं इदं वर्णकम् । "तत्वौपनिषद पुरुषम्पृच्छामी" त्यातिश्रुतिर्ब्रह्मण उपनिषदेकगम्यत्वं प्रतिपादयितुं शक्नोति नवेति विचार । नशक्नोति, नैय्यायिकोक्तकार्यत्वादिलिङ्गकानुमानगम्यत्वाद्ब्रह्मण;

नन्व कार्यप्रयोजका अपि बहवो गुणाः श्रुतिसिद्धाः स्वीक्रियन्ते, ते लिङ्गैर्न सिद्धयन्तीति वाच्यम्, तावता कल्पितस्य सगुणेश्वरस्यौपनिषदत्वसिद्धा- वपि जिज्ञास्यस्य निर्विशेषप्रत्यक्चैतन्यरूपस्य ब्रह्मणस्तदसिद्धेः। प्रतीचः प्रत्यक्षसिद्धत्वात्, तत्र सकलविशेषाभावस्य प्रपञ्चमिथ्यात्वानुमानेन सिद्धेः तस्य सच्चिदानन्दरूपतायाश्च अहमस्मि अहमुपलभे इत्यनुभवाभ्यां निरुपाधिकप्रेमास्पदत्वेन च सिद्धेः, सर्वशरीरेषु तदैक्यस्य च सर्वेषु कर्ण- पुटेषु श्रोत्रैक्यस्येव लाघवात्सिद्धिरिति पूर्वः पक्षः। सिद्धान्तस्तु— उदा- हृतश्रुतिरुपनिषद्गम्यत्वं प्रतिपादयितुं शक्नोति, प्रपञ्चमिथ्यात्वानुमानस्य लाघवतर्कस्य च तेन तेन प्रत्यनुमानेन प्रतितर्केण च पराहततया श्रुत्य- ननुगृहीतान्मानान्तराच्च निर्विशेषनिर्द्वन्द्ववस्तुसिद्धिः, निरतिशयानन्दे कथ ञ्चिदपि मानान्तरानवताराच्चेति। आद्यवर्णके ब्रह्म सर्वज्ञमिति साध्ये— नाध्याहृतेन शास्त्रस्य वेदस्य योनित्वात् - कर्तृत्वादुपादानत्वाद्वेति सौत्र हेतोरन्वयः। द्वितीयवर्णके ब्रह्म वेदान्तप्रतिपाद्यमित्यस्मिन् साध्ये शास्त्रम्, योनिः - प्रमाणं कारणमस्य, शास्त्रयोनि, तत्त्वात्— शास्त्रप्रमाणकत्वादिति सौत्रहेतोरन्वयः। नचाद्यवर्णके शास्त्रग्रहणं व्यर्थम्, लौकिकवैदिक साधारणशब्दयोनित्वमात्रेण सर्वज्ञत्वसिद्धेरिति वाच्यम्; आनुषङ्गिक- वेदनित्यत्वमूलसर्वकारणत्वासम्भवशङ्कानिराकरणार्थं द्वितीयवर्णकोपयोगसौक र्यार्थं च शब्दमात्रोपलक्षणतया शास्त्रग्रहणोपपत्तेः। नच द्वितीयवर्णके हेतो- स्साध्याविशिष्टम्, तत्र हेतोरब्भक्षादिवदवधारणगर्भतया शास्त्रैकप्रमाण कत्वादित्यर्थकस्य प्रमाणान्तरागम्यत्वादित्यर्थे पर्यवसानादिति।

अपरेतु— उक्तं जन्मादिकारणत्वं किं विष्णुसाधारणम्, उतनेति विचारः। हरविरिञ्चादीनामपि जगदनेककर्तृकं विचित्रकार्यत्वात् हरो जन्मकारणं सर्वज्ञत्वादित्याद्यनुमानैः पाशुपताद्यागमैश्च जगत्कारण- त्वावधारणेनासाधारण्यासम्भवात् जिज्ञास्ये ब्रह्मण्यनूद्यमानजगत्कारणत्वानु रोधेन विष्णुरेव जिज्ञास्यं ब्रह्म गुणपूर्णमिति निर्धारणमयुक्तमिति पूर्वः पक्षः।

जगत्कारणस्य धर्मादिवच्छास्त्रप्रमाणकत्वाच्छास्त्रस्य श्रुतिपुराणभारतमूलरामायणपञ्चरात्रतदनुसारिस्मृत्यादिरूपस्य विष्ण्वेकनिष्ठ जगत्कारणत्वप्रतिपादकत्वादनुमानस्य प्रत्यनुमानादिना दूषयितुं शक्यस्य स्वातन्त्र्येणादृष्टार्थनिश्चायकत्वासम्भवात्, पाशुपतादीनां मोहशास्त्रत्वप्रसिद्धेः, जगत्कारणत्वं विष्ण्वसाधारणमिति सिद्धान्तः ।

अन्येतु — परोक्तं वर्णकद्वयं वर्णयन्ति । सूत्रार्थश्चैवमाहुः — शास्त्रस्य प्रामाण्यात् जन्मादिलक्षणं ब्रह्म भवतीति ।

इतरेतु— पूर्वोक्तलक्षणमजिज्ञास्यसाधारणमित्यस्वरसादाह- शास्त्रयोनित्वात् । तद्ब्रह्म, शास्तृ - सर्वनियन्तृत्वलक्षणम्, कथमिदं लक्षणं सत' ? प्रधानेपि सम्भवादित्यत्राह अयोनित्वात् । योनिः प्रकृति, योनिभिन्नत्वात्, विभुचिदितरशासनागोचरशक्तस्वभावत्वादित्यर्थ. । ननूक्तायोनित्वे स्थिते तन्मूलमनितरसाधारणमुक्तलक्षणं स्यास्यतीत्याशङ्कायामपि शास्त्रयोनित्वादित्येवोत्तरम् । अयोनित्वशास्तृत्वे ब्रह्मणस्तः, शास्त्रप्रमाणकत्वात् । योन्यन्यत्वे "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादि शास्त्रं प्रमाणम् । शास्तृत्वे तु "एतस्य वा अक्षरस्य प्रशासने गार्गी" त्यादीति ।

अत्र प्रतिज्ञाध्याहाररूपसाधारणदूषणं स्पष्टमेव । आद्ये पक्षे सर्वज्ञत्वमिह न समर्थनीयम्, प्रयोजनाभावात् । नच जीवव्यावृत्तिः प्रयोजनम्, नारकित्वस्याप्युपलक्षणतया लक्षणत्वसम्भवेन जीवव्यावृत्तेर कार्यत्वात् । एवं जीवव्यावृत्तेरकार्यत्वाद्वेदकारणत्वस्य सार्वज्ञ्यानुपपादकतया वक्ष्यमाणत्वाच्च वेदकारणत्वस्य प्राधान्यापत्त्या वियत्पाद एवास्य सूत्रस्य कर्तव्यता दुर्निवारा । किंच वेदस्यानादित्वे तज्जनकत्वाभावेन जगत्कारणत्वशङ्का नोत्तिष्ठति, अविद्यां प्रति ब्रह्मणो जनकत्वाभावेपि जगत्कारणतायास्त्वयैवाङ्गीकारात् । तस्मात्सर्वथापि न शास्त्र निवेशसम्भव ।

सिद्धान्ते ब्रह्मणोऽन्तःकरणसम्बन्धाभावादनावृतचैतन्येन सम्बन्धात् सार्वज्ञ्य मुपपादितम्, तेन वेदवक्तृत्वं न सर्वज्ञत्वोपपादकमिति स्वयमेवाविष्कृतम्। एवंच 'यस्सर्वज्ञ' इत्यादि श्रुतिष्वभीष्टदोषोऽपि जाग्रतीष्वपि एवं शून्यगृहे भिक्षाटनोक्तिरुन्मादमेव व्यनक्ति। यदुच्यते - वक्तरि वाक्यार्थादधिकविषयज्ञानवत्त्वदर्शनात् सर्ववेदवक्तरि तदधिकज्ञानवत्त्वे सार्वज्ञ्यसिद्धिरिति; तत्र किं कृत्स्नस्याप्यर्थस्य वेदविषयत्वं विवक्षितम्, उतन? आद्ये बाधः। द्वितीये कतिपयार्थविषयज्ञानवत्त्वेनार्थान्तरम्। किंच अतीतानागतज्ञानं यद्यनेन सूत्रेण उपपाद्येत तदा कारणत्वापेक्षितसर्गकालीनपूर्वभाविसर्वार्थज्ञानसिद्ध्या कारणत्वमुपपादितं स्यादित्यधिकरणं सप्रयोजनं स्यात्, ब्रह्मणः करणाधीनज्ञानाभावेनातीतानागतयोस्सर्गकालावर्तमानतया ब्रह्मासंसर्गितया च शिथिलीकृतस्य सार्वज्ञ्यस्यानेन सूत्रेण दृढीकरणात्। दृढीकरणं च उपन्यस्तेन दुर्मतद्वयपलालबन्धनेनैव। नचानेन सूत्रेण संस्काराधीनाविद्यावृत्तिस्सूक्ष्मरूपं वोपपद्यते। तात्पर्यकल्पनन्तु जन्मादिसूत्र एव सुशकम्। अथ स्यात्, अनेन सूत्रेण शास्त्रकारणत्वं ब्रह्मणः प्रतिपाद्यते, नच तत्प्रतिपादनं फलवत्, सर्वकारणत्वोक्त्यैव तत्सिद्धेः, अतोऽस्य सूत्रस्य प्रयोजनाभावात् स्थितस्य गतिश्चिन्तनीयेति न्यायेन पूर्वसूत्रं कारणत्वलक्षणमात्रतात्पर्यकम्, इदन्तु सार्वज्ञ्योपपादनतात्पर्यकमिति कल्पनीयमिति चेत्? उन्मत्तप्रलपितानां वाक्यं हि स्थितगतिचिन्तां समश्नुते। यथा - अत्रैव शङ्करवाक्यानां कथंचिद्गतिर्वाचस्पतिना चिन्त्यते, तद्वाक्यानां या काचित् गतिः कल्पतरुकारेण तद्वाक्यानां या कापि गति रन्येनेति। सर्वज्ञो हि महामीमांसको भगवान् परमपुरुषवरणविषयः तेनैवा विर्भूतस्वरूपः प्रमाणभूत आचार्यो दर्भपवित्रपाणिर्बादरायणो वहितमनाश्शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन ब्रह्मसूत्राणि प्रणयति स्म, तत्र नयुक्तं वर्णमात्रेणाप्यनर्थकेन भवितुम्,

किंपुनरियता सूत्रेण। यदि तत्तत्सूत्राकरणे अनर्थस्स्यात् करणेचाभ्युद यस्तदानीमेव सूत्रस्य सप्रयोजनता। तदनुगुणञ्च तात्पर्यं भगवता भाष्यकारेणानुगृहीतमेव।

यच्च मतद्वयमुक्तम्, तत्राद्यं द्वितीयेन निरस्तम्; एतदप्यनुपपन्नम्, सूक्ष्मरूपस्यातीतानागताभ्यां भिन्नत्वे तयोर्ज्ञानासिद्धेः, अभिन्नत्वे लयसर्गयोरुत्सादः। अस्तु तर्ह्याद्यः पक्षः, नच 'तमेव भान्तमि' ति श्रुतिविरोधः, साहि श्रुतिर्ब्रह्मचैतन्यस्यैव घटादिप्रकाशकत्वमाह, नतु वृत्तिविषेधति, तथामत्यन्तःकरणवृत्तेरप्युत्सादात्, सर्गकाले वृत्त्युत्पत्तावपि प्रळयकाले नैकत्वावधारणविरोधः, प्रळयकाले सर्वज्ञत्वाभाव इष्ट एव। पक्षान्तरेपि स्थूलावस्थप्रकाशभावस्यावर्जनीयत्वात् तत्तत्सत्वकाले तत्तत्साक्षात्कारसत्वात् सार्वज्ञ्यं सिद्धमेव। नहि सर्वदा सार्वज्ञ्याभावे सार्वज्ञ्यस्य हानि, यथापूर्वसर्गार्थन्तु सर्गकाले अतीतानागतज्ञानस्यापेक्षितत्वाचदानीं वृत्तिरिष्यते, नतु सार्वज्ञ्यसिद्धये- इति। उच्यते, प्रतिबिंबपक्षे बिंबप्रतिबिंबयोरैक्यात्सार्वज्ञ्यं न जीवव्यावर्तकम्; नच प्रत्यन्मुखत्वादिवत् किञ्चिज्ज्ञत्वसर्वज्ञत्वयोर्व्यवस्था, दृष्टान्तासिद्धे। प्रत्यङ्मुखत्व प्राङ्मुखत्वभेदादीनां एकस्मिन्नेव मुखे अध्यासेन व्यवस्थाया असिद्धेः। विस्तरस्तु वेदान्तविजये द्रष्टव्यः।

उपाध्यवच्छेदपक्षेपि महोपाध्यवच्छिन्नगतस्य व्याप्योपाध्यवच्छिन्नगतत्वस्यावर्जनीयत्वेन न जीवव्यावृत्तिसिद्धिः। जीवोपाध्यनवच्छिन्न प्रदेश एव सार्वज्ञ्यमिति जीवव्यावृत्तिस्सिध्यत्येवेति चेत्? एवन्तर्हीश्वरे दुःखित्वाद्यभावसिद्धये ईश्वरोपाध्यनवच्छिन्नप्रदेश एव दुःखाद्युत्पत्तेर्वाच्य तया ईश्वरोपाधेरव्यापकत्वप्रसङ्गेन ईश्वरस्य व्यापकत्वन्न स्यात्। एतेन उपादानत्वेन सार्वज्ञ्यसिद्धिर्निरस्ता। किंच वेदगता प्रकाशनशक्तिः

किं ज्ञानजननशक्तिः, उतावरणनिवर्तनशक्तिः ? आद्ये ब्रह्मण्यपि सैव सिद्धयेत् । अन्त्ये आश्रयासिद्धिः । परम्परासम्बन्धेन वेदगतत्वान्नाश्रयासिद्धिरिति चेत् ? किं येन सम्बन्धेन शक्तिः कार्यगता तेनैव सम्बन्धेन कारणगतेति विवक्षितम्, उत येन केनचित्सम्बन्धेन ? नाद्य, ब्रह्मणि ज्ञानजनकत्वमात्रसिद्धिप्रसङ्गात् । न द्वितीय, उत्सर्गोक्तिविरोधात् । नह्युदकाहरणावरणप्रकाशनशक्तयो मृत्पिण्डब्रह्मविद्यासु परम्परासम्बन्धेनापि बाधिता । ज्ञानजनकत्वेनार्थान्तरत्वाच्च । विशेषानुमानेऽप्यविद्यावरणनिवृत्त्यनुकूलाशक्तिः किं साक्षादावरणनिवृत्त्यनुकूला विवक्षिता, उत साक्षात्परम्परौदासीन्येनानुकूलमात्रा ? नाद्य, आश्रयासिद्धेः, साध्यवैकल्याच्च । न द्वितीय, सिद्धसाधनात् । वेदतज्जन्यवृद्धिद्वारा तत्सिद्धेः । एतेन पक्षधर्मतानलमप्यनवकाशीकृतम् । अतएव दृष्टान्तो विषमः । किञ्चावरणनिवृत्तिशक्तिमात्रेण न सार्वज्ञ्यम् । अपिच जीवस्यैव ह्यावरणं न ब्रह्मणः । द्वितीयवर्णकेऽपि सगतिस्तावदनुपपन्ना, सूत्रवाक्यार्थभ्रमनिवृत्त्यर्थं अधिकरणान्तरारम्भे शास्त्रयोनित्वादित्यत्रापि शास्त्रोपादानकत्वभ्रमनिवारणार्थमधिकरणान्तरमारभ्येत । तथाचानवस्था । एवं सूत्रान्तरेष्वपि । न वाक्यार्थभ्रमनिराकरणायाधिकरणम्, किन्तु तन्मूलपूर्वपक्षनिराकरणायेत्युक्तावप्यतिप्रसङ्गस्समानः ।

अत्र भाष्यादौ कार्यलिङ्गकानुमानमेवोक्तम्, तेनौपनिषदत्वेनाभिमतनिर्विशेषवस्त्वसिद्धेः पूर्वपक्षानुत्थानादसङ्गतमेवोक्तमिति मत्वा स्वगुरुद्रोहमलावृतनेत्रोऽयं पण्डितम्मन्यः प्रत्यक्षमिथ्यात्वानुमानाभ्यां सिद्धिमाह । कार्यलिङ्गनिबन्धनपूर्वपक्षस्यातिजुगुप्सितत्वम्मन्वानास्सिद्धान्ते तदनुमानदूषणेऽपि व्रीळया नादूषयत् । तत्राज्ञानाद्यघटितस्वरूपस्य प्रत्यक्षेणासिद्धेः तन्मूलपूर्वपक्षोऽप्यनुपपन्नः । विशेष्यस्वरूपासिद्धचर्गाकारे कार्यलिङ्गेनापि सिद्धयतीति किमर्थं प्रत्यक्षोपन्यासः । किंच तदुपन्यासस्वरूपस्य प्रत्यक्षसिद्धतया औपनिषदत्वाभावसाधनार्थं एव पर्यवसन्नः ।

मिथ्यात्वानुमानतन्निराकरणाभ्यां तस्यैवौपनिषदत्वं समर्थितम्, नतु ब्रह्मण'; निरतिशयानन्दे मानान्तरानवकाशादित्यप्यसङ्गतम्, — निरतिशयपदेन स्वरूपविवक्षायां तन्मानान्तरगम्यमेवेति मानान्तरानवतारोक्तिविरोधः। निरतिशयत्वविवक्षायां तस्यैवौपनिषदत्वप्रसङ्गः। प्रत्यक्षावलम्बनेन पूर्वपक्षे सङ्गतिरप्यनुपपन्ना स्यात्। तस्मात् स्वगुरुवदेव स्वयमप्यन्ध इति। जगत्कर्तुरौपनिषदत्वमङ्गीकृत्य तस्यैवानुमानिकत्वनिरासे भाष्यस्य तात्पर्यमिति यदि भाष्यं समर्थयित्वा पण्डितम्मन्यस्तु मिथ्यावादीत्युपेक्ष्यते तदा वादमित्युत्तरमिति।

द्वितीयपक्षोप्यनुपपन्न', पूर्वपक्षानुत्थानात्। अनेकवर्णपदवाक्यानि स्वयमेव कुर्वन् पूर्वपक्षी कथमनेककर्तृकत्वमनुमिनुयात्। अतस्सिद्धान्ते शास्त्रयोनित्वमनुपपन्नम्। नच पाशुपतमतनिरासार्थन्तत्, तस्यापि शास्त्रत्वात्। नचाशास्त्रमेव तदिति वाच्यम्, " साङ्ख्यं योग पाञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि " रिति भारत एवाध्यात्मशास्त्रत्वोपपादनात्; विरुद्धांशाप्रामाण्यस्य विरोधाधिकरण एव सिद्धत्वात्। ईक्षत्यधिकरणेन साङ्ख्यस्य वेदार्थतया प्रामाण्यस्येव पत्युरसामञ्जस्यादित्यनेन पाशुपतस्यापि वेदार्थतया प्रामाण्यस्य निरासेन क्वचिन्मोहशास्त्रत्वस्थापनाच्च नेह तस्यावकाश। किंच नेह कण्ठरवेण पाशुपतनिरासः क्रियते, किन्त्विच्छयैव केवलं विवक्षा कल्प्यते, कल्पनञ्च पूर्वसूत्रेपि सुशकमेव। कथञ्चित्स्थितगतिचिन्तनस्य नात्रावकाश इत्युक्तमेव।

तृतीयपक्षे सूत्रार्थोनुपपन्न', शास्त्रस्य प्रामाण्यमात्रेण प्रकृतार्थासिद्धे'। तत्प्रतीत्यर्थं शब्दोवाध्याहार्य अर्थाद्वा तत्सम्बन्धप्रतीतिर्वाच्या, ततो वरं सम्बन्धप्रतीत्यर्थं बहुव्रीह्यङ्गीकार। तत्पुरुषश्चात्र जघन्य, पूरणगुणेत्यादिना षष्ठीसमासनिषेधात्। " तदशिष्यं सज्ञाप्रमाणत्वादि " ति निर्देशेपि अस्वारस्यमपरिहार्यम्। तस्मादत्र बहुव्रीहिरेव ज्यायानिति।

इतरपक्षे अरुच्या लक्षणान्तरकथने जन्मादिसूत्रवैयर्थ्यं स्पष्टम् । अयोनित्वादिति च व्यर्थम् , अचेतनत्वेन प्रकृतौ शास्तृत्वशङ्काया अनुत्थानात् , ब्रह्मणि प्रकृतिभिन्नत्वकीर्तनेन प्रकृतौ शास्तृत्वशङ्काया अपरिहाराच्च ।

इति शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

---

अथ समन्वयाधिकरणम् ।

उक्तं शास्त्रप्रमाणकत्वं ब्रह्मणो न सम्भवति, वेदान्तानां ब्रह्मणि समन्वयासम्भवादित्यत्राह—

१- तत्तु समन्वयात् ॥ १ - १ - ४ ॥

अत्र सन्देहः - वेदान्तानां ब्रह्मणि समन्वयोऽस्ति नवेति ।

अत्र पूर्व पक्षः— वेदान्तानां सिद्धे व्युत्पत्तिसमर्थनेन यद्यपि ब्रह्मण्यन्वयस्सम्भवति, तथापि न समन्वयः, प्रयोजनपर्यवसितो ह्यन्वयस्समन्वयः, प्रवृत्तिनिवृत्तिपरत्वविधुराणां स्वरूपपराणां सद्विद्यादिकानां प्रयोजनशिरस्कता, अननुष्ठेयार्थप्रतिपादने सत्येव हि तदनुष्ठानमुखेन प्रयोजनशिरस्कता, अतोऽर्थमुखेन प्रयोजनशिरस्कत्वाभावाज्जपमुखेनैव प्रयोजनशिरस्कता वाच्या, तथाचोपासनाविधियुक्तानामपि वाक्यानां सद्विद्यादिवत् ब्रह्मविषयतया प्रतीयमानानां सद्विद्यादौ क्लृप्तप्रयोजनपर्यवसानमेव युक्तम् , ' नान्यः पन्था , इति ब्रह्मज्ञानातिरिक्तस्य मोक्षसाधनत्वनिषेधात् भगवदुपासनस्य देवतान्तरोपासनस्य च मोक्षसाधनत्वोपदेशात् तेषां च मृज्यत्वश्रवणात् ब्रह्मणश्चातादृशत्वात् , —इत्येवं ब्रह्मणि वेदान्तानां समन्वयासम्भवात् शास्त्रप्रमाणकत्वं ब्रह्मणो न सम्भवतीति विचारो नारम्भणीय इति ।

राद्धान्तस्तु— अस्त्येव समन्वयः, सद्विद्यायां हि निखिलजगन्निमि त्तोपादानकारणं ब्रह्म प्रतिपाद्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य' इत्युक्तम् । इदं च वाक्यं अधिकार्यभिलाप इति प्रतीयते, अतः प्रकरणाद्ब्रह्मज्ञानवतो मम संसारमोक्षानन्तरं ब्रह्मप्राप्तिर्भवती त्युच्यते । एवं ब्रह्मज्ञानस्य प्राप्तिसाधनत्वेवगते किन्तज्ज्ञानं साधन भूतमित्याकाङ्क्षायां 'निदिध्यासितव्यो द्रष्टव्य' इत्यादिवाक्यैरनुष्ठेय-ज्ञानावगमात्सन्मुखेन सद्विद्यादीनामपि प्रयोजनशिरस्कत्वात् सर्ववेदा-न्तानां भगवत्येव पर्यवसानस्योक्तत्वेन पूर्वोक्तविरोधासिद्धेश्च वेदान्तानां ब्रह्मणि समन्वयाच्छास्त्रप्रमाणकत्वं ब्रह्मणि सम्भवत्येव; सद्विद्याया उपासनतात्पर्यकत्वमेतत्सूत्रविवक्षितं प्रागुक्तमपीहानुसन्धेयमिति ।

परे ऽन्येचास्य सूत्रस्य सिद्धव्युत्पत्तिपरत्वं वदन्ति । तदनुपपन्नम्, प्रथमसूत्रस्याथातश्शब्दसूचिताधिकारसमर्थनार्थं सिद्धव्युत्पत्तिपरत्वस्य समर्थितत्वात् ।

अपरेतु - अस्तु शास्त्रैकसमधिगम्यं जगत्कारणम्, तथाप्यति व्यापकमिदं लक्षणम्, शास्त्रतोपि कचित्कचित्पशुपतिहिरण्यगर्भादीना-मपि कारणत्वप्रतीतेः, इति पूर्वपक्षे राद्धान्तः - सम्यग्विचारितादुपक्रमादि तात्पर्यलिङ्गरूपादन्वयात्सम्यग्वचनवृत्त्या सर्वशास्त्रस्य तत्परत्वरूपा दन्वयाच्च विष्णवाख्य ब्रह्मैव कारणतया शास्त्रगम्यमिति । तदनुप-पन्नम्, 'एतेन सर्वे व्याख्याता' इत्यत्रैवास्यार्थस्य वक्ष्यमाणत्वादिति ।

इतरेतु- जन्मादिकारणत्वमवश्यं लक्षणतयाभ्युपगन्तव्यम्, 'यतोवे' त्यादिश्रुत्यनुसारात्, तच्च न सम्भवति, 'यतो वा इमानि भूतानी' ती दमा प्रसिद्धभूतादिपरिग्रहे 'यत्प्रयन्त्यभिसंविशन्ती' ति लक्षणवाक्यशेषो पदिश्यमानप्रयदभिसंवेशस्य ब्रह्मण्ययोगात्, चिद्रूपस्य ब्रह्मणो जडानु पादानत्वात्, प्राणिपरिग्रहे इमानि भूतानीति जन्मादिसाक्षात्कर्तृश्रुत-भूतशब्दायोगा, दित्यत्राह 'तत्तुसमन्वयात्'; पूर्वसूत्रस्थशास्त्रयोनित्वपदीय

प्रकृत्यंशस्तृतीयान्त इहानुवर्तते । तच्छास्त्रं अखिलप्रपञ्चोपादानादि त्रिकारण्यपि शास्त्रयोनि भक्त्या समन्वयात् (?), अतो ब्रह्मणि वाक्य शेषोपदिश्यमानप्रयदभिसंवेशो युज्यते, इति। अयमपि पक्षोऽनुपपन्नः, जन्मादि सूत्रोक्तलक्षणसमर्थनपरत्वे तदानन्तर्यप्रसङ्गादध्याहारप्रसङ्गाच्च ।

इति समन्वयाधिकरणम् ॥४॥

## अथ ईक्षत्यधिकरणम् ।

इत्थञ्चतुस्सूत्र्या शास्त्रारम्भस्समर्थितः । अथ शास्त्रमारभ्यते ।

१- ईक्षतेर्नाशब्दम् । ॥ १ - १ - ५ ॥

जगत्कारणत्वं यद्ब्रह्मलक्षणमुक्तं तत्परीक्ष्यते प्रथमाह्निकेन । अस्मिन्पादे अयोगव्यवच्छेदः क्रियते । ननु कथं प्रथमपादस्यायोगव्यवच्छेदपरत्वम्, एतदधिकरणपूर्वपक्षे सर्वेषामपि वेदान्तानामाचिद्विलक्षणपरत्वाक्षेपे सत्येव ह्ययोगव्यवच्छेदतात्पर्यमुपपद्यते, तथाक्षेपे पूर्वपक्षस्य तात्पर्यमसिद्धमेव ; तथाहि ईक्षत्यधिकरणे 'गतिसामान्यादि' त्युच्यते, अयं खलु सूत्रार्थ - उपनिषदन्तरेषु ब्रह्मण कारणत्वप्रतिपादनादिहापि तथैव भवितव्यामिति; तथा 'अन्तस्तद्धर्मोपदेशादि' त्यत्र तच्छब्देन ब्रह्म परामृश्य ब्रह्मधर्माणामुपदेशादित्युच्यते, एवं 'आकाशस्तल्लिङ्गादि' त्यत्र तच्छब्देन ब्रह्म परामृश्य तदसाधारण धर्मादित्युच्यते, एतत्सर्वं वाक्यान्तरेष्वपि ब्रह्मप्रतिपादने पूर्वपक्षिणा आक्षिप्ते न युज्यत एवेति चेत् ? उच्यते, प्रथमसूत्रात्प्रथमान्ततया विपरिणतब्रह्मपदान्वयेन साध्यलाभे सम्भवत्यपि नाशब्दमिति साध्य निर्दिष्टम् , अयञ्च निर्देशो वाक्यान्तरेपि ब्रह्मप्रतिपादनाभावो यदि विवक्षितस्स्यात् तदानीमेव युज्यते. ब्रह्मपदेन साध्यविशेषाल्लाभात् ; तथा 'अन्तस्तद्धर्मोपदेशादि' त्यत्र 'भेदव्यपदेशाच्चान्य' इति साध्यं निर्दिष्टम् ,

अयंच निर्देशो ब्रह्मपदाननुवृत्तिज्ञापकः; अपिच 'भेदव्यपदेशाच्चान्य' इत्यस्यादित्यमण्डलान्तरुपास्यः प्रसिद्धादित्यजीवादन्यः ' यआदित्ये तिष्ठन्' ति ततो भेदव्यपदेशादित्यर्थः, परैरपि तथैव व्याख्यानम्, एवं सत्यन्ययोगव्यवच्छेदपरत्वे इदं सूत्रमनन्वितार्थं स्यात्, जीवातिरिक्तः परमेश्वरः कारणत्वोपास्यत्वादिना श्रुत्यन्तरेषु प्रतिपाद्यतान्नाम, अन्तरा दित्यवाक्ये प्रतिपाद्यः प्रसिद्धादित्य इति खल्वन्ययोगव्यवच्छेदपरत्वे पूर्वपक्षः, अस्य पूर्वपक्षस्य भेदव्यपदेशेन निरासः कथमुपपद्येत, भेदव्यपदेशाद न्यत्वाङ्गीकारेणैव पूर्वपक्षप्रवृत्तेः। यदुक्तं परैः- आदित्यादन्तरः अन्तरादित्य इति श्रुतिसाम्यात् इह प्रतिपाद्यस्तद्वदन्यएवेति, तन्न, तथासति हि श्रुतिसाम्यादिति हेतुं निर्दिश्येत, नतु भेदव्यपदेशादिति, श्रुतिसाम्यञ्चा-सिद्धम्, अन्तरान्तरश्रुत्योर्भिन्नत्वात्। अक्षरद्वयसाम्यात् श्रुतिसाम्याङ्गी कारेपि कथन्तस्य साधकत्वम्, अन्तरात्मत्वमेकत्रोच्यते, इतरत्र सविग्रहस्य मण्डलावस्थानम्! एवहि नार्थप्रत्यभिज्ञा। एवमपि श्रुतिसाम्य मात्रादभेदे आदित्यादन्तर इत्यत्रापि सविग्रहस्यैव वृत्तिरुच्येत। तस्मा-दन्ययोगव्यवच्छेदपरत्वे सूत्रमनुपपन्नम्। अयोगव्यवच्छेदपरत्वेप्यनेन सूत्रेण परमेश्वरसिध्दावपीदं वाक्यं प्रसिद्धादित्यपरमेवास्त्विति शङ्का नोत्ति-ष्ठति, ' सयश्चाय ' मित्यानन्दमयाभेदस्य प्रागभिधानात्।

अन्येतु परमेश्वरत्वे पूर्वसूत्रेण समर्थिते परमेश्वरएव मण्डलाभिमान्यस्त्विति शङ्कायां ' यआदित्येतिष्ठन्' ति भेदव्यपदेशात् परमेश्वरो मण्डलाभिमानि नोन्य इत्याहु। तन्न, तथासति परस्परानुपजीविसाध्यद्वयपरत्वेनाधिकरण भेदप्रसङ्गात्, तथाङ्गीकारे चकारास्वारस्य स्पष्टम्। तेन हि सूत्रद्वयस्यापि एकमेव साध्यमित्यवगम्यते। तेनेदं सूत्रमयोगव्यवच्छेद परमेव! ईक्षणात्मोपदेश एव गतिसामान्यसूत्रविवक्षित। एवञ्च बहुपु-कारणवाक्येषु ईक्षणात्मोपदेशादिति गतिसामान्यसूत्रार्थः। सौत्रतत्पद-द्वयमपि न ब्रह्मपरम्, किन्तु भेदव्यपदेशाच्चान्य इति अन्यत्वस्य प्रति

ज्ञातत्वाच्चकारेण प्रथमसूत्रेपीयमेव प्रतिज्ञेत्यवगमात् अन्यपरमेव । पूर्वपक्षतया प्रसक्तस्यान्यत्वप्रतियोगितयान्वय. । ततश्चादित्यान्यधर्मस्योपदेशादित्यर्थः । आदित्यायोग्यधर्मस्योपदेशाच्चतो भेदसिध्दिरिति भावः । आकाशस्तल्लिङ्गादित्यत्रापीदमेवान्यपदमनुवर्तते, प्रसिध्दाकाशादन्य - इत्यर्थः । वस्तुतस्त्विदमपि तत्पदद्वयमयोगव्यवच्छेदमेव पिशुनयति । तथाहि – यद्यन्ययोगव्यवच्छेदार्थता, तदा उत्तरपादेष्विव सर्वत्र ब्रह्मेत्यन्वयात् आदित्यान्तर्वर्तिब्रह्मधर्मोपदेशात् आकाशो ब्रह्म लिङ्गादित्युक्ते अदृश्यत्वादिगुणकोधर्मोक्तेरित्यत्रेव तत्पदाभावेपि समभिव्याहृतसम्बन्धलाभात् ब्रह्मधर्मोपदेशात् ब्रह्मलिङ्गादिति लभ्यत एव, अतोन्ययोग व्यवच्छेदपरत्वे तत्पदं व्यर्थम् । अयोगव्यवच्छेदपरत्वे त्वादित्यान्तवर्ती जीवादन्यो धर्मोपदेशादित्युक्ते अन्यधर्मोपदेशादित्यर्थः स्यात्, ततश्चापहत पाप्मत्वादिधर्माधिकरणस्याप्रसिध्देर्धर्मोपदेशादित्यसङ्गतं स्यात् । तद्धर्मोपदेशादित्युक्ते तु तस्यैव धर्म इत्यर्थलाभार्थत्वाच्चच्छव्दस्यावधारणेनादित्यायोग्यत्वलाभादादित्यायोग्यधर्मोपदेशादिति लभ्यते । आकाशस्ताल्लिङ्गादित्यत्र लिङ्गपदेनासाधारण्यरूपावधारणार्थप्रतीतेराकाशायोग्यधर्मोपदेशादिति लभ्यते, लाघवार्थन्तत्पदप्रयोगः । अतस्तत्पदद्वयमपि अयोग व्यवच्छेदतात्पर्यसाधकमेव । एवमयोगव्यवच्छेदेन लक्षणस्यासम्भव निरासस्सिद्धयति ।

नन्वेवं सति "अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशादि" त्यत्र तच्छव्दोपि कथमयोगव्यवच्छेद न पिशुनयेदिति चेन्न ;- इमामाशङ्कां यतो राद्धान्तप्रतिज्ञाया नारायणपदमप्रयुञ्जानो भगवानेव पर्यहार्षीत् । अत्र तत्पदप्रयोगस्समानप्रकरणसौबालवाक्यप्रतिपन्ननारायणव्यञ्जनेन देवता निर्धारणतयैव सार्थ इति हि भगवान्मन्यते । अतः प्रसिद्धपरामर्शी तच्छव्दः । पूर्वोत्तराधिकरणसिद्धान्तप्रतिज्ञयोर्नहि नारायणशब्द भगवान्प्रयुङ्क्ते । न जानीमो भगवतो भावम् । तद्धर्मव्यपदेशात्— सौबाल

प्रसिद्धनारायणधर्मव्यपदेशादिति विवक्षितम् । अथ स्यात्, कथमेवमेष भावो वेदाचार्यस्य भवता ज्ञात इति ; निर्देशस्वारस्यादिति ब्रूमः । तथाहि-अन्तर्यामी तद्धर्मव्यपदेशादिति निर्दिष्टव्ये अधिदैवाधिलोकादिष्विति निर्देशेन श्रुत्यन्तरेष्वसंशयं अन्तर्यामिब्राह्मणद्वये संशयंच भगवान्वेदाचार्यो मन्यते । स्वप्रथमानुवाकस्य भगवत्परतया विनियोगवशेन निर्णयात् "अन्तःप्रविष्टश्शास्ताजनानामि" ति वाक्यं भगवत्परतया निर्णीतम् । 'ब्रह्मविदाप्नोतिपरमि'त्यनुवाकस्य द्वितीयान्तानन्तपदेन ब्रह्मपरत्वस्य निर्णयात् 'तत्सृष्ट्वेत्या' दिवाक्यमपि निर्णीतार्थम् । सुबालोपनिषन्नारायणपरतया सुप्रसिद्धैव । यद्यपीहापि नारसिंहपुराणादौ भगवति रूढतया प्रसिद्धामृत पदमहिम्ना ब्रह्मपरत्वं प्रतीयत एव, तथापि श्वेताश्वेतरे ' क्षरं त्वविद्याह्यमृतन्तु विद्ये ' ति जीवस्यामृतपदेन निर्देशेन तत्रैवामृताक्षरामिति विशेषणस्यान्यत्रामृतपदप्रयोगे जीवप्रतीत्यर्थत्वाच्च पूर्वपक्षयुक्तिनिराकरणसामर्थ्यममृत पदस्य नास्तीत्यभिप्रायेणान्तर्यामिब्राह्मण एव विचारः क्रियत इति ।

यत्तु कश्चिदाह- अलक्ष्ये प्रधानादौ कारणत्वस्याभावसमर्थनादति व्याप्त्युद्धार एव स्यादिति । एवं वदतः कोभिप्राय ? किमसम्भवोद्धारो नेति, किंवातिव्याप्त्युद्धारो भवतीति, अथवातिव्याप्त्युद्धारादेव पादभेदो न स्यादिति ? नाद्य, लक्ष्ये सिद्धे तत्र लक्षणाभावे तद्विशिष्टलक्ष्य प्रतीत्यभावात्; लक्ष्यसिद्धावपि विवक्षितविशिष्टप्रतीत्यभावसिध्द्या लक्षणा सम्भवेन तदुद्धारेऽसम्भवोद्धारो नेति वक्तुमशक्यत्वात् । नद्वितीय, तावताप्यसम्भवोद्धारस्याक्षते. । नतृतीय, तात्पर्यभेदादेव पादत्रिपादीविभाग सिद्धेः । प्रथमपादे सदादिवाक्यैर्ब्रह्मप्रतिपादनेन ब्रह्मसिद्धावेव तात्पर्यम्, तद्वाक्ये ब्रह्मप्रतिपादनस्यान्यप्रतिपादने असम्भवात् अन्यनिरास. । त्रिपाद्यान्तु ब्रह्मप्रतिपादनाभावे अन्यप्रतिपादनप्रसङ्गात् ब्रह्मप्रतिपादनम् । एवञ्चासम्भवनिरासे प्रथमपादस्य तात्पर्यम् । अतिव्याप्ति

निरासे त्रिपाद्या । सूत्रकारश्च लक्ष्यस्य तत्र लक्षणस्य च सिद्धावे वातिव्याप्तिनिरासः कार्य इत्यभिप्रैति । एवमभिप्रायश्च पूर्वोक्तहेतुभि रेवावगम्यते ।

ईक्षतेर्नाशब्दम् ॥ १ १ - ५॥

इदमाम्नायतेच्छान्दोग्ये ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय तदैक्षत बहुस्यां प्रजायेये " त्यादि । तत्र संशयः किं सच्छब्द वाच्यं साङ्ख्योक्तं स्वतन्त्रमानुमानिकं प्रधानम्, उत प्रधानशरीरक मिति । किं युक्तम् ? साङ्ख्योक्तं स्वतन्त्रप्रधानमेवेति । कुतः ? इदमिति प्रसिद्धमचेतनं त्रिगुणात्मकं कार्यं निर्दिश्य तस्य ' सदासी देकमेवे ' ति स्थूलावस्थाशून्यसद्रूपताप्राप्तिरुच्यते, एकस्य सतो विज्ञा नेन सर्वविज्ञानञ्च प्रतिज्ञाय दृष्टान्तेन तदुपपाद्यते, इदं सर्वं सच्छब्द वाच्यस्य त्रिगुणात्मकाचेतनरूपत्व एव सम्भवति, एवं सद्विद्याया अचे तनपरत्वे सति ' आत्मावा इद ' ' ब्रह्मवा इद ' ' एकोहवै नारायण ' इत्यादिकारणवाक्यं सर्वं सद्विद्यार्थानुवादरूपत्वादचेतनपरमेव, ' एको हवै नारायणआसी ' दित्यस्य ' एक आसीदि ' ति प्रत्यभिज्ञया सद्विद्या नुवादरूपत्वस्य स्फुटत्वादचेतनपरत्वे सिद्धे ' नारायणाद्ब्रह्माजायते ' इत्यस्य नारायणपदेनैतदर्थप्रत्यभिज्ञानात् अचेतनपरत्वं सिद्धम्, एवं कृत्स्नमपि कारणवाक्यं अचेतनपरमेवेति । अत्राह – ' ईक्षतेर्नाशब्दमि ' ति । साङ्ख्याभिमतं प्रधानञ्च जगत्कारणम्, ' तदैक्षते ' तीक्षतिधातोः श्रव णात्, अचेतने तदसम्भवात् । पूर्वपक्षस्य सद्विद्यानिबन्धनत्वसूचनार्थो धातुनिर्देशः । अशब्दमिति । यस्मिन् शब्द एव प्रमाणं न भवति तदशब्दमित्युच्यते । अनेन साङ्ख्योक्तानुमानविषयत्वस्याभिप्रेत त्वात् तैश्च स्वातन्त्र्येण प्रधानस्य जगत्कारणत्वकल्पनात् अशब्द मित्यनेन स्वतन्त्रं प्रधानमिति लभ्यते । अशब्दमित्यत्र शब्दशब्दा

न्मत्वर्थीयाच्प्रत्यये तस्यचाभ्यक्ष इतिवदवधारणगर्भत्वे चोक्तार्थलाभः । यद्वा अशब्दशब्दश्शब्दान्यपरः, अशब्दशब्दान्मत्वर्थीयाच्प्रत्ययः, ततश्च शब्दभिन्नि शब्दातिरिक्तानुमानगम्यमित्यर्थः ।

नन्वीक्षणं 'तत्तेज ऐक्षत' इति गौणेक्षणसाहचर्यात् कार्यानुरूप्य लक्षणं गौणमेवेत्याक्षिप्य परिहरति—

२- गौणश्चेन्नात्मशब्दात् ॥ १- १- ६ ॥

'सआत्मे' ति नवकृत्वोऽभ्यस्यते, अतस्तत्रचेतनत्वावगमान्मुख्यमेवेक्षणम् । तेजःप्रभृतिशब्दा अपि तदात्मपरा एव । अत्रैव "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी" ति अनुप्रवेशस्य नामरूपव्याकरणार्थता ऽवगम्यते, अनुप्रवेशस्य तादर्थ्यञ्च नामरूपयोस्स्वपर्यन्तत्व एव सङ्गच्छते, अन्यथा पितृकुलालादिवदननुप्रवेशेनैव व्याकरणं स्यात् ; अतो नामरूपयोः स्वपर्यन्तत्वमनुप्रवेशस्य तादर्थ्यावगमात्सिद्धम् । ननु 'तासान्त्रिवृतन्त्रिवृतमेकैकां करवाणी' ति नामरूपव्याकरणार्थं त्रिवृत्करणश्रवणेन साध्यत्रिवृत्कृतिनामरूपयोः स्वपर्यन्तत्वमवगम्यते, अतः कथन्तेज प्रभृति पदानां स्वपर्यन्तत्वमिति चेदुच्यते, अनुप्रवेशो हि नेदानीं साध्यः, अनादिसिद्धत्वात् ; तथाच तस्य नामरूपव्याकरणार्थत्वे ऽवगते सति नामरूपमात्रस्य तत्पर्यन्तत्वमिति सिद्ध्यतेत्येवेति । ततश्च नामरूपयोस्स्वपर्यन्तत्वात्तेजःप्रभृतिशब्दैस्तदात्मोपस्थानं युक्तमेव । नाम्नस्स्वपर्यन्तत्व स्वाभिधायकत्वम् , रूपस्य स्वपर्यन्तत्व स्वापृथक्सिद्धधर्मत्वमिति ।

इतश्च न प्रधानं सच्छब्दवाच्यम्—

३- तन्निष्ठस्य मोक्षोपदेशात् ॥ १ - १ - ७ ॥

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य" इति पूर्वोपदिष्टसद्ब्रह्मज्ञानवन्तं तस्येत्यनूद्य तस्य मोक्षो भवतीत्युपदिश्यते,

सज्ज्ञानञ्च तत्त्वमसीत्युपदेशात् सत्तादात्म्यज्ञानमेव, नह्यचित्तादात्म्य ज्ञान मोक्षहेतुरिति युज्यते ।

इतश्च न प्रधानम् —

४ हेयत्वावचनाच्च ॥ १ १ ८ ॥

यदि प्रधानमेव कारण सच्छब्दाभिहित भवेत् तदा मुमुक्षो श्वेतकेतोस्तदात्मत्व मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्य स्यात्, नच तत्क्रियते, प्रत्युतोपादेयत्वेन 'तत्त्वमसि' 'तस्य तावदेवचिर' मित्युप दिश्यते ।

*इतश्च न प्रधानम्—*

५ प्रतिज्ञाविरोधात् ॥ १ १ ९ ॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च । वाक्योपक्रमे एकविज्ञानेन सर्वविज्ञान प्रतिज्ञातम्, तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्वि ज्ञानात्तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्, तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात् प्रधानविज्ञानेन चेतन विज्ञानासिद्धे निरुद्ध्यते ।

इतश्च न प्रधानम् —

६ स्वाप्ययात् ॥ १ १ १० ॥

तदेव सच्छब्दवाच्य प्रकृत्याह 'स्वप्नान्त मे सोम्य विजा नीही' ति "यत्रैतत्पुरुष स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेन स्वपितीत्याचक्षते स्व ह्यपीतो भवति' इति सुषुप्त जीव सता सम्पन्न स्वम्– अपीत स्वस्मिन्प्रलीन इति व्यप दिशति, प्रळयश्च स्वकारणे लय । नचाचेतन प्रधान चेतनस्य जीवस्य कारण भवति । स्वमपीतोभवति आत्मानमेव जीवोपीतो भवतीत्यर्थ । चिद्वस्तुशरीरक तदात्मभूत ब्रह्मैव जीवशब्देनाप्यभिधीयत इति नाम

रूपव्याकरणश्रुत्योक्तम्, तज्जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकाले प्रळयकाल इव ज्ञानावस्थाप्रहाणेनावस्थानात् 'सतासोम्य तदा सम्पन्नो भवति स्व मपीतो भवती' त्युच्यते । यद्यपि स्वपिधातोर्निष्पन्नस्स्वपितिशब्दः, नतु स्वशब्दोपपदादपीतेः, तथापि अशनायादिनिर्वचनवदर्थवादरूप- मिदन्निर्वचनम् ।

इतश्च न प्रधानम् —

७- गतिसामान्यात् ॥ १ - १ - ११ ॥

"आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत" । "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेराप. अद्भ्यः पृथिवी" "तस्य हवा एतस्य महतो भूतस्य निःश्वसित- मेतद्यदृग्वेदः" इत्यादिसृष्टिवाक्यानां या गतिः - प्रवृत्तिः तत्सामान्यात् समानार्थत्वात् अस्य वाक्यस्य । ततश्च सर्वेष्वपि कारणवाक्येषु चेत नस्यैव कारणत्वप्रतिपादनात् न सच्छब्दवाच्यं प्रधानम् ।

इतश्च न प्रधानम्—

८- श्रुतत्वाच ॥ १ - १ - १२ ॥

श्रुतमेव ह्यस्यामुपनिषद्यस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपयो र्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्व सर्वाधारत्वं अपहतपाप्मत्वादिकं सत्य कामत्व सत्यसङ्कल्पत्वञ्च 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकर वाणि' 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा ऐतदात्म्य मिदं सर्वं तत्सत्य सआत्मा" "यच्चास्येहास्ति यच्च नास्ति सर्वन्त- दस्मिन् समाहितम्' 'तस्मिन् कामास्समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोपिपासस्सत्यकामस्सत्यसङ्कल्प' इति ।

परंतु— ईक्षतेर्नाशब्दम्। अत्र प्रधानं जगत्कारणवादिवेदान्तवाक्य प्रतिपाद्यमिति धर्मिनिषेध्ययोरध्याहारेण साध्यनिर्देशः। तत्र हेतुर शब्दमिति। सदादिशब्दानोध्य हि तदित्यर्थः। नन्वसिद्धो हेतुः, प्रधानेपि सत्तायोगेन सदादिशब्दप्रवृत्त्युपपत्तेरिति शङ्कानिराकरणेन तदुपपादनार्थो हेतुरीक्षतेरिति। एवञ्च प्रधानं न जगत्कारणत्वेन सृष्टिवाक्यजातबोध्यम्, ईक्षणश्रवणेन तत्रत्यजगत्कारणपरसद्ब्रह्मादिशब्दाविषयत्वादिति,— सूत्रार्थः। पूर्वपक्षे मानान्तरगोचर एवार्थे व्युत्पत्तिसम्भवेन तदगोचरे ब्रह्मणि सद्ब्रह्मात्मादिशब्दानां व्युत्पत्तिग्रहासम्भवात् सदेवेत्यादिवाक्यं प्रधानानुवादकमिति विवक्षितम्। सिद्धान्ते यौगिकत्वेन पृथग्व्युत्पत्तिग्रहानपेक्षा यूपाहवनीयादिन्यायेन तद्ग्रहसम्भवश्च विवक्षितौ। गौणश्चेन्नात्मशब्दात्। अनात्मपदं स्वरूपपरधर्मप्रधानम्, तस्य, शब्दात् स्वरूपत्वप्रतिपादकशब्दादित्यर्थः। तेनच 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी' ति सच्छब्दाभिहितं जगत्कारणं प्रति जीवस्य स्वरूपत्वप्रतिपादकशब्दः 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति श्वेतकेतुं प्रति सच्छब्दाभिहितस्य स्वरूपत्वप्रतिपादकशब्दश्चत्युभयमपि सङ्गृहीतम्। अयमेकोर्थः। 'सआत्मे' त्यात्मशब्दादित्यन्योर्थः। तन्निष्ठस्य मोक्षोपदेशात्। अत्र तत्पदेन पूर्वसूत्रप्रकृतं जीवं प्रति सच्छब्दवाच्यस्य स्वरूपत्वं परामृश्यते। ननु 'तत्त्वमसी' ति न तत्वदृष्ट्या सदात्मत्वोपदेशः, किन्तु स्थूलारुन्धतीन्यायेन, ततश्च प्रधानस्य सच्छब्दार्थत्वेपि सदात्मत्वोपदेशो न विरुद्ध्यत इत्याशङ्क्याह हेयत्वावचनाच्च। तथा सति मोक्षयितव्यश्वेतकेतुस्तन्निष्ठो माभूदिति मुख्यमात्मानमुपदिदिक्षुणा आरुणिना स्थूलतारायामरुन्धतीतादात्म्यस्येवेह सदात्मत्वस्य हेयतायाः वक्तव्यत्वापत्तेः तस्यावचनात्, सदात्मत्व एवोपदेशपरिसमाप्तिदर्शनात्। पूर्वसूत्रे तच्छब्दस्यानन्तोप्यपेक्षनिष्ठादिहाप्यनुषक्तः पञ्चम

न्तो विपरिणम्यते । तस्य सदात्मत्वस्य, हेयत्वावचनादिति सूत्रार्थः । स्वाप्ययात् । "यत्रैतत्पुरुषः स्वपिति नाम" इत्यादिना प्रकृतं सत्त्व-शब्देनोक्त्वा तत्र जीवस्याप्ययप्रतिपादनादपि न सच्छब्दवाच्यं प्रधानम् । ननु ब्रह्मण्यपि जीवस्य मुख्यो लयो न सम्भवति, नित्यत्वात्, औपचारिकस्तु लयः प्रधानेपि व्यपदेष्टुं शक्यत इति चेन्न ; — अध्यस्ताकारनिवृत्तौ तदनुवृत्ताधिष्ठानरूपस्याध्यस्तोपाधिकृतभेदनिवृत्त्या तदभेदप्राप्तिरप्ययशब्दितो लय, अस्ति च सुषुप्तौ ब्रह्माध्यस्तस्थूलसूक्ष्मदेहद्वयोपाधिकाकारनिवृत्तौ सत्यां तदनुवृत्ताधिष्ठानरूपस्य जीवस्य तत्कृतभेदनिवृत्त्या ब्रह्माभेदप्राप्तिरिति मुख्यलयसम्भवात् । यद्यपि सुषुप्तावप्यविद्योपाधिकृतोऽन्तःकरणोपाधिकश्चाऽऽमुक्तेरनुवृत्तो जीवस्यास्त्येव ब्रह्मणो भेदः, तथाप्यत्यन्तभेदकस्थूलसूक्ष्मोपाधिसत्त्वे यथा भेदो न तथा भेदोस्ति तन्निवृत्ताविति कथञ्चिद्भेदप्राप्तिरपि युज्यत इति ।

अपरेतु - इदमधिकरणं ब्रह्मावाच्यत्वनिराकरणपरं वर्णयन्ति । तत्र "अशब्दमस्पर्शमरूपमव्ययं" "यतोवाचो निवर्तन्ते" इत्यादि श्रुतिभिः ब्रह्मावाच्यमिति पूर्वपक्षे "तमेवैकं जानथ" "आत्मन्येवात्मानं पश्येत" "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" "विज्ञाय प्रज्ञां कुर्वीत" इत्यादिश्रुतिभिर्ब्रह्मण ईक्ष्यत्वादीक्षणस्य च मानान्तरागोचरे ब्रह्मणि शब्देन विनानुपपत्तेः ब्रह्मणो वाच्यत्वसिद्धिः ; नच लक्षणया ब्रह्मावगम इति वाच्यम्, ब्रह्मणो मुख्यार्थसम्बन्धज्ञानाभावे लक्षणाया असम्भवेन शब्देन विना ब्रह्मणो मुख्यार्थसम्बन्धज्ञानासम्भवेन तत्रापि लक्षणायामनवस्थितेरिति राद्धान्तः । तद्ब्रह्मावाच्यं न भवति, ईक्षणविषयत्वादिति सूत्रार्थः । गौणश्चेन्नात्मशब्दात् । ईक्षणीयत्वेनोक्तस्सगुण एव, नतु निर्गुण इति चेन्न ; "आत्मन्येवात्मानं पश्ये" दिति ईक्षणीये आत्मशब्दश्रवणात्, तस्य च निर्गुण एव मुख्यत्वात् । आत्मशब्दोपि सगुणपर एवास्त्वित्यत्राह— तन्निष्ठस्य

मोक्षोपदेशात् । नचात्मशब्दो गौणपर, "यस्यानुवित्त प्रतिवुद्ध आत्मे" त्यात्मनिष्ठस्य पुरुषस्य मोक्षोपदेशात् । नहि गुणसम्बद्धात्म ज्ञानाद्गुणनिवृत्तिरूपा मुक्ति । पाद्मेच– "चेतनस्तु द्विधाप्रोक्तो जीव आत्मेतिच प्रभो । जीवा ब्रह्मादय प्रोक्ता आत्मैकस्तु जनार्दन । इतरेष्वात्मशब्दस्तु सोपचारो ऽभिधीयते । तस्यात्मनोनिर्गुणस्य ज्ञाना न्मोक्ष उदाहृत । सगुणास्त्वपरे प्रोक्ता तज्ज्ञानान्नैव मुच्यते । परोहि पुरुषो विष्णुस्तस्मान्मोक्षस्ततस्मृत ॥ " इति । हेयत्वावचनादप्या त्मशब्दो न गौणपर इत्याह – हेयत्वावचनाच्च । सगुणनिष्ठस्यापि परम्परया मोक्षो युक्त इति शङ्काप्यनेन निराक्रियते । 'तमेवक जानथा त्मानमि' ति सावधारणाहेयत्ववचनादिनि सूत्रार्थ । अहेयत्वञ्च मुमुक्षू पादेयत्वम् । "पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत" इति श्रुत्युक्त त्वादपि निर्गुणो वाच्य ' नचायमपि गौण स्वस्य स्वस्मिन्नप्यय वचनादित्याह स्वाप्ययात् । निर्गुणस्य हेयत्वावचनमसिद्धम्, "आत्मान विलापयती ' त्यात्मनो नाशित्वेन हेयत्ववचनादिति शङ्का प्यनेन निराक्रियते । स्वस्य स्वस्मिन्नप्ययवचनात । तस्यच "सदेवो बहुधा भूत्वा निर्गुण पुरुषोत्तम । एकीभूय पुनश्शेते निर्दोषो हरि रादिकृत् ॥" इत्याद्यैकात्म्येनावताररूपस्य मूलरूपाप्ययपरतया ब्रह्मण्यु पपत्ते । सगुणस्यतु "यत्प्रयन्त्यभिसंविशन्ती" त्यन्यत्र लयश्रवणेन तत्र तस्यानुपपत्ते । नचात्मान विलापयतीत्यत्र नाश उच्यते, किन्त्वैकीभाव । ननु शाखान्तरे सत्वादिगुणयुक्तेप्यात्मशब्दो मुख्यतयोच्यताम्, त ज्ज्ञानान्मोक्षादिश्चोच्यताम्, ततश्च नात्मशब्दादिना निर्गुणस्येक्षणमित्य त्राह गतिसामान्यात् । "सर्वे वेदा युक्तय सुप्रमाणा ब्राह्म ज्ञान परम स्वैकमेव । प्रकाशयन्ते नविरोध कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे" इति पैङ्गिश्रुत्यैव सर्ववेदोक्ताना ज्ञानैकरूप्येण गतिसामान्येन विरोधाभावस्य स्वयमेव प्रतिपादिततया नशाखान्तरेन्यथात्व युक्तमित्यर्थ । श्रुतत्वाच्च ।

"एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च" इति श्रुतत्वादपि निर्गुणो वाच्य इत्यर्थः। इति।

अन्येतु उक्तस्य ब्रह्मलक्षणस्य प्रधानेतिव्याप्तिवारकमिदं अधिकरणमित्याहुः।

इतरेतु लक्षणसामान्यस्य यावद्विशेषविश्रमसत्कल्पत्वात् निष्कृष्टं लक्ष्यस्वरूपं प्रदर्श्यते। ईक्षतेर्नाशब्दम्। अशब्दं- शब्दब्रह्मश्रीमहामात्रसहजविद्याशक्तिसमन्वयरहितं आदिरुद्राख्यमादिविष्ण्वाख्यञ्च ब्रह्म न जगज्जन्मादिकारणं उपास्यं जिज्ञास्यं वा, तयोरीक्षणानुपपत्तेरित्यर्थः। अथवा ईक्षते ना आशब्दमिति पदच्छेदः। आशब्दं — अन्तार्थाव्ययीभावः। अण्डपिण्डान्ताशेषकार्योपादानानां स्रष्टुः ईक्षतेरीक्षणसापेक्षत्वात्, तस्य चान्यत्रासम्भवात्, ना — अभिव्यक्तपुम्भावः श्रीमदादिपुरुषो भगवानादिब्रह्मैव ईक्षिता स्रष्टा जगदुपादानमुपास्यं जिज्ञास्यञ्चेत्यर्थः। ननु केवलस्य ब्रह्मणः ईक्षितृत्वायोगादावश्यकोपाधिपरिग्रहाद्वरमुपाधेरेव प्रकृतेरीक्षितृत्वादिरिति त्रिगुणात्मकाचेतनप्रधानजगत्कारणवादिनः साङ्ख्या मन्यन्ते, तत्राह- गौणश्चेन्नात्मशब्दात्। गौणोयम् - त्रिगुणात्मकप्रधानकर्तृक ईक्षापूर्वकसर्गादिरिति चेत्? न, आत्मशब्दात् - 'आत्मावा इदमेक एवाग्र आसी' दित्यादिष्वात्मन एव तच्छब्दात् - ईक्षादिकर्तृत्वोपस्थापनादिति।

तत्र प्रथमपक्षे पूर्वपक्षे व्युत्पत्तिग्रहासम्भवः किं अचले उत, शुद्धे? नाद्यः, यूपाहवनीयादिन्यायस्य पूर्वकाण्ड एव सिद्धत्वात्। द्वितीये सिद्धान्ते तन्न्यायप्रदर्शनासम्भवात्, यौगिकत्वप्रदर्शनासम्भवाच्च। वाक्येन लक्षणयोपस्थितिश्शुद्धस्येति ह्युच्यते। यौगिकत्वमपि विशिष्ट एव, चेतनाचेतननियन्तृत्वबृहत्त्वबृंहकत्वादेश्शुद्धे असम्भवात्। सिद्धान्ते

प्रकृतिवद्ब्रह्मणोपीक्षणमनुपपन्नम् । अविद्यापरिणामांगीकारेपि न तस्य घटादिशेष., सङ्कल्पस्यान्त करणवृत्तित्वस्य 'कामस्संकल्प' इत्यादि श्रुत्या त्वयाभ्युपगमात् । स्रष्टव्यालोचनमिति सङ्कल्पोनोच्यते. किन्तु ज्ञानमात्रमिति चेन्न, तयैव श्रुत्या तस्याप्यन्त कर - णवृत्तितायास्सिद्धत्वात् , 'बहुस्या' मित्यभिलापेन सङ्कल्प रूपताया दुस्त्यजत्वात् । तादृगवृत्तौ प्रतिबिंबनेपि स्रष्टव्यस्य तदानी- मसिद्ध्या चैतन्यविषयत्वासम्भवाच्च । योजनायामशब्दमिति प्रथमान्त- त्वेन धर्मिनिर्देशरूपताया ईक्षतेरिति पञ्चम्यन्तस्य निषेधे हेतूपस्था पकताया जन्मादिसूत्रेण बुद्धिस्थस्य जगत्कारणस्य निषेधप्रतियोगिताया श्च स्वरसतोवगम्यमानतया सम्पूर्णोपदेशरूपेस्मिन् सूत्रे प्रतिज्ञाभ्या हारेणापूर्णत्वकल्पन प्रथमान्तोपस्थापितस्य हेतुत्वकल्पन निषेधहेतुतया प्रतीयमानस्य पञ्चम्यन्तपदोपस्थापितस्यान्यत्र हेतुत्वकल्पन चास्वरसम् । तथा शब्दपदस्य सदादिशब्दमात्रपरतया सङ्कोचश्च । यदुच्यते प्राय पाठः पूर्वपक्षे साधकहेतुरिति, तन्न, ईक्षणश्रुतेस्ततोपि बलीयस्त्वात् । ननु पूर्वपक्षे प्रकृत्यर्थस्य मुख्यस्यासम्भव, प्रत्ययार्थस्सम्भवत्येव, कूलं पिपतिषतीत्यत्रेव कार्याव्यवहितव्यापाराश्रयत्वस्य सत्त्वात् , सिद्धान्तेतु प्रत्ययार्थस्य ईक्षणाश्रयत्वस्य ब्रह्मण्यसिद्धे, ततश्च प्रकृतित प्रत्ययस्य दुर्बलत्वेपीह प्रकृते प्रायपाठापादितदार्बल्यतया प्रत्यय एव बलीयान् , तस्मात्प्रायपाठानुसारात् प्रकृतेर्गौणत्वमेव युक्तमिति पूर्वपक्षहेतुरेव प्राय पाठ इति चेन्न ; वस्तुतो ब्रह्मण ईक्षणाश्रयत्वस्यैव प्रामाणिकतया प्रकृतिप्रत्यययोरुभयोरप्याञ्जस्यात् । परपक्षे प्रकृतिप्रत्यययोरुभयोरपि ब्रह्मण्य सम्भवात्पूर्वपक्षे प्रत्ययार्थसम्भवाच्च स एव पूर्वपक्षहेतु स्यात्. ननु प्रायपाठ । तस्मा 'दिदसदासीदि' ति सामानाधिकरण्यादिकमेव पूर्वपक्ष हेतु. । तदनुसारात् उपसंहारस्थेक्षणश्रुतिरन्यथा नेया । एव सति प्राय

पाठोप्यनुगृहीतो भवतीत्येतावदेव । नविलक्षणत्वादित्याद्यधिकरणवैष- म्यञ्च भाष्यादौ स्पष्टम् । द्वितीयसूत्रमप्यसङ्गतम्, गौणश्चेदिति शङ्काया आत्मशब्देनापरिहारात्, प्रकृतिप्रत्ययार्थयोस्तत्रासम्भवस्योक्त- त्वात् । नचात्मत्वं प्रधानाव्यावृत्तावेव हेतुरस्त्विति वाच्यम्, सूत्रा- स्वारस्यात्, नेति शङ्कितार्थनिषेधस्तत्र पञ्चम्यन्तार्थस्य हेतुत्वमपि हि प्रतीयते । शबलस्यात्मत्वासिद्धेः संकल्पस्य निर्विशेषगतत्वासिद्धेश्च, हेतुसाध्ययोरनन्वयाच्च । निरुपपदात्मशब्दस्य स्वरूपपरत्वं भावप्रधान- त्वञ्चास्वरसम् । अत एव तृतीयसूत्रमप्यसङ्गतम् । स्थूलारुन्धतीन्याय गमकशैलीविरहेण तच्छङ्काया अनुत्थाना च्चतुर्थसूत्रं व्यर्थम् । प्रतिज्ञा- विरोधादिति पञ्चमसूत्रं विरुद्धमेव, साङ्ख्यमतनिरासासामर्थ्यात्, स्वमत निरासाच्च; कारणविज्ञानेन कार्यविज्ञाततया दृष्टान्ते प्रतीतेर्दार्ष्टान्तिके कार्यकारणभावोपपादनाच्च कारणज्ञानेन कार्यज्ञान हि विवक्षितम् । प्रधानविज्ञानेन तत्कार्यसर्वज्ञानं सम्भवत्येव, जीवस्य साङ्ख्यमते प्रधान कार्यत्वाभावात् तदज्ञानेपि न दोषः । परमते ब्रह्मज्ञानात्कार्यज्ञाना सम्भवस्योपपादितत्वेन तन्मतनिरासकत्व सूत्रस्य स्पष्टम् । सिद्धान्ते तु 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी' ति जीवानुप्रवेश कथनेन जीवस्य नामरूपव्याकरणावगमाज्जीवस्यापि कार्यत्वमवगम्यते; अतस्सच्छब्देन प्रकृत्यभिधाने प्रतिज्ञाविरोधोपपादन युक्तमेव । षष्ठ- मप्यसङ्गतम्, ईश्वरस्यैव कारणत्वेन सच्छब्दार्थत्वाज्जीवस्यच ततो- भिन्नत्वात्सतस्स्वत्वेन व्यपदेशस्य जीवस्य तत्र लयोक्तेश्चासम्भवात् । पुरुषसत्त्वपदाना लक्षणागीकारे स एव दोष इति ।

द्वितीयपक्षे ज्ञानविषयतामात्रस्यैव सिद्धान्ते हेतुत्वादीक्षणपर्यन्त धावनमस्वरसम् । ईक्षतेरिति धातुनिर्देशेच न किञ्चित्प्रयोजनम् । सिद्धान्ते तत्प्रयोजनमुक्तमेव । अत पूर्वखण्डोनुपपन्न । तथैव

द्वितीयखण्डोऽपि । परेण ब्रह्मशब्दमित्युक्ते खलु नाशब्दमिति निषेध कार्य, सतु न तथा ब्रूते, स्ववचनव्याघातात् अनिष्टत्वाच्च, किंतु ब्रह्म न वाच्यमिति, अतो ऽशब्दमिति निर्देशोऽस्वरस । सिद्धान्तेतु तत्प्रधान शब्दैकप्रमाणकन्न भवति अनुमानगम्यत्वात्, ततश्च श्रुते रनुमानसिद्धार्थानुवादितया कथञ्चित्प्रामाण्यमेव, तस्मात् स्वतन्त्र प्रधानमेव कारणमिति परेणाभिधानात्तस्यैव सिद्धान्ते निषेध्यतया स्वतन्त्रप्रधानस्य धर्मितया निर्देशलाभाय अशब्दमिति निर्देश, शब्द बलात् खलु वेदान्तिभि पारतन्त्र्यमुच्यते, तस्याप्रमाणत्वात् कथ पार तन्त्र्यलाभ इति पूर्वपक्षयुक्तिद्योतनार्थमशब्दमिति निर्दिष्टम्, नत्वानु मानिकमिति । सम्भवति हि पूर्वपक्षिणो हेतुगर्भपक्षनिर्देश परिकल्प्य सिद्धान्तिना तथानिर्देशेन पूर्वपक्षयुक्तिसूचनम् । अथ स्यात् 'अशब्द मस्पर्शमि' ति श्रुते पूर्वपक्षमूलत्व द्योतयितुमयमित्रिवेश, परेण स्वाभि मतप्रमाणद्योतनार्थं श्रौतपदैरेव प्रतिज्ञा क्रियेतेति द्योतनसम्भवादिति, तन्न अशब्दमित्यन्याविध्यावृत्तये स्पर्शादिनिषेधवत् तद्गुणस्त्वनिषेध परत्वस्य स्पष्टतया तस्य पूर्वपक्षे प्रमाणतया शक्तिुमयोग्यत्वात् । द्वितीयसूत्रे कथ शङ्कोत्थानम्, मतव्याहतिभ्या तदसम्भवात् । नहि ब्रह्म ज्ञानविषयो नेति मायिना मतम्, वृत्तिविषयत्वाङ्गीकारात्, यदि परो निर्गुणस्य परकीयवाच्यताभिमतिविषयताजानाति, यदिवा न जानाति, उभयथापि व्याघात, ज्ञानविषयत्व जानतस्तदभावशङ्कानु त्थानात् अजानतो निर्गुणव्यावर्तनार्थ गौण इत्यवक्तव्यत्वात् । अजान तदशङ्काया एवानुदयश्च । प्रमाणमुखेन ध्वावाच्यत्वस्य पूर्वपक्षिणा समर्थितत्वाचेनार्पायमाणं का व्याहतैव । ज्ञानाविषयमित्युक्ति स्वेनापि व्याहता । ननु ईक्षत्वेनोक्त खलु सगुण इति शक्यते ईक्षण चा पराभावानवेर अतो न निर्गुणे ज्ञानगात्रविषयत्वनिषेध पूर्वपक्षिणोऽभि मत इति [illegible] निर्गुणस्येक्षणाभावेऽपि तस्या

वाच्यत्वश्रुतिजन्यज्ञानविषयत्वेनं वाच्यत्वस्यावर्जनीयत्वात्। अतएव तात्पर्यचन्द्रिकायां सिद्धान्तोपक्रमे न तावच्छुद्धस्यात्मनो ज्ञेयत्वमेव नेति युक्तमित्युक्तम्। उपरिच ईक्षतेरित्यनेन शब्दमात्रस्यासाधकतया ज्ञान कर्मत्वस्यैव विवक्षणीयत्वादित्युक्तम्। किञ्च गौणपदस्य वृत्तिविशेषविषय एव स्वारस्यात् पूर्वसूत्रे ईक्षतिनिर्देशेन गौणवृत्तिशंकाया अयोग्यत्वाच्चार्थान्तरपरत्वमस्वरसम्। गौण ईक्ष्य इति साध्यस्याध्याहर्तव्यत्वात् सोपि दोषः। सिद्धान्तेतु ईक्षतिरिति विपरिणामेनानुषङ्गः, सच प्रमाणोपन्यासोपरि गौणत्वशङ्कायाः करणात् क्षदित्यवगतः, तस्माच्चोद्यखण्डोनुपपन्नः। तथा परिहारखण्डोपि। उपन्यस्तात्मपदमुख्यत्वबोधक प्रमाणागोचरतायाः परेणाज्ञानाचदस्मिन् सूत्रे साध्यतया विवक्षितमिति चेत्? तथासति आत्मशब्दादित्यस्यैव साक्षाद्वाच्यतासाधकत्वात् एतदुपजीविपूर्वसूत्रं व्यर्थम्। नचैवमात्मत्वहेतोस्साक्षादेव प्रधाननिरासकत्वात् तदुपजीविपूर्वसूत्रं सिद्धान्ते व्यर्थमिति वाच्यम्, आत्मत्वस्य प्रधाननिरासकताया इहाविवक्षितत्वात्; गौणत्वे शंकिते गौणत्वं किमर्थं वाच्यम्, ईक्षणयोग्यचेतनोपस्थापकात्मपदश्रवणेन उभयानुमह मेव न्याय्य इति एतावत एवेह विवक्षितत्वात्। त्वयातु द्वितीयसूत्रे आत्मपदवाच्यत्वमेव साध्यतयोच्यत इति पूर्ववैयर्थ्यं तव दुष्परिहरमेव। सिद्धान्ते ईक्षणवदात्मत्वस्य साक्षात्साधनतया विवक्षासम्भवेपि गौणेक्षणसाहचर्यरूपहेतुना ईक्षणे गौणत्वशङ्काया आत्मशब्देनैव परिहर्तव्यत्वात् एवं शैली परिगृहीता। तृतीयसूत्रमप्यनुपपन्नम्, निर्गुणस्य परकीयवाच्यताभिमतिविषयत्वज्ञानाज्ञानयोर्व्याघातेन आत्मशब्दो गौणपरोस्त्विति शङ्काया एवानुत्थानेन तन्निराकरणार्थतया सूत्रावतरणस्यानांजस्यात्। आत्मशब्दो न गौणपर इत्यध्याहाराच्च। अध्याहारादेव चतुर्थसूत्रमप्यसङ्गतम्, नञ्व्यत्यासेनोपादेयपरत्वस्य सावधारणोपदेश परत्वस्य च क्लिष्टत्वाच्च। किञ्च पूर्वसूत्रे गुणिज्ञानात् गुणबन्धनिवृत्त्य-

सम्भवरूपन्यायस्य विवक्षितत्वेन कथमेतदुपरि मोक्षसाधनज्ञानविषयत्व गुणिन एवास्तिवति शङ्का, कथञ्च तदुत्तरत्वेनैतत्सूत्रावतार । ननु सगुणनिष्ठस्यापि परम्परया मोक्षो युक्त इति शङ्कानिरासकं सूत्रमिति ह्युक्तम्, अतो न दोष इति चेन्न, — *पूर्वपक्षिणो निर्गुणस्य ज्ञेयत्वज्ञाना* भावेन निर्गुणज्ञानद्वारकत्वासिद्ध्या पारम्पर्यज्ञानासिद्धे । प्रतिज्ञाविरोधादिति पञ्चमसूत्रमनन्वितम् । अतएव तैस्तत्परित्याग कृत । स्वाप्ययादिति षष्ठसूत्रमप्यसङ्गतम्, पूर्णत्वश्रुत्युक्तत्वान्निर्गुणो वाच्य इति वहि प्रतिज्ञाया अनाजस्यात्, उक्तरीत्या शङ्काया अनुत्थानात्, पूर्णत्वापेक्षया स्वाप्ययस्य विशेषाभावेन तेन परिहारासम्भवात्, निर्गुणस्य स्वाप्यय प्रमाणबोध्यत्वस्यैव साधनीयतया तेनैव वाच्यत्वसिद्धेर्वहि प्रतिज्ञा वैयर्थ्याच्च । गतिसामान्यादिति सप्तमसूत्रस्य गुणिज्ञानाद्गुणसम्बन्ध निवृत्तिरूपमोक्षासम्भवस्योक्तत्वेन शाखान्तरे जीवज्ञानान्मोक्ष उच्यता मिति शङ्काया असम्भवाच्छाखान्तरे जीवस्य स्वाप्ययोक्तावपि विरोधा भावेन परिहारासम्भवाच्च तत्परिहारार्थत्वमसङ्गतम् । तस्मात्स्वाप्यय *पर्यन्तसूत्रैस्सद्विद्यार्थानुक्रमणस्य प्रतीयमानतया चिन्तायास्सद्विद्याविषयत्वस्य स्वारस्यात्तथैवाङ्गीकर्तुं युक्तम् । वाक्यान्तराणान्तु तन्मुखेन* विषयतेति ।

तृतीयपक्षे अतिव्याप्तिनिराकरणार्थमिदमधिकरणमित्युक्तम्, तदनुपपन्नम् कारणत्वमात्रस्य उपादानत्वमात्रस्य वा लक्षणत्वविवक्षायान्त योस्सिद्धान्तेप्यङ्गीकारान्निराकरणासम्भवेनातिव्याप्तेरनुद्धारात् । कर्तृत्वस्य तत्त्वे सत्युपादानत्वस्य वा लक्षणत्वविवक्षाया नातिव्याप्तिशङ्कावकाश । कर्तृत्वबोधकश्रुतीना प्रकृतिविषये अन्यार्थाङ्गीकारेण योजनायामपि कर्तृ त्वस्य नातिव्याप्तिगन्धोपि । यच्च तत्रैवोक्त सद्विद्यैवास्याधिकरणस्य विषय, नतु सर्वाणि कारणवाक्यानि, आत्मपुरुषादिपदयुक्तकारणवाक्याना सत्तासामान्यवाचिसत्पदयुक्तायामसद्विद्याया इव पूर्वपक्षे प्रधानपरत्व

शेकाद्देत्वभावात्, नच सद्विद्यायाः प्रधानपरत्वमेव तत्कल्पकं, कल्पभेदेन प्रधानपरमेश्वरयोरुभयोरपि जगत्कारणत्वसम्भवेन कारणपरमात्मशब्दादिश्रुत्यन्यथाभावकल्पनायोगादिति, — तन्न, सद्विद्यामात्रस्य विषयत्वे पूर्वपक्षानुत्थानात्। यद्यात्मादिवाक्यैश्चेतनकारणत्वमेव निर्णितम्, तदा तत्राचेतनस्योपादानत्वाश्रवणात् निर्विकारस्य चेतनस्य स्वरूपपरिणामासम्भवेनाचिद्द्वारकपरिणामस्य वाच्यत्वा 'दात्मावाऽद्' मित्यात्मशब्दसमानाधिकृतस्याचेतनवाचिन इदंशब्दस्य, चेतनपर्यन्ततताया वाच्यत्वाच्च सदेवेदमिति सच्छब्दस्यापि भगवत्पर्यन्ततताया सिद्धत्वादिति ।

इतरपक्षे विवक्षितलक्ष्याविशेषनिर्धारणमनुपपन्नम्, विपरीतनिर्धारकत्वात्, जगत्कारणसङ्कल्पस्य भगवत्येव श्रुतिषु प्रसिद्धेः । किञ्च यदि कारणत्वं न व्यक्तिविशेषनिर्धारकं तदा संकल्पस्य कथन्तत्स्यात् ?

एतेनाऽशब्दमिति स्वाभिमतार्थोपस्थितिरपि निरस्ता, ईक्षणस्य देवतान्तरव्यावर्तकत्वाभावात् । अचिद्व्यावर्तकत्वमेव हि स्वरसम् । द्वितीययोजनायामपि भगवानेव निर्धार्येत । इतरसूत्रे गौण इति पुंलिङ्गनिर्देशोनुपपन्नः, जन्मादीत्यस्यैवानुवर्तनीयत्वात् । अन्यथाऽध्याहारप्रसङ्गात् ।

इतीक्षत्यधिकरणम् ॥ ५ ॥

---

अथानन्दमयाधिकरणम् ।

---

१- आनन्दमयोऽभ्यासात् ॥ १ - १ - १३ ॥

'यतोवे' त्यादिकारणत्वानुवादिभृगुवल्लीस्थलक्षणवाक्यनिरूप्य, तद्विधायकसदादिवाक्यानि निरूप्य, स्वरूपप्रमाणलक्षणप्रमाणाभ्यां प्रतिपन्नं कारणत्वं 'सयश्चायंपुरुषे यश्चासावादित्ये' इति वाक्येन भगवति

पर्यवसाययितु भृगुवल्ल्या पूर्वप्रकरणेन 'सयश्चायपुरुषे' इत्येनऽर्थं प्रतिपादनेन उक्षणनाचितो व्यावृत्त लक्षण जीवाद्यनर्तयति । 'सय श्चायपुरुष' इति वाक्य हि 'यो वेद निहित गुहायामि' ति हृदया न्तर्वर्तितया पुरुषान्तरादन्नपरम्परापर्यवसानभूमितयाच प्रतिपन्नस्या स्यानन्दमयस्यादित्यान्तर्वर्तित्वमुपदिशति । पुरुषशब्द 'सवाएष पुरुषोऽन्नरसमय' इति प्रकृतशरीरपर, आनन्दमयस्यास्मिन्प्रकरणे प्रकृत त्वादयमिति निर्देश । 'सयश्चायपुरुष' इति कथ प्रसिद्धवन्निर्देश इत्यपेक्षाया आनन्दवल्ल्या पुरुषान्तर्वर्तितया आनन्दमय प्रतिपन्न इति व्यवहितप्रकरणस्थत्व सूचयता स इत्यनेन स्फोरयति । आदित्या न्तर्वर्ती भगवानिति कुतोऽवगम्यत इत्यपेक्षा चेत्' तदा अन्तरादित्य विद्यानिरूपयिष्यामीति भगवतो वेदाचार्यस्य हृदयम । यद्वा कारणत्व भगवति पर्यवसाययितु भृगुवल्ल्या अनूद्यमानकारणत्वमापिकामनन्त भयपदभूषिता तापनीयप्रसिद्धाभयहेतुत्वरूपभगवल्लक्षणचिह्निता सन्निहिता मानन्दवल्लीनिरूपयति । अनन्तपदञ्च द्वितीयान्तत्वान्न नपुसकान्तत्व शकार्हम्, वेदन प्रति कर्मार्पणस्यावश्यकत्वात् । नच विवरणरूपत्वा त्प्रथमान्तता शङ्कनीया, 'विन्तरमाप्नोती' ति पदविवरणेषु ज्ञेयपदेषु प्रथमान्तताया अदर्शनात् । आनन्दवल्ल्या 'ब्रह्मविदाप्नोतिपरमि' ति ब्रह्मज्ञानात्परप्राप्तिमुक्त्वा सत्यज्ञानादिमन्त्रेण ज्ञेयज्ञानप्राप्तिप्राप्यस्वरूपाणि विवृत्य, 'तस्माद्वाएतस्मादि' त्यादिना 'अन्नात्पुरुष' इत्यन्तेन परमित्युक्त परत्व विपश्चितेति मन्त्रेण विवृत पुनर्विवृत्य तद्ब्रह्म विविच्य ज्ञापयितु पुनरपि प्राप्यतोपयोगिपरत्वमुपपादयितु ज्ञानप्राप्ति प्रकारमुपपादयितुञ्च 'सवाएष पुरुषोऽन्नरसमय' इत्यारभ्य उत्तरग्रन्थ सन्दर्भ प्रवृत्त । तत्र स्थूलारुन्धतीन्यायेन ब्रह्म ज्ञापयितु पञ्चकोशा वतार इत्येक पक्ष । अस्मिन्पक्षे 'तस्यैषएव' ति वाक्यमुत्तरस्य पूर्व प्रति शारीरत्वप्रतिपादनपरम् । अन्तरात्मत्वेनेव शारीरात्मत्वेनापि

लिलक्षयिषितं ब्रह्म । वाक्यस्यायमर्थः — पूर्वस्यान्नमयस्यान्तरात्मतया सम्बन्धी यः एष एव तस्यान्नमयस्य शारीर आत्मापीति । परेतु — 'योयं प्राणमय एष तस्य पूर्वस्य शारीर आत्मेति' योजयन्ति । तत्र यत्पदवैयर्थ्यम्, अयमिति पदाध्याहारः, तस्य पूर्वस्येति भिन्नवाक्यस्थयोः पदयोरन्वय इत्यस्वारस्यं स्पष्टम् । अस्मिन्पक्षे पूर्वं सत्तु तस्यैव शारीरत्वं वाच्यम्, नतु सर्वत्र एकस्य शारीरत्वम्, जगत्कारणत्वेन प्रतिपादित आत्मा क इत्यपेक्षायां स्थूलारुन्धतीन्यायेन तत्प्रतिपादनं हि चतुर्थकोशपर्यन्तेषु पूर्वेष्वेतदारोपेण पञ्चमकोशे स्वरूपप्रदर्शन एव स्वरस भवति, नतु प्रतिपर्यायमात्मनस्तदतिरेकबुद्धौ, नोह तत्र तत्र तदारोपेण लिलिक्षयिषया प्रवृत्ते वाक्ये मध्ये उत्तरोपदेशादन्येनारोपविच्छेदो युक्तिमान् । 'तस्माद्वा एतस्मादात्मन' इत्यत्रात्मशब्दनिर्दिष्टो जीव इति आत्मशब्दप्रसिद्धिनिबन्धनभ्रमवारणाय जीवादन्यत्वमुपदेष्टुं पञ्चकोशावतार इत्यपर पक्षः । तत्र द्वितीयादिषिकं दृष्टान्तार्थं,– यथान्नमयात्प्राणमयोन्य. यथाच तस्मान्मनोमयः यथावा तस्माद्विज्ञानमयः एवं विज्ञानमयादानन्दमयोन्य इति । अस्मिन्पक्षे 'तस्यैषएवे' ति सर्वत्रैकस्य शारीरत्व प्रतिपाद्यते । वाक्यार्थस्तु - अन्नमयस्य यश्शारीरस्स एव प्राणमयस्येति । कथमन्नमये शारीर लाभः, तत्पर्याये तथोपदेशादर्शनात्? ननु 'सवा एष पुरुषोन्नरसमय' इति तच्छब्देन आत्मा परामृश्यते, तत्सामानाधिकरण्य तच्छरीरत्वादेव वाच्यमिति तेन वाक्येनान्नमये शारीरलाभ इति चेन्न; — स इत्यव्यवहितस्य सृज्यस्य परामर्शादेष इति प्रत्यक्षदृष्टस्य निदर्श. । तस्माच्छारीरलाभ. कथमितिचेत्? उच्यते, 'आत्मनआकाश' इत्यात्मसंकीर्तनात् 'पुरुष' इति शरीरनिर्देशाच्च परस्पराकाङ्क्षाबलादुभयसम्बन्धावगम इति । आनन्दमये 'तस्यैष' इति वाक्यमनन्यात्मत्वपरम् । स्थूलारुन्धतीन्यायपक्षे 'अन्योन्तरआत्मे' त्यन्तरात्मसशब्दनानि स्वरसानि,

अन्तरात्मतयेव प्रतिपिपादयिषिततया तत्तच्छब्दनसाफल्यात् । तत्र शारीरत्वस्य रूपणार्थत्वे आनन्दमये तद्वैकन्य पर्यायान्तरस्थत्वञ्चा स्वरसम्। अन्तरात्मत्वेनेव शारीरत्वेनापि निरूपयिषायान्नैतद्दोषद्वय लगति। द्वितीयपक्षे आनन्दमये 'तस्यैप' इति वाक्यस्यानन्यात्मपरत्वेपि पर्यायान्तरेष्विमानि वाक्यानि स्वरसानि ।

तत्र 'तस्माद्वा एतस्माद्विज्ञानमयात अन्योन्तर आत्मा नन्दमय' इत्यत्र सन्देह किमानन्दमयो जीव, उत परमात्मेति ' 'तस्यैप एव शारीर आत्मे' ति आनन्दमयस्य शारीरत्वश्रवणात् स जीव एव, ब्रह्मादिष्वन्यतमे तदन्यास्मिन्वा क्वचिदुपचितपुण्ये जीवे निरुक्तेक्षणात्मशब्द तन्निष्ठमोक्षोपदेशहेयत्वावचनप्रतिज्ञाविरोधाभावस्वाप्ययगतिसामान्यश्रुतत्वा नामुपपत्ते, बहुस्यामिति प्रकृतेदशरीरतया परिग्रहादुपपद्यते, अथवा बहुस्यामिति भूयान् स्यामित्यर्थ, प्रजायेयेति जनयेयेत्यर्थ, अस्मिन्पक्षे तत्तेज ऐक्षतेत्यत्र तेजश्शब्द कर्तृलक्षक, प्रकृतिवियुक्तस्वस्व रूपनिष्ठस्य मोक्ष उपपद्यते, कारणज्ञानेन कार्यज्ञानस्य विवक्षितत्वात्, तस्य चेह सम्भवात्, जीवान्तरस्य तदकार्यस्याज्ञानेपि नदोष, प्राधान्यात् तज्ज्ञानेन सर्वेषा ज्ञातप्रायत्वे वा प्रतिज्ञायास्तात्पर्यम् । एव कल्पभेदेन पुरपभेद इति पूर्व पक्ष ।

तत्र राद्धान्त आनन्दमयोभ्यासात् इति ।

आनन्दमय इति धर्मिणन्निर्दिशति, नेतरोनुपपत्तेरिति साध्यनिर्देश मन्यार्थ वक्ष्यामि, तदनेन सम्बन्ध स्यामिति प्रधानस्यारुविमकरवम्, तेनेतरइति जीवमवगमयिष्यामि, आनन्दवल्ल्या 'सएकोमानुपआनन्द' इत्यारभ्य 'सएको ब्रह्मण आनन्द' इत्येतावत्पर्यतेन कृत इदानींमयोग व्यवच्छेददशायामनिर्णीतचिदचिद्विलक्षणार्थकब्रह्मशब्दाभ्यासात् भूयस्तदा

नन्दमयपदोपस्थापिततया मयडर्थोपस्थापकतयाच कृतशीघ्रोपस्थितिक-मानन्दशब्दाभ्यासं सद्वारकहेतुमभ्यासपदेन बोधयिष्यामीति भगवान् सूत्रकारो मन्यते । अभ्यासग्रहणेनापरिच्छेदे वाक्यस्य तात्पर्यातिरेकं व्यञ्जयति । जीवायोग्यमानन्दयोगं द्वारहेतुं मन्यते । तदयमर्थः — पर्यवसित :— आनन्दमयो जीवादन्यः, आनन्दपदाभ्यासाचिह्नितवाक्य-प्रतिपन्ननिरतिशयानन्दयोगादिति । शारीरत्वं जगच्छरीरत्वादुपपन्नम् ।

## २ - विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १ - १ - १४

'नित्यं वृद्धशरादिभ्य' इत्यत्र भाषायामित्यनुवृत्तावप्यारम्भादेव नित्यत्वे सिद्धेपि नित्यग्रहणं छन्दसि विकल्पार्थमिति वेदाचार्यो मन्यते ।। विकारार्थोयम्मयडानन्दमय इति; नहि सम्भवति स्वार्थिक इति, वैय्यर्थ्यात्; नापि प्राचुर्यार्थः, जीवे वैपरीत्यदर्शनात्; अल्पदुःखसम्बन्धपरतया जीवत्व-प्रसङ्गेन जीवातिरिक्तेप्यसम्भवात् ; तस्मादुपक्रमानुसाराद्विकारशब्द एवायम् ; सच जीवातिरेके न सम्भवति, तस्य विकारत्वानङ्गीकारात् , जीवेस्वानन्द विशिष्टरूपस्य कादाचित्कस्यानन्दाधीनतया कथञ्चिद्विकारार्थो युज्यते ; जीवस्य स्वत आनन्दरूपस्य स्वतस्संसारित्वावस्थावा तद्विकार : ; अत आनन्द मयो नेतर इति न, मयडर्थविकारानन्वय दिति शङ्कार्थः । विकारार्थत्वस्य जीवेतरयोरसम्भवात् अन्नरसप्राणमनोविज्ञानवृत्तिप्राचुर्याणां पूर्वमयडर्थत्वात् प्राचुर्यस्य धर्म्यन्तरे सजातीयाल्पतया ऽप्युपपत्तेस्तस्यैवानन्दवल्ल्यां प्रतिपादनाच्च प्राचुर्यशब्दएवायम्मयद् ; पूर्वत्र प्राचुर्यं समानाधिकरण विजातीयाल्पत्वमपेक्ष्य, शरीर इव पुरुषेन्नरसांशादितरांशोल्पः, प्राणे प्राणवृत्तेरपादानादिवृत्तिरल्पा, मनस्यपि जाग्रत्स्वप्नावस्थापेक्षया सुषुप्त्य-वस्थाया अल्पत्वान्मनोवृत्त्यभावोल्पः , तत्कालाल्पत्वेन तदल्पता, जीवे ज्ञानवृत्त्यपेक्षया सुखादिवृत्तिरल्पा, एवं सर्वत्र समानाधिकरणाल्पसिद्धावपि आनन्दमये व्यधिकरणस्य जीवानन्दस्यामनुष्यानन्दादाचतुर्मुखानन्दा-

दल्पत्वस्य प्रकरण एव मयडर्थनिरूपणार्थमेव प्रतिपादनान्मयट् प्राचुर्यार्थ एव ।

३ तद्धेतुव्यपदेशाच्च ॥ १-१ १५ ॥

जीवानन्दहेतुत्वेनायमानन्दमय उपदिश्यते 'कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाती' ति । आनन्दयति व्यादानन्दयितान्य । 'यदेष आकाश आनन्द' इति आनन्दमय परामृश्यते । 'सोकामयते' ति प्रकृतमानन्दमयमुक्त्वा 'असद्वा इदमि' ति श्लोकेनापि तमेवोक्त्वा 'रसोवैस' इति पुनन्तन्यत्र परामर्शात् सएष इति स एव हि परामृश्यते ।

४ मान्त्रवर्णिकमेव च गीयते ॥ १ १ १६ ॥

"ब्रह्मविदाप्नो" ति परमिति जीवप्राप्यतया प्रतिपन्न ब्रह्म 'सत्य ज्ञान मनन्त ब्रह्मे' ति मन्त्रवर्णेनोच्यते, तदेव तद्विवरणार्थप्रवृत्ते पञ्चकोशवाक्ये आनन्दमयशब्देनोच्यते, अत प्राप्यप्राप्तृभेदस्यावश्यकत्वादानन्दमयो नेतर ।

जीवस्यैव शुद्ध स्वरूप मान्त्रयतयोच्यते, इत्यत्राह —

५ नेतरोऽनुपपत्ते ॥ १ १ १७ ॥

इतरो जीवो मुक्तावस्थोपि न मान्त्रवर्णिक , विपश्चित्वस्य जीवे अनुपपत्ते , विविध पश्यच्चित्त्व ह विपश्चित्त्वम् । इदमेव विपश्चित्त्व 'सोकामयते' ति विवरिष्यते, 'ब्रह्मणा विपश्चिते' त्युक्तब्रह्म शब्दार्थविवरणानन्तर विपश्चिच्छब्दार्थविवरणस्योचितत्वात् ।

६ भेदव्यपदेशाच्च ॥ १ १ १८ ॥

'तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमय' इति जीवाद्भेदव्यपदेशाच्चायमानन्दमयो नेतर ।

७ कामाच्च नानुमानापेक्षा । ॥ १ १ १९ ॥

अनुमीयत इत्यनुमान प्रधानम् तच्चानुमानपद तत्कार्यशरीरपरम् , कामशब्दस्सर्गाय्कल्पनसङ्कल्पपर , हेतुनिर्देशोऽभ्यासाभ्या कार्यं गम्यते,

तेनावमर्श - कामादेव विचित्रजगत्सृष्टिः श्रूयते, तस्यच न शरीरापेक्षा सम्भवति, तदानीं शरीरसर्गासिद्धे, तस्मादीदृशसर्गकर्ता आनन्दमयो नेतर इति ।

८ अस्मिन्नस्य च तद्योगं शास्ति ॥ १ - १ - २० ॥

अस्मिन्निति विषयसप्तमी। अस्मिन्नानन्दमये अस्य जीवस्य, तद्योगम् - आनन्दयोगम्, शास्ति शास्त्रं "रसोवैसः रस ह्येवायं लब्ध्वानन्दी भवती' ति, रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीय आनन्दी भवतीति उच्यमाने यल्लाभाद् आनन्दी भवति स स एवेत्यनुन्मत्तः को ब्रवीतीति।

ननु साधकस्याभ्यासादित्युपक्रान्तत्वात् कृत्स्नसाधकोपन्यासानन्तरं बाधकपरिहारो युक्तः, तत्कथं प्रथमसूत्रानन्तर्यं विकारशब्देति चेत् ? प्रथमसूत्रेऽपराद्धानन्तर्यमिति ब्रूमः, प्रथमसूत्रे हि मयडर्थे प्राचुर्यमेव हेतुतया विवक्षितम्, एवमानन्दमय परमात्मा, 'तेये शतमानन्दा" "स एकः आनन्द" इत्यभ्यासाधीननिरतिशयत्वाधिकरणानन्दयोगस्य मयटा प्रतिपादनादित्यर्थः । अत्र हेत्वसिद्धिशङ्कापरिहारार्थं द्वितीयसूत्रम्। तत्र 'विकारशब्दान्नेतिचेदि' त्येतत् पूर्वपक्षसाधकपरं हेत्वसिद्धिपरं च मन्तव्यम् ।

परेतु - किमिह प्रियमोदादिरूपकल्पितशिरःपक्षाद्यवयवयुक्ततया उपास्य आनन्दमयो जीवः प्राधान्येन प्रतिपाद्य, ब्रह्मतु पुच्छरूपतदवयवतया निर्दिश्यते ; उत शुद्धं ब्रह्मैव पुच्छशब्देनानन्दमयस्याप्याधारतया स्वप्राधान्येन प्रतिपाद्यते, आनन्दमयस्त्वन्नमयादिवत्तत्प्रतिपत्त्युपायतामात्रेण निरूप्यते' इति संशयः । तत्र पुच्छशब्दमुख्यत्वानुरोधात् ब्रह्मणोवयवत्वमिति पूर्वपक्षे राद्धान्तः — आनन्दमयोभ्यासादि ति ।

आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म स्वप्राधान्येन वाक्यप्रतिपाद्यम्, 'असन्नेव स भवती' ति निगमनश्लोकस्य ब्रह्मशब्दाभ्यासविषयत्वात् । ननु- असिद्धोयं हेतुः, आनन्दमय एव निगमनश्लोकविषयोऽस्त्विति शङ्काया-

धारत्वेन ब्रह्मणि च प्रतिपादनीये तदुभयानुग्रहलाभाय 'ब्रह्म पुच्छं प्रतिष्ठे' त्याह श्रुतिः, नावयवविवक्षयेति । नन्ववयवविवक्षाभावे कथमवयववाचि पुच्छपदप्रायपाठानुग्रह इति चेन्न;-तथापि पुच्छपदमात्रप्रायपाठानुग्रहलाभात् । बृहदारण्यके पञ्चाग्निविद्यायां "असौ वा व लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमः" इत्यादिषु पञ्चसु पर्यायेषु 'अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूम' इत्यादिषष्ठपर्याये सांपातिकाग्नि समिद्धूमादिविषयत्वेन मुख्याग्निसमिद्धूमादिविषयत्वेनच भेदे सत्यपि अग्नि समिद्धूमादिशब्दप्रयोगैकरूप्यवदिहापि पुच्छपदप्रयोगैकरूप्यस्यावैकल्यात् । ननु तथाप्यानर्थक्यमपरिहृतमेव, प्रतिष्ठापदेनैवाधारत्वलाभात्; ननु यथा कान्तिमान्मुखचन्द्र इत्यत्र स्वशब्देनैव कान्तिमत्त्वे लब्धेपि मुखे गौणं चन्द्रपदमपि दृश्यते तथेह प्रतिष्ठापदेनाधारत्वे लब्धेपि तल्लम्भकः पुच्छशब्दोऽपि स्यादिति चेन्न,— वैषम्यात्, तत्रहि चन्द्रस्य यावती कान्ति तावती मुखे स्तुत्यर्थं प्रतिपिपादयिषिता, नच तावती कान्ति मच्छब्देन लभ्यते, तस्य मानान्तरसिद्धमुखगताल्पकान्तिमात्रविषयत्वेन चारितार्थ्यात्, अतश्चन्द्रतुल्यकान्तिमत्त्वलाभाय चन्द्रपदमुपयुक्तम्, इहतु ब्रह्मणि प्रतिष्ठात्वसङ्कोचकमानान्तराभावात्तस्य निरपेक्षसर्वप्रतिष्ठात्व प्रतिपादकश्रुत्यन्तरानुरोधाच्च निरतिशयमाधारत्वं प्रतिष्ठापदेन लभ्यत इति किमत्र पुच्छपदेन करिष्यते, प्रत्युत पुच्छतुल्याधारत्वलक्षणायां पुच्छस्याधारत्वमाधारान्तरसापेक्षं सातिशयमिति ब्रह्मणस्तथाभूतमाधारत्वं लक्षयत्पुच्छपदं अनिष्टार्थमेव स्यादितिचेत्' उच्यते, आधारत्वसामान्यमेव पुच्छवद्ब्रह्मनिरोपिततया तेन लक्षणीयम्, श्रोतृबुद्ध्यवतरणाय- पक्षिणां पुच्छमाधार इति दृष्टम् एव पक्षितया रूपितस्यानन्दमयस्य ब्रह्म पुच्छवदाधार इत्युक्ते दृष्टान्तमुखेन सम्प्रतिपत्तिर्भवति, ब्रह्मणि क्रमेण श्रोतृबुद्ध्यवतरणाय हि श्रुत्या अन्नमयादिक्रम आश्रित, अत्रानन्दमयं

मप्येतदेवोत्तरम् । आनन्दमयो न निगमनश्लोकप्रतिपाद्यः, तत्र ब्रह्मशब्दाभ्यासदर्शनात्, अभ्यस्यमानं ब्रह्मशब्दमत्यानन्दमयस्य मुख्यार्थलाभावादेकं पुच्छपदमनुरुध्यानेकस्य ब्रह्मशब्दस्यानन्दमये जघन्यवृत्तिकल्पनानुपपत्तेः ; एकत्राधादनेकत्राधन्यान्याय्यत्वेन उपक्रमादभ्यप्रबलत्वात् । सूत्रस्य सिद्धान्तसाधकत्वेन योजनायामानन्दमयपदेन आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म लक्षणीयम्, सिद्धान्तसाधकहेत्वसिद्धिनिरासकत्वयोजनायामीक्षतिसूत्रान्नञमनुवर्त्य निषेध्याध्याहारेण साध्यं पूरणीयम् । ब्रह्म पुच्छमभ्यासादित्यार्जवेन सूत्रे कर्तव्ये आनन्दमयोऽभ्यासादिति सूत्रकरणस्यैतत्प्रयोजनम्— यदीक्षतिसूत्रान्नञनुवर्तनेन तद्वन्निषेध्याध्याहारेण चानन्दमयो न निगमनश्लोकप्रतिपाद्य इति हेत्वसिद्धिशङ्कानिरासकहेतुसाध्यमपि लभ्यत इति । प्रयोजनान्तरञ्च व्यवहितानन्तरसूत्रे दर्शयिष्यामः । स्यादेतत्, पुच्छशब्दस्याभ्यस्यमानब्रह्मशब्दमुख्यतानुरोधेन मुख्यार्थत्यागे तस्य प्रतिष्ठापदेनैवाधारत्वलाभेनाधारलक्षणाया अप्यनुपपन्नत्वेनानर्थक्यमेव प्राप्नुयात्, ततश्चानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेनाभ्यस्तब्रह्मशब्दादपि पुच्छशब्द एव बलीयानित्याशयवतीं शङ्कामनुभाष्य निराकरोति—" विकारशब्दान्नेति चेन्न प्राचुर्यात् ।

विकारपदेनावयवो लक्ष्यते, तद्वाची पुच्छशब्दो विकारशब्द, स एव विकारो विगतकार्यः अनर्थकशब्द, 'अकर्तरिच कारके संज्ञायामि' ति कर्मणिघञन्तः कारशब्द कार्यवाची, एवमर्थान्तरस्यापि गर्भीकरणायावयवशब्दादिति वक्तव्ये विकारशब्दादित्युक्तम्, तथाच पुच्छावयववाचिनस्तदर्थपरित्यागे लक्षणीयार्थाभावेन प्रसक्तानर्थक्यात् पुच्छशब्दाद्धेतोर्न ब्रह्म प्राधान्येन प्रतिपाद्यमिति चेदिति शङ्कार्थः । प्राचुर्यादिति तन्निराकरणाशयमर्थ - प्राचुर्यात् - अवयवप्रायवचनात्, पुच्छशब्दोपपत्तेरिति । इदमुक्तं भवति - अन्नमयादीनां शिरआदिषु पुच्छान्तेषु अवयवेषूक्तेष्वप्यानन्दमयस्यापि शिरःपक्षाद्यवयवान्तरोक्त्यनन्तरं प्रायपाठानुसारेण पुच्छपदेन कस्मिंश्चिदर्थे निर्देष्टव्ये आनन्दमयं प्रत्या-

धारत्वेन ब्रह्मणि च प्रतिपादनीये तदुभयानुग्रहलाभाय 'ब्रह्म पुच्छं प्रतिष्ठे' त्याह श्रुति, नावयवाविवक्षयेति । नन्ववयवविवक्षाभावे कथमवयववाचि पुच्छपदप्रायपाठानुग्रह इति चेन्न, तथापि पुच्छपदमात्रप्रायपाठानुग्रहलाभात्। बृहदारण्यके पञ्चाग्निविद्यायां "असौ वा व लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमा" इत्यादिषु पञ्चसु पर्यायेषु 'अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूम' इत्यादिषष्ठपर्याये सांपातिकाग्नि समिद्धूमादिविषयत्वेन मुख्याग्निसमिद्धूमादिविषयत्वेनच भेदे सत्यपि अग्नि समिद्धूमादिशब्दप्रयोगैकरूप्यवदिहापि पुच्छपदप्रयोगैकरूप्यस्यावैकल्यात्। ननु तथाप्यानर्थक्यमपरिहृतमेव, प्रतिष्ठापदेनैवाधारत्वलाभात्; ननु यथा कान्तिमान्मुखचन्द्र इत्यत्र स्वशब्देनैव कान्तिमत्त्वे लब्धेपि मुखे गौणं चन्द्रपदमपि दृश्यते तथेह प्रतिष्ठापदेनाधारत्वे लब्धेपि तल्लम्भकः पुच्छशब्दोपि स्यादिति चेन्न,— वैषम्यात्, तत्रहि चन्द्रस्य यावती कान्ति, तावती मुखे स्तुत्यर्थं प्रतिपिपादयिषिता, नच तावती कान्ति मच्छब्देन लभ्यते, तस्य मानान्तरसिद्धमुखगताल्पकान्तिमात्रविषयत्वेन चारितार्थ्यात्, अतश्चन्द्रतुल्यकान्तिमत्त्वलाभाय चन्द्रपदमुपयुक्तम्, इहतु ब्रह्मणि प्रतिष्ठात्वसङ्कोचकमानान्तराभावात्तस्य निरपेक्षसर्वप्रतिष्ठात्व प्रतिपादकश्रुत्यन्तरानुरोधाच्च निरतिशयमाधारत्व प्रतिष्ठापदेन लभ्यत इति किमत्र पुच्छशब्देन करिष्यते, प्रत्युत पुच्छतुल्याधारत्वलक्षणायां पुच्छस्याधारत्वमाधारान्तरसापेक्ष सातिशयमिति ब्रह्मणस्तथाभूतमाधारत्वं लक्षयत्पुच्छपदं अनिष्टार्थमेव स्यादितिचेत्? उच्यते, आधारत्वसामान्यमेव पुच्छवद्भावविशेषिततया तेन लक्षणीयम्, श्रोतृबुद्ध्यवतरणाय- पक्षिणां पुच्छमाधार इति दृष्टम् एव पक्षितया रूपितस्यानन्दमयस्य ब्रह्म पुच्छवदाधार इत्युक्ते दृष्टान्तमुखेन सम्प्रतिपत्तिर्भवति, ब्रह्मणि क्रमेण श्रोतृबुध्यवतरणाय हि श्रुत्या अन्नमयादिक्रम आश्रित, अत्रानन्दमय

प्रत्याधारत्वेन ब्रह्मणि विवेच्ये पक्षित्वेन रूपितस्य तस्याधारसद्भावः पुच्छपदप्रयोगमुखेन दृष्टान्तमुद्राख्य व्यञ्जित श्रोतृबुद्ध्यवतरणाय । लोकेऽपि प्रातिबिम्बिकशब्ददर्शितार्थगत एव दृष्टान्तोपन्यासः प्रचुरो दृश्यते, यथा यो यो धूमवान् सोऽग्निमान्यथा महानस इति, यथा वा 'एकोहि दोषो गुणसन्निपाते निमज्जतीन्दो किरणेष्विवाङ्क' इति । नच दृष्टान्तोपन्यासेन सर्वात्मना तदीयधर्मसदृश एव धर्मस्सिद्ध्यतीति नियमः, येन पुच्छपदेन पुच्छवदाधारत्वलक्षणाश्च सापेक्षाधारत्वमनिष्टं प्राप्नुयादिति शङ्क्येत, 'आकाशवत्सर्वगतश्च नित्य' इत्यादीना प्राचुर्येण दर्शनात्; नहि ब्रह्मणस्सर्वगतत्वे नित्यत्वे च प्रतिपाद्यनीये श्रोतृबुद्ध्यवतरणायाकाश दृष्टान्तोपन्यासेन ब्रह्मणोऽप्याकाशवदापेक्षिकमेव परिच्छिन्न सर्वगतत्वन्नित्यत्वञ्च प्राप्यते । सूत्रे प्रायपाठादिति स्पष्ट वक्तव्ये प्राचुर्यादिति वचन प्राणमयादिपर्यायेषु प्रतिपर्याय पुच्छशब्दसद्भावेन तत्प्राचुर्यरूप प्रायपाठ मन्यत्रापि श्रोतृबुद्ध्यवतरणाय दृष्टान्तोपन्यासप्राचुर्य तदर्थदृष्टान्तोपन्यास स्थलेषु प्रतिपिपादयिषिते दृष्टान्तदृष्टहीनधर्मानापत्युदाहरणप्राचुर्यञ्च सङ्गृहीतुम् । स्यादेतत्, नकेवलमेकस्य पुच्छशब्दस्य स्वारस्यमनुरुध्य निगमनश्लोकस्यानन्दमयविषयत्व कल्प्यते, येन तस्याभ्यासाद्दुर्बलत्वे नाधारलक्षकत्व समर्थ्यत, किन्तु कृत्स्नस्यानन्दमयवाक्यस्य स्वारस्यमनु रुध्य, कृत्स्नेनापि ह्यानन्दमयवाक्येन 'ब्रह्मपुच्छ प्रतिष्ठे' त्यन्तेना वयव्यानन्दमय पूर्वपर्यायेष्वन्नमयादिवच्छिर प्रभृतिपुच्छान्तसकलावयवा पेक्षया प्राधान्येन प्रतीयते, अत प्रथमश्रुतानेकावान्तरवाक्यघटितमहा वाक्यविरोधादभ्यस्तस्यापि ब्रह्मशब्दस्यानन्दमये जघन्यवृत्तिकल्पन युक्त मित्याशङ्क्याह — *तद्धेतुव्यपदेशाच्च* ।

'इदं सर्वमसृजत यदिद किञ्चे' ति सानन्दमय विकारजात प्रति ब्रह्मणस्स्रष्टृत्वोपदेशादपि ब्रह्म स्वप्राधान्येनैव प्रतिपाद्यम् । ननु

सोप्यसञ्जातविरोधानन्दमयवाक्यानुसारेण कथञ्चिद्द्वष्टद्वारा सर्वथानन्दमये ऽप्यवतिष्ठताम्, नैवम्, 'सोऽकामयते' त्यादेस्य कामनापूर्वकसकलप्रपञ्चस्रष्टृत्वप्रतिपादनात् तस्य च तज्जीवेतुमयोग्यत्वात् । इद च तज्जीवेतुमयोग्यत्व सूत्रे व्यपदेशाच्चेति व्युपसर्गेण लभ्यते । विशिष्टो व्यपदेशो व्यपदेश । सच जीवेन्वेतुमयोग्येन कामनापूर्वकत्वेन विशिष्टसृष्टृत्वनिर्देश । चकारेण निगमन श्लोकस्यापि तज्जीवेतुमयोग्यत्व समुच्चीयते । नह्यानन्दमये प्रियमोदादियुक्ततया लोकप्रसिद्धे निगमनश्लोकोक्ता सत्यासत्यत्वरूपकाव्येति । चकारेण 'कोह्येवान्यात्क प्राण्यात् । यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति' 'भीषास्माद्वात पवत' इत्याद्युत्तरसन्दर्भगतसर्वप्राणप्राणयितृत्वप्रशासितृत्वोपदेशा अपि समुच्चीयन्ते । एतेपि हि जीवेन्वेतुमयोग्या । अतो बहुबाधस्या याग्यत्वादानन्दमयवाक्यस्यैव पुच्छपदमानलक्षणासाय ब्रह्मप्राधान्य अभ्युपगन्तु युक्तम् । सूत्रे तच्छब्द आनन्दमयपर, आनन्दमयसूत्रे पुच्छब्रह्मलक्षकस्याप्यानन्दमयपदस्य मुख्यार्थतया तस्य सन्निधापितत्वात् । नच पूर्ववाक्यगतशब्दसन्निधापितस्यापि पूर्वशब्दस्यार्थान्वयिन एव सर्वनाम्ना परामर्श इति नियमोस्ति । तथा नियमाभ्युपगमेपि नानुपपत्ति, आनन्दमयसूत्रस्य द्वितीययोजनायामानन्दमयस्य वाक्यार्थान्वयित्वात् । इदमपि ब्रह्म पुच्छमस्याभ्यासादिति सूत्रे कर्तव्ये आनन्दमयोभ्यासादिति सूत्रकरणस्य प्रयोजनम्, यदानन्दमयस्यात्र सर्वनाम्ना परामर्शनात्र सूत्रलाघवलाभ । एवमुपक्रमगतबहुप्रमाणविरोधेन प्रथमश्रुतस्याप्यानन्दमयवाक्यस्य ब्रह्मप्राधान्य समर्थितम् । इदानीं परमोपक्रमानुसारेणाप्यानन्दमयवाक्यस्य ब्रह्मप्राधान्य सिद्ध्यतीत्याह— **मान्त्रवर्णिकमेवच गीयते ।**

यत् 'सत्य ज्ञानमनन्त ब्रह्मे' ति मन्त्रवर्णे स्वशब्देनैव प्रकृत ब्रह्म, यच्च 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इत्याद्युक्त दर्श तस्मादिति

प्रकृतवाचिना तच्छब्देनानुकृष्याकाशादिसकलप्रपञ्चकारणत्वेनोपवर्णितम्, तदेवेदं 'ब्रह्म पुच्छं प्रतिष्ठे' ति ब्रह्मपदेन गीयत इति तस्यैव स्वप्राधान्यं युक्तम्; स्वप्रधानमान्त्रवर्णिकब्रह्मोपस्थापकप्रथमश्रुतब्रह्मपदानुसारेण चरम श्रुतस्यानन्दमयवाक्यस्य वर्णनीयत्वात् । ननुच मन्त्रवर्णे ब्रह्मण इव 'आत्मन आकाशस्सम्भूत' इत्यात्मनः प्राधान्यावगमादात्मशब्दनिर्दिष्ट आनन्दमयः प्रधानं कुतो न स्यादिति शंकानिरासार्थमेवकारः सूत्रे प्रयुक्तः । मान्त्रवर्णिकस्य ब्रह्मण एव प्राधान्यमनुसरणीयम्, उपक्रमगतत्वात्, नतु तदनन्तरश्रुतस्यात्मन इति भावः । यद्यप्यभ्यासादिति हेतुनैव मन्त्रगतमपि ब्रह्मपदं क्रोडीकर्तुं शक्यम्, तथापि 'ब्रह्मविदाप्नोति परमि' त्येतदनन्तरं किन्तद्ब्रह्मेति जिज्ञासायां लक्षणमुखेन तन्निर्धारणप्रवृत्तो मन्त्रस्तावद्ब्रह्मप्रधानः, तदेवच ब्रह्म 'तस्माद्वा एतस्मादि' त्यनन्तर सन्दर्भे सर्वनाम्नानुकृष्टं सदिहापि 'ब्रह्म पुच्छं प्रतिष्ठे' ति स्वशब्देन निर्दिश्यत इति पूर्वसन्दर्भप्रवृत्तिपर्यालोचनया प्रकरणस्य ब्रह्मप्राधान्यस्फुटी करणाय मान्त्रवर्णिकसूत्रम् । स्यादेतत्, 'ब्रह्मविदाप्नोती' त्यादिपूर्व सन्दर्भस्य 'असन्नेवसभवती' त्याद्युत्तरसन्दर्भस्य च ब्रह्मप्राधान्येप्यानन्द मयवाक्ये आनन्दमयस्य प्राधान्यम् तत्र ब्रह्मणः कल्पितपुच्छभावेन उपसर्जनत्वञ्चास्तु, ब्रह्मपरयो पूर्वापरसन्दर्भयोरुपास्योपसर्जनब्रह्मगत जगत्कारणत्वादिगुणसमर्पकतया वाक्यैकवाक्यतोपपत्तेरित्याशङ्क्याह —

**नेतरोऽनुपपत्तेः ।**

इतर आनन्दमयो न प्राधान्येन प्रतिपाद्य, उपक्रमोपसंहारावगतब्रह्म प्राधान्यविरोधेन उपास्यानन्दमयविशेषणगतगुणसमर्पणार्थत्वकल्पनानुपपत्तेः। स्यादेतत्, पूर्वापरसन्दर्भयोर्ब्रह्मप्राधान्येपि आनन्दमयवाक्ये ब्रह्मणः पुच्छभावेनोपसर्जनत्वमस्तु, कचिद्वाक्ये उपसर्जनस्यान्यत्र प्राधान्या-विरोधित्वादित्याशङ्क्य 'ब्रह्मविदाप्नोति परमि' त्यस्मिन् प्रकरणे प्रतिपाद्यस्य

ज्ञेयस्य शुद्धब्रह्मण उपास्यमानन्दमय प्रति विशेषणत्वञ्च सम्भवतीत्यभिप्रायेणाह— **भेदव्यपदेशाच्च ।**

भेदविरोधव्यपदेशो भेदव्यपदेश, देहप्रपञ्चमिथ्यात्वपर्यवसायी— 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्द ब्रह्मणो विद्वान् न बिभेति कुतश्चने' त्युपदेश, तद्विरोधात्, प्रियाद्यवयवयुक्तसविशेष आनन्दमय उपास्योपि न प्रतिपाद्य, निर्विशेषस्य मुमुक्षुज्ञेयस्य कल्पित पुच्छभावेनोपास्य सविशेष प्रति विशेषणत्वायोगात्, किन्तु ज्ञेय निर्विशेष पुच्छब्रह्मैव प्रतिपाद्यम् । ननु भृगुवल्ल्या अन्नप्राणमनोविज्ञान क्रमेण पञ्चपर्यायाम्नातस्यानन्दमयस्य प्राधान्येन प्रतिपाद्यत्व स्थान साम्यादनुमीयते, नच 'ब्रह्मविदाप्नोति परमि' ति मुमुक्षुज्ञेयब्रह्मोप क्रमस्य 'यतो वाच' इति निर्विशेषोपसहारस्यच विरोध, ताभ्या प्रकरणस्य शुद्धब्रह्मपरत्वेपि मध्ये कल्पितपुच्छभावसविशेषोपसर्जनकस्योपास्यस्यानन्दमयस्य प्रतिपादनसम्भवादित्याशङ्क्याह — **कामाच्च नानुमानापेक्षा ।**

काम्यत इति कामो भृगुवल्ल्याम्नात आनन्द, तद्दृष्टान्तमव लम्ब्यानन्दमयस्य प्राधान्यानुमानेपि प्रत्याशा न कार्या, तत्र श्रुत्यवा नन्दमयस्य उपक्रान्तब्रह्मरूपतया 'आनन्दो ब्रह्मेति व्यजानादि' ति साक्षात् 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति लक्षण मुखेनच पर्यवसानप्रतिपादनात्तदनन्तरमन्यस्य प्रतिपादनाभावादिहानन्द मयप्रतिपादनानन्तर ब्रह्मप्रतिपादनात्तत्रैव पूर्वोत्तरसन्दर्भसमन्वय इति वैषम्यसम्भवात् । सूत्रगतेन चकारेणान्नमयादिभ्य प्राणमयादीनामिवा नन्दमयादान्तरत्वेन ब्रह्मणोनुपदेशमालम्ब्याप्यानन्दमयस्य प्राधान्यानु मानप्रत्याशा न कार्येति समुच्चीयते । यद्यपि सूत्रे कामादिति स्थाने स्पष्टार्थमानन्दादिति वक्तुमुचितम्, तथाप्यनेनैव सूत्रेणानन्दमयाधार त्वेन निर्दिष्ट पुच्छब्रह्मानुमानिक प्रधानमिति साम्येन प्रत्याशा न

कार्या, 'सोऽकामयत' इति श्रुतात्कामादानन्दरूपस्यात्मशासितृत्वाच्चेति पूर्वाधिकरणोक्तगतिसामान्यप्रपञ्चनार्थमर्थान्तरमपि क्रोडीकर्तुं दमादिरयुक्तम् । स्यादेतत्, निर्विशेषप्रकरणमध्येऽपि सविशेषब्रह्मोपसर्जनेन ब्रह्मोपासनाविधाने सम्भाविते सत्यानन्दमयवाक्ये विध्यश्रवणेऽप्यपूर्वत्वादुपासनाविधिरूपत्वमुपपद्यत इत्यानन्दमयवाक्यस्य तत्प्रधानमस्त्वित्यारेकयाह—

**अस्मिन्नस्य च तद्योगं शास्ति ।**

अत्रैव प्रकरणे 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवती'ति शास्त्रं रसो वै स इति पुच्छब्रह्मणो निरतिशयानन्दरूपत्वं प्रतिपाद्य तत्र हेतुवेन "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" ति श्रुत्यन्तरसिद्धमानन्दमयं तद्विषयानुभवजन्यसुखवृत्तिषु प्रतिबिम्बितब्रह्मानन्दलेशं लब्ध्वा निर्वृतो भवतीत्यमुमर्थं शास्ति, अनन्तरानन्दमयपरामर्शस्य निरतिशयानन्दरूपपुच्छप्रतिपत्तिशेषत्वं वक्तुमित्यानन्दमयवाक्येऽपि तदुपन्यासस्य पुच्छब्रह्मप्रतिपत्तिशेषत्वमेव युक्तम्, न तूपासनार्थत्वम्, सूत्रेऽस्मिन्नस्येति सर्वनाम्नि पुच्छानन्दमयपरे तयोरानन्दमय सूत्रे आनन्दमयपदेन लक्षणामुख्यवृत्तिभ्यामुपस्थापितत्वात् । तद्योगमित्यत्र तच्छब्दः पूर्वसूत्रगतकामशब्दोक्तानन्दपरामर्शी । ततश्चास्मिन्पुच्छब्रह्मणि आनन्दमयस्यानन्दयोगं 'रसह्येवायमि'त्यादिशास्त्रं शास्तीति सूत्रार्थः । चकारेणान्यत्र वक्तुमिमन्पेक्ष्य सम्भवत्येकवाक्यत्वमिति न्यायेनाप्यानन्दमयवाक्ये तदुपन्यासस्य ब्रह्मप्रतिपत्तिशेषत्वं सिद्ध्यतीत्ययमर्थः समुच्चीयते ।

परेषामेव योजनान्तरं — किमिह 'सत्यं ज्ञानमनन्तं ब्रह्मे"ति प्रकृतं परं ब्रह्मानन्दमयशब्देनोच्यते, किंवा ऽन्नमयादिवद्ब्रह्मणोऽर्थान्तरमिति ? किं तावत्प्राप्तम् ? ब्रह्मणोऽर्थान्तरमिति युक्तं प्रियाद्यवयवयोगच्छारीरत्वश्रवणाच्चेति । एवं प्राप्ते, पर एवा

स्यानन्दमयः, अभ्यासात् , परस्मिन्नेव ह्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते - " रसंह्येवायं लब्ध्वानन्दीभवति कोह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति " " सैषानन्दस्य मीमांसा भवति " " एतमानन्दमयमात्मानमुपसङ्क्रामति " ' आनन्दं ब्रह्मणो विद्वान् " " आनन्दो ब्रह्मेति व्यजानादि " ति । यत्तु - प्रियादीनां शिरस्त्वादिकल्पनानुपपन्नेति; अनन्तरोपाधिजनिता न स्वाभाविकीत्यदोषः । शारीरत्वमप्यानन्दमयस्यान्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात् , नपुनस्साक्षादेव शारीरत्वं संसारिवत् । तस्मादानन्दमय परमात्मा ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ।

नानन्दमयः परमात्मा भवितुमर्हति, विकारशब्दात् , आनन्दमय इति मयटो विकारार्थत्वादिति चेन्न, - प्राचुर्येऽपि मयट्स्मरणात् । आनन्दमनुरत्वच ब्रह्मणो मनुष्यादारभ्योत्तरोत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतशयत्वावधारणात् , तस्मात् प्राचुर्यार्थे मयट् । तद्धेतुव्यपदेशाच्च ।

इतश्च प्राचुर्यार्थे मयट्, " एषह्येवानन्दयाती " ति ब्रह्मण आनन्दहेतुत्वव्यपदेशात् ; योऽन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धम् , तस्मात् प्राचुर्यार्थे मयटस्सम्भवादानन्दमयः पर एवात्मा । मान्त्रवर्णिकमेवच गीयते ।

" सत्यं ज्ञानमि " ति मन्त्रवर्णोक्तमेव ब्रह्मेह गीयते " अन्योऽन्तर आत्मानन्दमय " इति । मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तम् । तस्मादानन्दमय पर एवात्मा । नेतरोऽनुपपत्तेः ।

इतश्चानन्दमय परएवात्मा नेतरः । इतर इतीश्वरादन्यस्संसारी जीव इत्यर्थः । न जीव आनन्दमय, 'सोऽकामयत' त्यादुक्तसर्गविकारस्रष्टृत्वादेः परस्मादात्मनोऽन्यत्रानुपपत्तेः । भेदव्यपदेशाच्च ।

इतश्च नानन्दमयस्संसारी, "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवती" ति जीवानन्दमययोर्भेदेन व्यपदेशात् । न हि लब्धव लब्धव्यो भवति । कामाच्च नानुमानापेक्षा ।

आनुमानिकमपि सांख्यकल्पितमचेतनं प्रधानमानन्दमयत्वेन कारणत्वेन वा नापेक्षितव्यम्, आनन्दमयाधिकारे 'सोऽकामयत बहुस्यां प्रजायेये' ति कामयितृत्वनिर्देशात् । अस्मिन्नस्य च तद्योगं शास्ति ।

इतश्च न प्रधानं जीवो वानन्दमयः, यस्मादस्मिन्नानन्दमये प्रकृत आत्मनि प्रतिबुद्धस्यास्य जीवस्य तद्योगं शास्ति शास्त्रम् । तदात्मना योगस्तद्योगः तद्भावापत्तिः मुक्तिरित्यर्थः । तद्योगं शास्ति शास्त्रं "यदा ह्येवैष एतस्मिन्नदृश्ये ऽनात्म्येऽनिरुक्तेऽनिलयने ऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति — यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती" त्यादि । तस्मादानन्दमयः परमात्मेति ।

अपरेतु — किमन्नमयादयः पञ्चापि विष्णुरेव, उतान्य इति संशयः ? किं प्राप्तम् ? अन्य इति । कुतः ? अन्नमयादिशब्दा हि विकारवाचिनः, मयट्प्रत्ययस्य विकारार्थानुशासनाद्विकारस्य चान्यत्रैव सम्भवादिति । एवं प्राप्ते राद्धान्तः अन्नमयादयो विष्णुः, ब्रह्मशब्दाभ्यासात् । तस्य च विष्णावेव रूढत्वात् । "तदेव ब्रह्मपरमामि" ति श्रुतेः ।

विकारशब्दान्नेति चेन्न प्राचुर्यात् ।

नान्नमयादयः परमात्मा विकारवाचिनो मयट्शब्दस्य श्रवणात्, परमात्मनोऽन्नादिविकारत्वानुपपत्तेः, नच ब्रह्मशब्दानुपपत्तिः, अमुख्यार्थसम्भवात्, नच मुख्यार्थबाधकाभावः, विकारार्थस्य मयट्प्रत्ययस्य स्वरस्त्वादिति चेन्न — मयटो विकार इव प्राचुर्येऽपि तत्प्रकृतवचने मयडि त्यनुशासनात्, सावकाशेन मयटा निरवकाशस्य ब्रह्मशब्दस्य बाधासम्भवात् । आनन्दमयशब्दस्य विष्णुवाचित्वं तद्गतमयटश्च प्राचुर्यार्थत्वं हेत्वन्तरेणोपपादयति— तद्धेतुव्यपदेशाच्च ।

आनन्दमयप्रकरणे श्रूयते - "कोह्येवान्यात्क प्राण्यात् यदेष आकाश आनन्दो नस्यादि" ति । अन्यार्थ आसमन्तात्काशमानो विष्णुर्यदि पूर्णानन्दो न स्यात्तदा ऽसा न लोक प्रवर्तयेत् , आनन्दोद्रेक मन्तरेण स्वप्रवृत्तो हेत्वभावात् । तदाच लोके कश्चेष्टयेत् ? धर्मादौ च क प्रवर्तयेत । अन्यस्यास्वातन्त्र्यात् । अतो लोकचेष्टान्यथानुपपत्त्या तत्कर्ता विष्णु पूर्णानन्द इति । यद्यानन्दमयो विष्णोरन्य, मयट्च विकारार्थे, तदा श्रुतिरन्यस्यानन्दविकारत्वे हेतु ब्रूयात्, विष्णोर्महा नन्दत्वे हेतुकथनमसङ्गतमेव । तस्य विष्णो, तस्मिन्महानन्दत्वे जग च्चेष्टकत्वलक्षणहेतुव्यपदेशादिति सूत्रार्थ । तदिति षष्ठ्यन्त सप्तम्यन्त च तन्त्रेणोपात्तम् । **मान्त्रवर्णिकमेवच गीयते ।**

"सत्य ज्ञानमनन्त ब्रह्मे"ति मन्त्रवर्णप्रतिपादितमेव वस्तूत्तरेण ग्रन्थेन गीयते, ततश्चान्नमयादय पर ब्रह्मेत्यर्थ । परपक्ष प्रतिक्षिपति—**नेतरोऽनुपपत्तेः ।**

विष्णोरितरो नान्नमयादि , अनुपपत्ते – "सर्वेवै तेन्नमाप्नुवन्ति येन्न ब्रह्मोपासत" इत्यादिना अन्नमयादिज्ञानान्मोक्ष प्रतीयते, इतरपरत्वे तदनुप- त्ते ,'नान्य पन्था इति निषेधादित्यर्थ । ननु जीव एवान्नमयादिशब्दार्थ , नच तद्धेतुव्यपदेशाद्यनुपपत्ति , जीवब्रह्मणोरेकत्वस्य विवक्षितत्वेन तदु- पपत्तेरित्याशङ्क्याह **भेदव्यपदेशाच्च ।**

"स यश्चाय पुरुषे यश्चासावादित्ये स एक" इति जीवब्रह्म भेदस्यैवात्रोपदेशेनाभेदस्याविवक्षितत्वान्नान्नमयादिर्जीव इत्यर्थ । नन्वस्त्वनु मानादभेदसिद्धि नचोक्तभेदोपदेशविरोध , अनुमानविरोधेन तस्यैवान्य परत्वोपपत्तेरित्यत्राह **कामाच्च नानुमानापेक्षा ।**

अनुमानस्य कामगामित्वेनादृष्टार्थनिर्णयेऽनपेक्षिततया बाधकत्वायोगा दित्यर्थ । अस्मिन्नस्य च तद्योग शास्ति ।

अस्मिन् अनुवाकद्वये, अस्य— 'स य एववि' दित्युक्तस्य ब्रह्मविद, अन्नमयादिभियोग प्राप्तिम् , फलत्वेन कथयति श्रुति

" एतमन्नमयमात्मानमुपसङ्क्रामती " त्यादिना " एतमानन्दमयमात्मानमुप सङ्क्रम्ये " त्यादिनाच । अतो नान्नमयादयः कोशा इति ।

अन्येषामेकदेशिमते सशयपूर्वपक्षराद्धान्तेषु सिद्धान्तान् विशेषः । सद्धेतुव्यपदेशाच्चेत्यत्र तु विशेषः, आनन्दमये विकारप्राचुर्ययोस्साधारणस्य मयटो वाक्यशेषप्रतिपन्नार्थो ग्राह्य, ' एषह्येवानन्दयाती ' ति वाक्यशेषेच ' सोकामयते ' त्यानन्दमयं प्रकृत्याम्नाते आनन्दमय एव जीवानानन्दयतीति श्रूयते, तस्यच यथा स्वयं धनपरिग्रहरहितोपि स्वपरिग्रहेणान्यान् धनवत करोति तद्वदनुग्रहमात्रेणानन्दवत करोतीति नार्थ, किन्तु स्वानन्दैकदेशेनानन्दयत करोतीति, " एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती ' ति श्रुत्यन्तरात्, अत्रापि " रसं ह्येवायं लब्ध्वानन्दी भवती " ति श्रवणाच्च । ननु विषयविशेषसम्पर्केण जायमानैरानन्दै आनन्दवत्त्वेनानुभूयमानाना जीवाना नित्यसिद्धब्रह्मानन्दैकदेशैरानन्दवत्त्वोक्तिर्नोपपद्यत इति चेन्न,— विषयसम्पर्कादिकारणवशाद्वारतम्येनाभिव्यक्तो ब्रह्मानन्द एव जीवैराम्नायते, स एव मानुषानन्दप्रभृत्युत्तरोत्तरशतगुणत्वेनाम्नायते, तथा च वाक्यशेषे सर्वनिरपेक्षया प्रचुरानन्दशालित्वमानन्दमयस्य प्रतिपन्नमिति स एव मयडर्थो युक्त इति ।

अपरे तदेकदेशिन प्राहु 'यो वेद निहितं गुहायां परमे व्योमन्' त्यत्र प्रतिपन्ना ब्रह्मणो गुहा ऽन्नमयादिवाक्यै कोशचतुष्टयरूपा प्रदर्श्यते, गुहामध्ये तदवस्थानस्थलतया निर्दिष्टं चिच्छक्तिरूपं परमं व्योमाख्यानन्दमयवाक्येन विशिष्येदन्तया प्रदर्श्यते, आनन्दमयशब्दश्च प्रचुरानन्दपर, जगत्कारणमानन्दमयो न जीव, किन्तु ब्रह्मानन्दरूपचिच्छक्ति, तस्याभ्यस्तानन्दरूपत्वासम्भवादिति सूत्रार्थ । प्रायपाठानतिविकारार्थत्वप्रयुक्तजीवशङ्कानिराकरणार्थं पूर्ववदेव द्वितीयसूत्रं योजनीयम् । पूर्ववदेव तत्र हेत्वन्तरप्रतिपादनार्थस्तृतीयसूत्रम् । तत्रायमर्थयोजनाया विशेष —

'रसो वै सः' 'यदेष आकाश आनन्द' इत्यानन्दमयस्यानन्दरूपतामुक्त्वो च्यते - 'एष ह्येवानन्दयाती' ति । अतो यथा प्रचुरो जलराशिः स्वैक देशैः केदारान् जलवतः करोति एवं प्रचुर एवानन्दः स्वैकदेशैः जीवा- नानन्दवतः कुर्यादित्यप्रचुर इति वाक्यशेषश्रुतानन्दवत्त्वकरणान्यथानुपपत्त्या प्रतीयमानं प्राचुर्यमेव मयडर्थो युक्त इति ।

अन्येतु तदेकदेशिनः प्राहुः - "अस्माल्लोकात्प्रेत्य एतमन्नमय मात्मानमुपसंक्रामती' त्यादावन्नमयादीनां प्रत्येकं चेतनवाचकात्मश्रुतिसम्ब- न्धात् संसारलोकादुत्क्रान्तस्य मुक्तस्य क्रमप्राप्यत्वावगमाच्चैते सर्वधान्न- मयादय आत्मानः पञ्च चेतना अन्नाद्यनुमितपञ्चभूताधिष्ठातारः कारण भूताः पुरुषाः, अन्नमयाद्यात्माधारस्यानन्दमयस्यापि कारणं परमशिवाख्यं ब्रह्म तत्प्रतिष्ठेत्युच्यते । संशयस्तु - 'सोऽकामयते' त्यादिना जगत्कारणत्वेन प्रतिपाद्यमानः आनन्दमयः किमाकाशाभिमानी आधिकारिकः पुरुषः, किं वा परमशिवाख्यं ब्रह्मेति ? अत्र पूर्वः पक्षः- चेतनत्वोपासनाप्राप्यत्वलिङ्गसह कृतया पञ्चसंख्यया 'आकाशस्सम्भूत' इत्यादिप्राचीनवाक्यप्रतिपन्नपञ्च भूतविपरिवृत्त्यनुगृहीतयान्नमयादयः पञ्च भूताभिमानिनः अधिकारपुरुषा इति निश्चिते स्थानप्रमाणादानन्दमय आकाशाभिमानीति युक्तमिति । राद्धान्तस्तु - आनन्दमयो ब्रह्म, निरतिशयत्वेन अभ्यस्यमानानन्दस्य ब्रह्म ण्येवोपपत्तेः, विकारभूताधिकारिकपुरुषविशेषपरत्वेनावगतादप्यानन्दमय शब्दात्तदवच्छिन्नब्रह्मप्रतीतिरुपपद्यते । नेतरोऽनुपपत्तेरित्यधिकरणशेषञ्च हिरण्य गर्भनिरासक्रमधिकरणान्तरं वर्णयन्ति ! नेतरोऽनुपपत्ते ।

इतरो हिरण्यगर्भः "यत प्रसूता जगतः प्रसूती" इत्यादिवाक्य प्रतिपाद्यो न भवति, जगत्प्रसूतिहेतुत्वादीनां तत्रानुपपत्तेः । हिरण्यगर्भस्य परमेश्वरेणाभेदाज्जगत्कारणत्वमस्त्वित्याशंक्याह भेदव्यपदेशाच्च ।

"यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षि" "हिरण्यगर्भं पश्यत जायमानमि' ति परमेश्वरहिरण्यगर्भयो भेदव्यपदेशादित्यर्थः । कामाच्चाऽनुमा-

परमेश्वरस्य श्रूयते, सा सृष्टि- "प्रजापतिरकामयत प्रजा सृजेये' ति चतुर्मुखस्यापि श्रूयते, अत- कामनासृष्टिलिङ्गाच्चतुर्मुख: परमेश्वराभिन्न इत्याशङ्कयाह कामाच्च नानुमानापेक्षा ।

कामलिङ्गकानुमानमादरणीयमित्यर्थ: । अस्मिन्नस्यच तद्योगं शास्ति ।

अस्मिन्नुपनिषत्तन्त्र एवास्य हिरण्यगर्भस्य तद्योग - तस्य परमेश्वरस्य शेषत्वसम्बन्धं शास्ति मन्त्रभागः - "ब्रह्माधिपतिर्ब्रह्मणोधिपतिरि' त्यादिरिति ।

इतरेतु आनन्दमयः किं प्रत्यक् , उत प्रकृति-, अथवा परं ब्रह्मेति संशयः । पूर्वपक्षस्तु - प्रत्यगेवानन्दमयः, अपरोक्षाज्ञावयवयालम्बनेनोपास्त्युपदेशात्; प्रकृतिर्वा, साक्षाद्विकारक्षमत्वात्; तत एव च साक्षात्सर्गसम्भवादक्षावयवानाञ्च साक्षादेव प्राकृतत्वादानन्दावयवत्वसम्भवाच्च । अत्र राद्धान्त-, - आनन्दमयोभ्यासात् ।

आनन्दमयो ब्रह्म, ब्रह्मणामेवासाधारणरूपनाम्नामानन्दमयं प्रकृत्याभ्यस्यमानत्वात् । "सोकामयत बहुस्या" मित्यादितः प्रकृतानन्दमयस्य बहुभावेक्षणतत्पूर्वकजगत्स्रष्टृत्वतदनुप्रवेशादीनि हि ब्रह्मणो रूपाण्यभ्यस्यन्ते । तद्धेतुव्यपदेशाच्च ।

यस्मात् प्रकृतस्यानन्दमयस्यानन्दहेतुत्वमानन्दयितृत्वं व्यपदिशति श्रुतिः "एषह्येवानन्दयाती" ति, अतो ब्रह्मैवानन्दमय- । कामाच्च नानुमानापेक्षा ।

अनुमानं स्मृति कापिली, तत्सिद्धमानुमान प्रधानम् , तस्येहानन्दमयतया प्रतिपादनापेक्षाद्राशा कापिलानाम युक्ता, कुत ! कामात् - यत इहानन्दमय प्रकृत्य 'सोकामयते' त्यादित- बहुभावकामनापूर्व सर्गादिः श्रूयते, यतश्च न सम्भवि जडस्य कामनायोग- ।

अत्र परपक्षे शुद्धब्रह्मणि वेदान्तानां समन्वयः प्रतिपादित इति [illegible] यास्कनिरु- [illegible] ज्ञाताज्ञाता कारद्वयसापेक्षजिज्ञास्यत्वबलात्? अथवा निर्विशेषायोग्यजगत्कारणत्वबलात्? अथवा अहमिति प्रत्यक्षसिद्धे वस्तुनि शास्त्रगम्यत्वोक्तिबलात्? अथवा तस्मिन्नेव वस्तुनि समन्वयप्रतिपादनबलादीक्षणादियोगप्रतिपादनबला- द्वेति न विद्मः । वस्तुतो ब्रह्मणो निर्विशेषत्वादिति यदि; तर्हि पूर्वकाण्ड सूत्राणामपि निर्विशेषपरत्वं किन्नोच्यते । वस्तुतो निर्विशेषत्वेपि व्याव- हारिकपदार्थानामपि विद्यमानतया शब्दस्वारस्यानुरोधाद्यदि, व्याव- हारिकविषयत्वं तेषां सूत्राणामिष्यते, तदा एषामपि सूत्राणां तत एव व्याव हारिकविषयत्वमवर्जनीयमिति न निर्विशेषविषयत्वम् । अस्याश्च चिन्तायाः किं प्रयोजनम्? न ब्रह्मसिद्धिः, पूर्वपक्षिणापि तदङ्गीकारात् । नचा- स्मिन्वाक्ये तत्प्रतिपादनसिद्धिः, तस्यापि तथात्वात् । नच प्राधान्येन तत्प्रतिपादनसिद्धिः, तदसिद्धावपि ब्रह्मसिद्धेरवैकल्येन तत्सिद्धेः प्रयो- जनाभावात् । तदसिद्धौ 'सोऽकामयते' त्यस्य प्रधानविषयतया ऽऽनन्द मयस्य प्राधान्याज्जीवस्यैव कारणत्वं स्यात्, अतो ब्रह्मकारणत्वसिद्धये प्राधान्यं प्रसाध्यत इति चेत्; तर्हि 'तद्धेतुव्यपदेशादि' ति सूत्रविरोधः- ब्रह्मणः प्राधान्ये सिद्धे तस्य वाक्यस्य ब्रह्मपरत्वसिद्धिः, सिद्धे च ब्रह्म परत्वे ब्रह्मणः प्राधान्यसिद्धिरिति । किञ्च किमत्र शाब्दप्राधान्यं विव- क्षितम्; उतार्थप्राधान्यम्? नाद्यः, सर्वपर्यायेष्वपि शिरःप्रभृतीनां शाब्द प्राधान्यस्य राजपुरुष इत्यत्र पुरुषस्येवावर्जनीयत्वात् पूर्वपक्षानुपपत्तेः । न द्वितीयः, शिरःप्रभृत्यवयवकृत्य प्राधान्यस्यावर्जनीयतया सिद्धान्तानुपपत्तेः । नन्वत्र स्थूलारुन्धतीन्यायेन प्रतिपिपादयिषा किमानन्दमये पर्यवसिता उतब्रह्म णीति विचार्यते, अतः प्रतिपिपादयिषापर्यवसानभूमित्वमेव प्राधान्यमिति चेत्? तदप्यानन्दमय एव घटते. अन्नमयमुखेन प्राणमयस्य तन्मुखेन मनो मयस्य तन्मुखेन विज्ञानमयस्य च प्रतिपिपादयिषितत्वात्तन्मुखेनानन्दमयस्यैव प्रति पिपादयिषिततया स्वरसतोऽवगमात् । यदि प्रतिष्ठात्वेन प्राधान्यं पुच्छस्य

विवक्षित्वा तद्विषयत्वेन श्लोकमप्युक्त्वान्नमयप्रतिष्ठाभूतपुच्छान्तरत्वेन प्राणमयन्तत्प्रतिष्ठान्तरत्वेन मनोमयन्तत्प्रतिष्ठान्तरत्वेन विज्ञानमयन्तत्प्रतिष्ठा न्तरत्वेनानन्दमयञ्च निर्दिश्य, तत्प्रतिष्ठात्वेन ब्रह्म निर्दिशेत् तदानीं स्थूलारुन्धतीन्यायेन लिलक्षयिषाया पुच्छे ब्रह्मणि पर्यवसान स्यात । नचैव दृश्यते । नन्वानन्दमयशब्दाभिलप्यजीवाधारत्वेन ब्रह्म प्रति पिपादयिषितम् , तत्र दृष्टान्ततया कोशचतुष्टयावतार, यथा एतत्पु च्छादे प्रतिष्ठात्वन्तथा ब्रह्मपुच्छस्यापीति चेत् ' तथासति तत्तत्पर्या येषु पुच्छस्यैव प्राधान्येन श्लोकानान्तद्विषयतापत्ते , 'तस्माद्वा एतस्मा' दिति वाक्यचतुष्टयवैयर्थ्यापत्तेश्च । किञ्च प्रथमसूत्रे प्रथमयोजनायामानन्दमय शब्दे लक्षणा, वृत्तवर्तिष्यमाणसूत्रेष्वनुपस्थितप्रतिज्ञाध्याहार, अभ्यास पदे द्रागुपस्थिताभ्यासार्थतात्याग । यद्यपि सन्निहितोय ब्रह्मशब्दा भ्यास, तथापि आनन्दाभ्यासस्य भूयस्त्वात् — सूत्रे आनन्द मय इत्यानन्दग्रहणान्मयडर्थोपपादकत्वाच्च स एव स्वरसतो बुद्धौ सन्नि धत्ते । द्वितीययोजनाया नञध्याहार, वदेशिकपदाध्याहार, अभ्यासपदे पूर्वोक्तदोष । अतो योजनाद्वयमपि त्रिदोषम् । सन्निवेशप्रयोजनमसिद्धम्, ब्रह्मपुच्छमभ्यासादित्युक्तेपि आवृत्तस्य सूत्रस्यब्रह्मपुच्छ निगमनश्लोकप्रतिपाद्य, तत्र ब्रह्मशब्दाभ्यासदर्शनात् , अभ्यस्यमान ब्रह्मशब्द प्रत्यानन्दमयस्य मुख्यार्थत्वाभावादित्यथसम्भवात् । एव सति पूर्वयोजनाया लक्षणादोषो द्वितीययोजनाया नञध्याहारदोषश्च चिकित्सितौ भवत । प्रयोजना न्तरञ्च अव्यवहितानन्तरसूत्रे दूषयिष्यते । किञ्च, श्लोके ब्रह्मपदयोर्जीव परत्वमेव युक्तम् , आनन्दमयस्यैव पर्यायप्रधानत्वात् । यदि लिंगा च्छ्रुते बलीयस्तया पुच्छब्रह्मपरत्वमेव, तर्हिप्रधानपरत्वमेव श्लोकस्यास्तु । यदि प्रधानपरत्व श्लोकस्य प्रकरणागतमित्युच्येत, तर्हि प्रकरणस्यानु रोध्यत्वे श्लोकस्य शिर प्रभृतिसम्बन्धिपरत्व तन्नैव पर्यायप्राधान्य शिर प्रभृतीना पुच्छपर्यन्ताना उपसर्जनत्वञ्च प्रकरणागतम , अस्मिन्नपि पर्याये

यथापूर्वं मयडन्तार्थसम्बन्धित्वेनैव शिरःप्रभृति पुच्छान्तमवगतम् , 'तदप्येषश्लोक' इति च सर्वत्र पर्यायेषु तच्छब्देन शिरःप्रभृतिसम्बन्ध्येव परामृश्यते, अत एवमाद्यनेकप्राकरणिकार्थानुसारादानन्दमयपरत्वमेव श्लोकस्य युक्तम् । एतत्सर्वं पृष्ठीकृत्य ब्रह्मश्रुत्यनुसरणे प्रधानविषयत्वं बाधित्वा श्लोकस्योपसर्जनपुच्छविषयत्वमेवाङ्गीक्रियताम् ।

किञ्चात्रेदं विवेचनीयं किन्तत्तत्पर्यायेष्वन्नमयादीनां प्राधान्यात्तद्विषयतया श्लोकस्य प्रधानविषयत्वम् ? उत श्लोकप्रतिपाद्यत्वात्तेषां प्राधान्यम्? आद्ये कथं श्लोको भृत्यं राजपदेभिषिञ्चेत् ? न द्वितीयः; श्लोकप्रतिपाद्यं प्रधानमिति श्रुतिवाक्यस्य कैरप्यनध्ययनात् । एवञ्चावयवतत्प्रतिसम्बन्धिनोः प्रधानोपसर्जनभावस्य लोके सम्प्रतिपन्नत्वादिहापि तथात्वे सति अवयवसम्बन्धिनामुपसर्जनसम्बन्धित्वं प्रतिसम्बन्धिसम्बन्धिनां प्रधानसम्बन्धित्वञ्च सिद्ध्यति, ततश्च श्लोकस्य प्रधानसम्बन्धित्वमुपसर्जनसम्बन्धित्वं वा प्रमाणबलादवगन्तव्यम् , न हि श्लोकः प्रधानसम्बन्धीतिवा उपसर्जनसम्बन्धीतिवा प्रमाणं दृश्यते । प्रकरणानुरोधे आनन्दमयविषयत्वेनैव प्राधान्यं स्यात् , ब्रह्मश्रुत्यनुरोधे पुच्छविषयतया अप्राधान्यं स्यात् , नपुच्छप्राधान्यमिति । द्वितीयसूत्रे पदार्थवाक्ययोजनास्वारस्याभावः स्पष्ट एव । सन्निवेशप्रयोजनञ्चासङ्गतम् ; अवयवशब्दादित्युक्तेपि वैयर्थ्यसूचनसम्भवात् , अवयवप्रतिपादकशब्दादित्युक्तयाहि तदप्रतिपादने वैयर्थ्यं सूचयितुं शक्यत एव । सिद्धान्ते अवयवपरत्वाभावे प्रायपाठानुग्रहो न स्यात् । पूर्वपर्यायेषु पुच्छशब्दः सर्वपर्यायेष्वप्यवयववाचिशिरःप्रभृतिशब्दैश्चावयवपरिग्रह एव हि दृष्टः । तेनानिष्टसाधकं प्राचुर्यम् । यश्च तथापि प्रायपाठानुग्रहे दृष्टान्तोपन्यासः, सोनुपपन्नः, दृष्टान्तस्य विषमत्वात् । तत्र यमितमिद्धमबुदिस्सर्वत्रावेच्छिन्नैव । अतो

तृतीयसूत्रे— यत्प्रथमसूत्रसंनिवेशस्य प्रयोजनमुच्यते, तदनुच्यते, किमानन्दमय प्रधानमुत ब्रह्मेति संशयेस्य सूत्रस्य प्रवृत्तत्वात्, चकारेण ब्रह्मप्राधान्यसाधकत्वप्रतीतेश्च । तच्छब्देन जीवपरामर्शो लभ्यते, प्रतिकोटितयोपस्थितत्वात् । तस्मात्सिषाधयिषितानुकूलसन्निवेश एव युक्त । पंचमसूत्रे पूर्वसूत्रोपरिप्रवृत्तचोद्यमेव स्थिरम्, उपक्रमस्थपर्यायचतुष्टयानुरोधेनानन्दमयप्राधान्यावगमस्य दुरपह्नवत्वात्, समानसन्निवेशबहुवाक्यसारूप्यस्यापरित्याज्यत्वात् । आनन्दमयपर्याय ब्रह्मप्राधान्ये पर्यायाणामेकरूप्यस्यैव उपक्रमोपसंहारस्थवाक्ययो पुच्छशेषत्वे न कस्यापि बाधोऽस्ति । षष्ठे सूत्रस्यारम्भ स्पष्टमेव । किंच सविशेषोपसर्जनतया निर्विशेषोपासने न किंचिद्बाधकम् । न च निर्विशेषोपासनस्य मोक्षहेतुत्वात् सविशेषोपासनफलासिद्धि, सविशेषोपासनेनैव मोक्षप्रतिरोधात्तत्फलोपपत्ते । न च मोक्षहेतूपासनविषयतया ऽभ्यर्हितस्य क्षुद्रपुरुषार्थसाधनसविशेषोपासनोपसर्जनत्वासम्भव, तथा सति ब्रह्मदृष्ट्युत्सादात् । न च सविशेषब्रह्मण उपसर्जनत्व सम्भवति न तु निर्विशेषब्रह्मण इति वाच्यम्, ब्रह्मद्वयाभावात् । निर्विशेषत्व हि विशेषाणा मिथ्यात्वमेव, न च तेन ब्रह्मभेदसिद्ध । किंच प्रपञ्चमिथ्यात्व जानन्नामादौ ब्रह्मदृष्टिं कथ कुर्यात् ? यदि सविशेष ब्रह्मदृष्टिं कुर्यात् तर्हि निर्विशेषे विशेषावयवदृष्टिवदानन्दमयान्वयदृष्टौ किं बाधकम् ? प्रतिष्ठापन्ने तदन्वयप्रतीतिश्चैव । उपसर्जनत्वे पर विवाद तत्र च न किंचिद्बाधकमुपलभ्यते । किंचात्र प्रतिष्ठात्वेनोक्त पुच्छब्रह्म सविशेषमेव, उपक्रमोपसंहारयोस्तस्य कारणत्वोपदेशात् ।

यदुक्तम् 'यतोवे' त्याद्युपदेश प्रपञ्चमिथ्यात्वपर्यवसायीति तदेव मिथ्यात्वपर्यवसायि । तथाहि इद हि प्रकरण सप्रपञ्चब्रह्मस्वरूपनिरूपणार्थम्, उपक्रम एव 'ब्रह्मविदाप्नोति पर' मिति भेदगर्भप्राप्तिवचनात् ।

बृहदारण्यके ब्रह्मप्राप्तिरेव फलं, नत्वैक्यम् , नित्यसिद्धत्वादिति द्योतनार्थं 'असतो मा सद्गमये' ति । अत्र 'सद्गमये' त्येव वक्तव्ये असतस्सन्नभवत् भेदगर्भ एव सत्सङ्गमोर्पाति ज्ञापनार्थं असत इत्युक्तम् । तदभिप्रायेणैव 'मृत्योर्मा मृतं गमये' ति पुनरप्युक्त्वा 'अमृतंमाकुर्वि' ति परमसाम्यापत्ते. फलत्वेन कीर्तनाच्च । इदमेव 'परमं साम्यमुपैति' 'एषावै ब्रह्मैकते' ति स्पष्टमेव प्रतिपाद्यते । अतोत्र ब्रह्मप्राप्तिरेवोच्यते । ततश्च किन्तद्ब्रह्म ? कीदृश तद्वेदनम्? कीदृशी च तत्प्राप्तेः पुरुषार्थता? इत्यपेक्षायां 'सत्यं ज्ञानमनन्तब्रह्मे' ति ब्रह्मस्वरूपनिर्धार्य, 'यो वेद निहितं गुहाया' मिति हृदय पुण्डरीकमध्याध्यासीनत्वेन वेदनं प्रदर्श्य, तत्फलभूतायान्तत्प्राप्तेर्निरतिशय पुरुषार्थरूपत्वं 'सोश्नुत' इत्यादिना प्रतिपादितम् । 'ब्रह्मणे' ति सहयोगे तृतीया । तथाच ब्रह्मणा सहानवधिकातिशयासङ्ख्येयकल्याणगुणादीननुभवति । एवमनुभाव्यतयोक्तब्रह्मगुणान्तर्गतं द्विविधं कारणत्वं नियमनमपि 'आत्मन आकाशस्सम्भूतः' 'सोकामयत' 'भीषास्माद्वातः पवत' इति दर्शितम् । अनन्तरमनुभाव्यगुणान्तर्गतस्यानन्दस्यापरिच्छेदस्य 'यतो वाचो निवर्तन्त' इत्युक्तम् । तिष्ठत्वयन्तत्वार्थ, 'यतोवा' इत्यादेः निर्विशेषपरत्वे प्रकरणावगतमानन्दप्राधान्यं दुरपह्नवम् ।

सप्तमेपि शब्दान्वारस्य स्पष्टम् । किञ्च समानप्रकरणे भृगुवल्ल्यां आनन्दे उपदेशपरिसमाप्तिदर्शनात् तस्यचानन्दमयत्वस्य 'एतमानन्दमयमात्मानमुपसंक्रम्ये' त्यवगमादिहाप्यानन्दमय एवोपदेशपरिसमाप्तेस्तस्यैव प्राधान्य युक्तम् । प्रतिपर्याय शिर प्रभृत्यवयवाना उपदेशस्यार्थान्तरोपदेशत्व एव ब्रह्मपुच्छोपदेशस्याप्यर्थान्तरोपदेशत्वं स्यात् । न च भृगुवल्ल्या जीव एव समाप्ती 'इमान् लोका' निति फलश्रुत्यसम्भवः, निर्विशेषब्रह्माभेदाभिव्यक्तिरूपफलस्याश्रयणेन दोषाभावादेतादृशफलस्यान्यतोपि सम्भवादिति

पुच्छत्वावयवत्वोपदेशे सत्यन्तरात्मोपदेशस्य पुच्छपर्यन्तत्वावगमानम्भवात्। सन्निवेशप्रयोजनमप्यसङ्गतम्, ईक्षतिसूत्रेणैव सङ्कल्पुनिमतीपु श्रुतिपु प्रधानकथाया निरवकाशीकरणेन तच्छङ्काया अनुत्पत्तेः। चरमसूत्रस्य स्वारस्य स्पष्टमेव, साम्यान्तरा*हारात् । किञ्च — वाक्यान्तरे गुण प्रधानभावानुरोधेनात्रापि तथा वैपरीत्य दुरवहम्। अस्य च पूर्ववाक्यान्यप्युपोद्बलकानि सन्ति । समुच्चयोऽप्यनुपपन्न, उपक्रमोपसंहारयो पुच्छशेषत्वे एकवाक्यताया इष्टत्वात्, शेषत्वाभावे उपक्रमानुसारेणानन्दमयस्य प्राधान्यावश्यम्भावेन एकवाक्यताया असम्भवात्। तस्माद्यथावृत्ति भगवदनुगृहीतरीत्यैवानन्दमयनत्वं न दोषाकार्यं ।

अत्र यदुक्तमानन्दमयो ब्रह्मेति न युज्यते, अन्नमयादिगतविकारार्थमयट्प्रायपठितेन मयटा तस्य विकारार्थत्वावगमात्। ननु — प्रायपाठो सिद्ध, अन्नमये विकारार्थस्योपक्रान्तत्वेपि प्राणमयादिषु तत्परित्यागात्; प्राणवृत्तिप्राचुर्येण हि पञ्चवृत्तिर्वायु प्राणमय इति व्यपदिष्ट, न तु प्राणकार्यत्वेन, एवमन्त करणजीवावपि मनोवृत्तिविज्ञानप्राचुर्येण मनोमयो विज्ञानमय इति निर्दिष्टौ, ततश्चानन्दमयेपि प्राचुर्यमेव मयडर्थ, नचानन्दप्राचुर्यमपि ब्रह्मणि सम्भवति, प्राचुर्यस्य समानाधिकरणविजातीयाल्पत्वप्रतियोगिकताया 'ब्राह्मणप्रचुरो ग्राम' इत्यादौ दृष्टत्वेनानन्दस्य प्राचुर्यार्थस्याभाव्यात् ईषद्दु खसाभिन्न्यादिति वाच्यम्, प्रचुरप्रकाशस्सवितेत्यादौ व्यधिकरणविजातीयाल्पत्वप्रतियोगिकताया अपि दृष्टत्वेन ब्रह्मणि जीवगताल्पत्वमपेक्ष्य तत्प्राचुर्यसम्भवात्, इतिचेन्न, 'स वा एष पुरुषोऽन्नरसमय' इत्यत्र हि न देह एवोच्यते, तस्यान्नपरिणामवाचिना रसशब्देन विकारवाचिनाऽन्नमयशब्देनवोक्तिसम्भवे 'अन्नरसमय' इत्यस्य वैयर्थ्यात्। पुरुषशब्दस्यच चेतनवाचि वादनात्पुरुष इत्यव्यवहितपरामर्शस्यैव इत्यनेन सिद्ध तया स इत्यस्य व्यवहितान्नाद्यादिकारणात्मपरामर्शार्थं वाच्य । किन्तु स -

भागाकाशादिकारणत्वेन निरूपितः, एषः— अनुपदमन्नकार्यत्वेन निरूपितश्च पुरुषः, अन्नरसमय-——अन्नरसं देहमनुप्रविश्य तदवच्छिन्नतया तत्कार्यं इत्युच्यते, तथाचात्मापुरुष इति निर्दिष्टमाकाशादिकारणरूपस्य पुरुषस्यान्न कार्यत्वं अन्नकार्यदेहावच्छेदलब्धपरिच्छिन्नाकारतयेति विवृतं भवति । एवं प्राणमयो मनोमयो विज्ञानमयश्च प्राणमनोबुद्ध्यवच्छिन्नतया तद्विकारभूतो जीव एवेति युक्तम् । किञ्च मयटः प्राचुर्यार्थत्वं वदतस्तत्रापि मते जीव एवानन्दमय इति सिद्ध्यति, आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वगर्भत्वात् । प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वस्य निरूपकत्वेपि विशेष्यत्वे समानाधिकरणविजातीयाल्पत्वमेव निरूपकमिति व्युत्पत्तिसिद्धम् । अत एव प्रचुरब्राह्मणो ग्राम इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वापेक्षत्वेपि ब्राह्मणप्रचुरो ग्राम इत्यत्र तद्ग्रामगतशूद्राल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते । न च प्रचुरप्रकाशस्सवितेतिवत् प्रकाशप्रचुरस्सवितेति प्रयोगेपि नक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यंप्रतीयते, न तु सवितृगततमोल्पत्वापेक्षम् , तत्र तमसो बाधितत्वादिति शङ्क्यम् ; तत्रापि तुहिनसैहिकेयाच्छादनारोपिततमोल्पत्वमपेक्ष्यैव घनाद्यपसरणसमये तथाप्रयोगात् , तदभावे तथाव्युत्पन्नप्रयोगाभावात् । अपिचान्यत्र व्यधिकरणसजातीयाल्पत्वमपेक्ष्य मयटः प्रयोगसम्भवेपि प्रकृते स्वदभिमतप्रायापाठानुसारेण समानाधिकरणविजातीयाल्पत्वमपेक्ष्यैव तत्प्रयोगो निर्वाह्यः । तथा हि — प्राणमये तावत् पञ्चवृत्तिवायुगतमेव व्यानादिवृत्त्यल्पत्वमपेक्ष्य , ततोन्यत्र प्राणवृत्तीनामभावात् ; एवम्मनोमयेपि मनोवृत्तिप्राचुर्यं मनोगतवृत्त्यभावमपेक्ष्यैव, विज्ञानमयेपि जीवे ज्ञानप्राचुर्यन्तद्गतज्ञानात्मकसंस्काराल्पत्वमपेक्ष्यैव पर्यवस्यति । किंबहुना ? एवं त्रिषु प्राचुर्यार्थत्वमुपगतवतोन्नरसमयेपि देहेऽवयवान्तराल्पत्वमपेक्ष्यान्नपरिणामरूपावयवप्राचुर्यमेव मयडर्थ इति वैरूप्यपरिहारार्थं बलादायाति। एवमानन्दमयेपि समानाधिकरणदुःखाल्पत्वापेक्षमानन्दप्राचुर्यं मयडर्थ इत्यापतत् दुःखमिश्रत्वं केन वार्यते? किंचानन्दमयो

न ब्रह्म, शिर पक्षाद्यवयवयोगात् , न च कल्पितमवयवित्व न ब्रह्मत्व विरोधि, अन्यथा ब्रह्मणेऽवयवत्वमपि नास्तीति पुच्छब्रह्मणोऽप्यब्रह्मत्व प्रसङ्गादिति वाच्यम् पुच्छपदस्याधारलक्षणयावयवत्वस्यानङ्गीकारेण दृष्टान्तासम्प्रतिपत्ते । पुच्छत्वेन निर्दिष्टात् ब्रह्मण आनन्दमयस्य व्यतिरेक प्रतीतेश्च नानन्दमयो ब्रह्म । ननु आनन्दमयस्य 'पुच्छ ब्रह्मे' ति निर्देशो न ब्रह्मत्वविरोधी, अन्नमयस्य स्वस्मादनतिरिक्ते स्वावयवरेव 'तस्येदमेव शिर' इत्यादिना शिर पुच्छादिमत्त्वकल्पनदर्शनात् , अनतिरिक्ते पक्ष पुच्छादिमत्त्वकल्पनप्रायपाठानुगुण्येन ब्रह्मानन्दमययोरभिन्नयोरेव पुच्छनद्द्भावनिर्देशे तात्पर्यकल्पनस्योचिततया ततो व्यतिरेकाप्रतीतेरिति चेत्,— शिर प्रभृतीना अन्नमयादिशब्दोदितचेतनातिरिक्तत्वात् , अन्नमयादिशब्दानाञ्चेतनपर्यन्तत्वानङ्गीकारेऽपि मनोमयपक्षशिर पुच्छाना ऋक्सामयजुरथर्वाङ्गिरसानामतिरिक्तत्वेनान्नमयादिष्वप्यवयवावयविभावादिकृतभेद-सद्भावेन च तथा प्रकरणासिद्धे स्वरसत प्रतीयमानस्य व्यतिरेकस्य त्यागायोगात् । अन्नमयादिपर्यायेषु प्रधानानान्तत्पर्यायगतश्लोकविषयत्व दर्शनेन स्वपर्यायगतश्लोकाविषयस्यानन्दमयस्याप्राधान्याच्च नानन्दमयो ब्रह्म। न चानन्दमयस्य श्लोकाप्रतिपाद्यत्वमसिद्धम् , श्लोकाना पुच्छवद्विषयत्व नियमदर्शनादितिवाच्यम् ,— मनोमयपर्यायगतस्य 'यतो वाचोनिवर्तन्त' इतिश्लोकस्य ब्रह्मविषयस्य पुच्छवद्विषयत्वाभावात्, 'तस्यैष एव शारीर आत्मा, य पूर्वस्ये' ति अन्नमयादीनामिवानन्दमयस्याप्यात्मान्तरश्रवणादपि नानन्दमयो ब्रह्म । 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तामि' ति शुद्ध्यत्वश्रवणाच्चेति ।

अत्रोच्यते—

प्राणमयादिषु मयट कथञ्चित्स्वार्थिकत्वेऽप्यानन्दमयादिना यत्नेऽवरस्य सुकृतदनुपपत्तम् मयट प्राचुर्यार्थत्वे निरतार्थत्व वानन्दमयशब्दस्य ...

स्वारस्यात्; नच सिद्धान्ते प्राणमनश्शब्दयोर्वृत्तिपरत्वेनास्वारस्यं शङ्कनीयम्, परपक्षे पञ्चानामपि मयटामस्वारस्यात्, उपक्रमपर्याय स्वारस्यानुसारेण तावन्मात्रस्य सह्यत्वाच्च। ब्रह्मण आनन्दरूपताया आनन्दाकारवृत्तिविशिष्टरूपताया वानन्दाधीनत्वादानन्दविकारतया त्वद्भिमतजीवाभेदाद्वा कथंचिद्विकारार्थमयटो ब्रह्मण्यपि सम्भवेनानन्दमयस्या ब्रह्मत्वसाधनासम्भवाच्च। "अन्नमशितं त्रेधा विधीयते" इत्याद्यनुसारेण रसग्रहणम्। "सवा एष पुरुषो ऽन्नरसमय' इत्यत्र तच्छब्देन न कारण परामर्शः। तथाहि— "ब्रह्मविदाप्नोति परमि"ति ब्राह्मण सत्यादिवाक्येन व्याख्याय, सत्यत्वादीनाञ्छान्दोग्यानुसारेण चेतनाचेतननियन्तृत्वानन्याधीन ज्ञानत्वसार्वज्ञ्यत्रिविधपरिच्छेदराहित्यादिरूपतया तस्य वाक्यस्य चिद्चिद्विलक्षणवस्तुप्रतिपादकत्वेपि व्याख्यानेन विना तदप्रतिपत्तेस्तद्व्याख्यानाय कारणत्व नियमनादिव्यञ्जकमुपदिश्य, आत्मशब्देनाप्यचेतन व्यावर्त्य; आत्मशब्देन किं जीव एवोच्यते उतान्य? 'अन्नात्पुरुष' इति कारणत्वेनोक्तस्यात्मन एव कथ कार्यत्वमुच्यते? कथ चात्मनो भूतोपादानत्व मित्यादिविचिकित्सा प्रतिपत्तॄणा वारयितु विशिष्टोपादानपरत्वस्फोरणाया त्मशब्दो जीवान्तर्यामिपर इति स्थापनाय पञ्चकोशावतारः। तत्राकाशादिशब्दाना पुरुषशब्दपर्यन्ताना वस्तुत परमात्मपरत्वात् प्रसिद्धशरीरमुखेन प्रणाड्या परमात्मानं प्रत्याययितु पुरुषशब्देन विशेषणतया निर्दिष्ट शरीर पृथङ्निर्दिशति "स वा एष पुरुषोऽन्नरसमय" इति। स - 'अन्नात्पुरुष' इत्यत्र उपसर्जनतया निर्दिष्टः, एष — प्रत्यक्षदृष्ट श्शारीराख्य, पुरुषोऽन्नरसमय। अतो न तच्छब्देन कारणपरामर्शः। शरीरद्वारा परमात्मनो लिलक्षयिषितत्वादेव पुरुषशब्दश्शरीरपर एव युक्तः। यद्वा इयमरुन्धतीति स्थूलनक्षत्रवत् 'एषोऽन्नरसमयस्सपुरुषः जगत्कारणभूत आत्मे' ति वा 'अन्नरसमय एष पुरुषस्सजगत्कारण

भूत आत्मे ' ति वा शरीरे परमात्मारोप क्रियते । उत्तरपर्यायेष्वप्यारोपार्थ स एष इत्यनुवर्तनीयम् , अर्थाद्वा तदर्थलाभ । प्रयोजनवशादाहार्यारोप । किञ्च स वा एष पुरुषोऽन्नरसमय ' इत्यस्यास्मदशरीरावच्छेदपरत्वे तत्त प्राचीन वाक्यमनवच्छिन्नात्मपरमिति प्रतीते स्थूलारुन्धतीन्यायेन ज्ञातव्यत्र किञ्चिदिह शेष्यते । प्राचुर्यस्य व्यधिकरणसजातीयापेक्षत्व युज्यत एव । या च विशेषणत्वविशेष्यत्वयोर्व्युत्पत्तिभेदकल्पना, सा आशामोदकमात्रमेव, घनाघपटलरणसमये इदानीं प्रचुरप्रकाश इत्येव बहुश प्रयोगात् , चन्द्रादय प्रकाशप्रचुरस्सविते त्यादिप्रयोगाच्च । अहो नु खलु काकस्य कार्ण्याद्धवळ प्रसाद , यद्घटपदव्युत्पत्त्यनुसारेण पटपदमपि तत्रैव व्युत्पादयितुमुद्युङ्क्ते । नहि मयडेव प्रचुरशब्द । यत्तु समानाधिकरणविजातीयापेक्षाया एव प्राचुर्ये पूर्वपर्याये दर्शनादिहापि तथा भवितव्यमिति , तन्न, तथापि मयडर्थे वैरूप्यस्य तुल्यत्वात् , पूर्वपर्यायेषूपाधिसम्बन्धस्य कार्यतया उपाधिसम्बन्धिन उपाधिविकारत्वमुच्यते, आनन्दमये तूपाधिप्रतिबिम्बितस्योपाध्यवच्छिन्नस्य वानन्दाधीनत्वमात्रेण तद्विकारत्वमुच्यते । इयांस्तु विशेष विकारार्थत्वपक्षे मयडर्थ एव वैरूप्यम् , प्राचुर्यार्थत्वपक्षे न मयडर्थवैरूप्यम् , किन्त्ववधिमात्रमिति । वस्तुतस्तु प्राचुर्ये विवक्षानुसारात सापेक्षनिरपेक्ष च, बहुत्ववत् , यथात्र बहवो वर्तन्त इति निरपेक्षम् , तस्माद्देशादस्मिन् देशे बहव इति सापेक्षम् एवमिहापि क्वचिद्व्यधिकरणसजातीयसापेक्ष क्वचित्समानाधिकरणविजातीयसापेक्ष क्वचिन्निरपेक्षम् । एवञ्च सर्वत्र नैरपेक्ष्यस्यापि सम्भवादानन्दमयस्य जीवत्व सिद्धि । यदि तु प्रकरण बहुमन्यामहे तदा ' सैषानन्दस्य मीमांसे" त्यारभ्य व्यधिकरण जीवानन्दाल्पत्वमपेक्ष्यैव ब्रह्मानन्दस्य प्राचुर्यप्रतिपादनान्न जीवत्वसिद्धि । यदि त्वानन्दमय इति मयडनुसारात् पूर्वेषामपि मयटा व्यधि

करणसजातीयापेक्षामिच्छावस्तदा व्यधिकरणसजातीयांशस्य बाधितत्वात् सापेक्षत्वमात्रं सिद्ध्यति, तच्च सापेक्षत्वं यथाप्रमाणं समानाधिकरणसजातीये नैवोपपादनीयमिति । अवयवित्वं च न ब्रह्मत्वविरोधि, प्रियमोदादि सद्ब्रह्मत्वानन्दत्वरूपोपाधिभेदेन भेदकल्पनया ब्रह्मणोऽप्यवयवित्वरूपणोप पत्तेः। पुच्छपदस्याधारलक्षकत्वे रूपकप्रकरणविरोधः स्पष्टः। एतेन पुच्छि भेदोऽपि निर्व्यूढः, औपाधिकभेदोपपादनात्। यदि स्वाभाविकभेद एष्टव्यः, त्यज तर्हि जीवब्रह्मणोरैक्यम्। पूर्वपूर्वपर्यायेष्ववयविन एव प्राधान्य दर्शनादिहाप्यानन्दमयस्यैव प्राधान्यात्तस्यैव ब्रह्मत्वात् श्लोकस्यापि तद्वि-षयत्वात्, 'असन्नेवे' ति श्लोकानुरोधेन न काप्यनुपपत्तिः। 'तस्यैष एव शारीर आत्मे' त्यत्र उत्तरोत्तरस्य पूर्वपूर्वशारीरात्मत्वपक्षे शारीरा त्मत्वमुपपन्नमेव। पक्षान्तरे प्यात्मत्वानन्दप्राचुर्यरूपोपाधिभेदेन शारीरत्व रूपणादनन्यात्मत्वोपदेशपरत्वाद्वा शारीरत्वमुपपन्नम्। यदुक्तं पूर्वापर-पर्यायस्थानामिवानन्दमयपर्यायस्थितस्यापि "तस्यैष एवे" ति वाक्यस्य पुच्छब्रह्मरूपात्मान्तरपरत्वोपपत्तौ प्रक्रमविरुद्धार्थकल्पनमयुक्तमिति; तन्न, पूर्वपर्यायेष्ववयवातिरिक्तस्यैव शारीरत्वोक्त्या प्रक्रमविरोधस्य त्वन्मते प्यपरिहारात्। शुद्धिश्च यथायोग्यमेव। अत एवेद कर्पूरोदकमिद-मेलोदकमिदमुशीरोदकमिद शुद्धोदकमिति प्रचुरप्रयोग.। कस्य चित्पुरुषस्य कस्मिंश्चित्कोपे सति अयमस्मिन्कलुषहृदय इति वक्तारो भवन्ति, कोपे तु निवृत्ते इदानीमयमस्मिन् शुद्धहृदय इति। केवलशब्दसमा नार्थकतया च शुद्धशब्दो लोके बहुलं प्रयुज्यते। कैवल्यं च यथा विवक्षमिष्यते, यथोचितश्च विवक्ष्यते। ततश्च ब्रह्मण्यनादिभवसञ्चि तानेकजीवापराधकलुषिते मुक्त्यर्थं प्रसादत्वरूपं शोध्यत्वं सम्भवत्येव। तस्मादानन्दमयस्य ब्रह्मत्वे न किञ्चिद्बाधकम्। साधकानि च भूयांसि। तथाहि — अवयवानामवयव्यनन्यत्वमवयवान्तराद्भेदश्च स्वतः प्राप्ते,

तदुभयमानन्दमयेस्त्येव, ब्रह्मणि जन्यानन्दानामपि यथाप्रमाणभङ्गीकारात् । पूर्वत्रापि तथैवोत्सर्गतः प्राप्तम् । क्वचित् बाधात्तदभावे सति तयोरारोपः । किञ्च श्लोकाश्चावयविविषया एव दृश्यन्ते । "तदप्येष श्लोको भवतीति च- तत्- तत्र, एष श्लोको भवतीत्यर्थ- । तत्रेत्यवयव्येव परामृश्यते । अतोऽपि 'तदप्येष श्लोको भवती' ति वाक्यं असन्नेवेति श्लोकश्चानन्दमयविषय एव । मनोमयश्लोको मनोविषय एव, मनस एव अतिशयप्रतिपादकत्वात्, निवृत्त्युक्त्या मसक्तिमुखेनातिशयप्रसिद्धे- । किंच भृगुवल्ल्या 'आनन्दो ब्रह्मे' ति स्थाने 'आनन्दमयमात्मानमुपसङ्क्रम्ये' त्युक्त्या स्थानप्रमाणेन तत्रानन्दमयस्य ब्रह्मत्वसिद्धेरिहापि स्थानसाम्यात्तत्रानन्दमयशब्दार्थनिर्णयाच्चानन्दमयो ब्रह्मैव । नचोपसङ्क्रमणोक्त्या उभयत्राप्यानन्दमयो न ब्रह्मेति वाच्यम्, उपसङ्क्रम शब्दस्य प्राप्त्यर्थकत्वेन हानार्थत्वाभावात् ।

तिष्ठन्त्वेवमाद्याः परश्शता युक्तयः । परस्सहस्रानपि शङ्काशूकानवधूयानन्दमयस्य ब्रह्मत्वसाधने वाक्यशैल्यैव निरपेक्षा प्रभवति । तथाहि—मुमुक्षुज्ञातव्यतया सत्यज्ञानानन्तात्मकतया आकाशादिकारणतया चोक्त परमात्मा क इत्यपेक्षायामरुन्धतीन्यायेन दर्शयितुं वा, आत्मकारणत्वोक्त्या प्रसिद्ध्या जीवस्यैवोपस्थित्या तस्य कथं कारणत्वोपपत्तिरित्यपेक्षायां जीवविलक्षणस्तदन्तर्यामी तच्छरीरक इति सुखप्रतिपत्त्यर्थं शरीरान्तरान्तरात्मान्तरकल्पनया तद्दृष्टान्तमुखेन प्रतिपादयितु वा, पञ्चकोशावतार कृत । पक्षद्वये प्यन्तरात्मतयैव ब्रह्मणो लिलक्षयिषितत्वात् तत्परम्पराया आनन्दमय एव समाप्ते पुच्छतयोक्तेऽन्तरात्मतयानुक्ते परिसमाप्त्यसम्भवाच्च महावाक्यता पर्यनिष्ठाऽऽनन्दमय एव स्वरसतोऽवगम्यते । ननु भूमविद्याया "श्रुत ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदि" त्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिपूत्तरोत्तरमर्थान्तरोपदेश "अस्ति भगवो नाम्नो भूय" इति "वाग्वाव नाम्नोपि भूयसी"

त्यादि प्रश्नप्रतिवचनाभ्यामेवेति, शेल्या प्राण एव समापनेपि विनैव तादृशे प्रश्नप्रतिवचने प्रवृत्तस्य "एष तु वा अतिवदति यस्सत्येनाति वदती" त्यादेस्तुशब्दश्रुत्या "आत्मत प्राणा" इति तत प्राणोत्पत्ति लिङ्गाच्च प्राणादर्थान्तरोपदेशपरत्वमिति तत्रैवात्मोपदेशपर्यवसानमभ्युप गम्यते, नतु प्राचीने प्राणे, एवमिहापि पुच्छब्रह्मण्येव पर्यवसानमस्त्विति चेन्न, — प्राणस्य जीवस्योपादेयत्वद्योतनाय पूर्वानुक्तातिवादित्वोक्त्या शिष्येण तत्रैवोपदेशपरिसमाप्तिशङ्कया प्राणादधिकम्या ऽप्रश्नेपि शिष्यानु जिघृक्षयाऽऽचार्येण "एषतु वा अतिवदति यस्सत्येनातिवदती" त्युपदेशात् भूयस्त्व सत्यस्यावगम्यते, इह तु सर्वपर्यायसाधारणपुच्छावयवत्वोपदेशे सति कथमन्तरात्मोपदेश पुच्छपर्यन्त इत्यवगम्येतेति ।

परपक्षे च दोषा भूयास — "स वा एष पुरुषोन्नरसमय" इत्यत्र 'एष' इति प्रत्यक्षविषयस्वरसस्य परोक्षविषयत्वाङ्गीकार, तच्छब्दस्य व्यवहितपरत्वाङ्गीर, "अन्नरपुरुष" इति साध्यसाधनभावस्य मुख्यत्वे सम्भवत्यपि पुरुषपरस्यात्मपर्यन्तत्वाङ्गीकारेणामुख्यसाध्यत्वाङ्गीकार, "अन्न रसमय' इत्यत्र मुख्यविकारार्थत्वे प्राचुर्यार्थत्वे वा सम्भवत्यप्यमुख्यविका राङ्गीकार, मयटपञ्चकेऽप्यस्वरसार्थाङ्गीकार, वाक्यस्वरसतात्पर्यविरुद्धस्य प्रकान्तान्तरात्मोपदेशसमाप्ते पुच्छनिष्ठत्वस्याङ्गीकार, "सोकामयते" त्यत्र तच्छब्दस्य पुलिङ्गस्य सन्निहितानन्दमयपरत्वे सम्भवति व्यवहितात्म परत्वाङ्गीकार, श्रुत्यन्तरविरुद्धार्थाङ्गीकार, प्रकरणावगतस्य रूपणस्य त्याग, "तदप्येष श्लोको भवती" ति स्वरससिद्धस्य प्राकरणिकस्या नयाविविषयत्वस्य परित्याग, श्लोकस्यापि तादृशस्यैव तस्य परित्याग, विज्ञानमयतच्छ्लोकयो स्वारसिकात्मविषयत्वपरित्याग, "अन्योन्तर आत्मे" त्यत्र स्वाभाविकभेदार्थकत्वे सम्भवत्यपि तत्परित्यागश्चेति ।

एवमादिन्यायानभिप्रेत्यैव सर्वज्ञशिरोमणिना महामीमासकेन ब्रह्मर्षिणा भगवता वेदाचार्येण "आनन्दमयोऽभ्यासादि" त्युक्तम् ।

यदि तत्सूत्रमपि शून्यवादादिपरतया योजयन्ति, न तान्प्रतिषेधाम । परन्तु श्रुतिपरमाचार्यद्रोहिणो नरकार्चिष्मदिन्धनभूतानल्पश्रुता स्तान्प्रति भृश शोचाम । "आत्मद्रुहममर्याद मूढमुज्झितसत्पथम् । सुतरामनुकम्पते नरकार्चिष्मदिन्धनमि" ति वचनात् । परमात्मान श्रुतिर्यथा प्रतिपादयति ततोन्यथा जल्पनादात्मद्रोह स्पष्ट । सूत्रयोजनायाममर्यादता सुस्पष्टा । वृत्त्यतिलङ्घनादुज्झितसत्पथत्वमतिस्पष्टम् । एभिर्हेतुभिर्मौढ्य स्फुटम् ।

योजनान्तरेपि निरन्तरभूङ्गस्खलितान्यसन्दर्भगतानन्दाभ्यासस्यैव शीघ्रोपस्थितेरभ्यासपदस्यान्यपरता न युक्ता । किञ्चानन्दशब्दाभ्यासमात्रेण कथ पूर्वपक्षनिरास ? जीवस्याप्यानन्दरूपत्वात, घटाकाशस्याकाशत्ववदानन्दस्योपाधियोगे ऽप्यानन्दत्वानपायात्, तथा सति मनुष्यानन्दादेरसिद्धिप्रसङ्गात्, जीवस्य स्वस्मिन्परमप्रेम्णो विरहप्रसङ्गाच्च । किञ्च ब्रह्मणि शारीरत्वासम्भवाङ्गीकारेण परिहारोनुपपन्न, जीवस्य शारीरत्वे ब्रह्मणोपि तस्यावर्जनीयत्वात् । नहि घटाकाशधर्म आकाशे नास्ति । द्वितीयसूत्रे किं प्राचुर्य व्यक्तिबाहुल्यम्, अथवा ऽऽनन्दवल्ल्युक्तरीत्या स्वरूपोत्कर्ष ? नाद्य, व्यक्तिबाहुल्यस्य जीव एव सम्भवेन पूर्वपक्षस्यैव स्थैर्यात् । द्वितीयेपि उत्कर्ष किमानन्दगतापकर्षप्रतियोगिक, उत उपाधिगतापकर्षप्रतियोगिक ? नाद्य, आनन्दभेदानङ्गीकारात । न द्वितीय, उत्कर्षस्य विजातीयगतापकर्षप्रतियोगिकत्वासिद्धे । तस्मादानन्दवल्लीनिरूपणीयोत्कर्षापकर्षाणामुपाधिगतत्वावश्यम्भावेन चतुर्मुखानन्दादुत्कर्षोप्युपाधिगत एवेति प्राचुर्यमप्यानन्दमयस्य जीवत्वमेव हि साधयेत् । किञ्चानन्दत्वप्राचुर्ययोर्जीवे ऽनुपपत्तावपि ब्रह्मरूपेण तत्सम्भवत्येव, यथा ब्रह्मणो जीवरूपेण मियमोदादिसम्बन्ध ।

एतेन तृतीयमपि निरस्तम्, चकारानन्वयाच्च । परमसाध्यान्वय एव हि चकारोऽर्थवान्, समुच्चेतव्यसद्भावात् । ननु प्राचुर्ये मयड्विधानमात्रान्न प्रकृते प्राचुर्यार्थसिद्धिः, प्रकृते प्राचुर्यस्यासिद्धौ तदर्थकत्वासम्भवात्, अतः प्राचुर्ये मयड्विधानं प्रकृते तत्सम्भवश्चेति उभयं समुदितमेव हेतुः, अतो हेत्वंशसमुच्चयार्थश्चकार इति चेन्न; - "विकारशब्दान्नेति चेदि" त्यत्र पूर्वसूत्रप्रतिज्ञातं नेति शङ्कितं 'न प्राचुर्यादि' ति नञा निषिध्यते, प्राचुर्यादित्यत्र शङ्काखण्डेन मयट उपस्थितत्वात् प्राचुर्यस्य तत्सम्बन्धित्व प्रतीयते, ततश्च मयटः प्राचुर्यार्थत्वाच्छंकितन्नेति परमसाध्यप्रतिज्ञैव हि स्यात्, अतोऽवान्तरप्रतिज्ञान्तराभावात् परमसाध्यहेत्वपेक्षयैव समुच्चयः । किंच " एष ह्येवानन्दयाति " त्येतत् कथमानन्दप्राचुर्योपपादकम्? अप्रचुरानन्दः कथमानन्दं ददात्विति चेत्, हन्त किं कुसूलस्थमानन्दं यावज्जीवं स्वोपजीवनाय निधायैवार्थिने मात्रयानन्दं ददातीत्यभिमतम्, येनैवमात्थ । किमीश्वर प्रचुरदुःख एव दुःखं ददाति, किंवा गौरी पुत्रवत्येव पुत्रन्ददाति? तस्मादयमपन्याय एव । चतुर्थसूत्रे मान्त्रवर्णिकमानन्दमयशब्देनोच्यत इत्यनुपपन्नम्, मान्त्रवर्णिकं निर्विशेषमिति पराभिमतेरानन्दमयस्य सविशेषत्वस्य मयटैवावगमाज्जीवपरत्वावश्यम्भावस्य स्थापितत्वाच्च । पञ्चमसूत्रे हेतौ परमसाध्येन संयोजनमनुपपन्नम्, चकाराश्रवणात् । अस्मिन् खल्वधिकरणे प्रधानहेतुपरेषु सर्वत्र समुच्चयार्थश्चकारः श्रूयते, अत्र तदनुपलम्भात् किंचिदवान्तरसाध्यमन्वेष्टव्यम्, तच्च साध्यमितरस्य जीवस्य मान्त्रवर्णिकत्वनिषेधः । षष्ठे "अन्योऽन्तर आत्मानन्दमय" इति स्पष्टमुपलभ्यमाने तद्विहाय, भेदव्यपदेशपदस्य यत्किंचित्परत्वमनुपपन्नम् । सप्तमे प्रधानस्याप्रसङ्ग एव । नच हेत्वन्तरेण निरासार्थमिह प्रसङ्गात्पुनस्तन्निरास इति वाच्यम्, 'ईक्षते' रित्युक्तहेतोरेव 'कामादि' ति पुनःकीर्तनात्, अपेक्षापदवैयर्थ्याच्च । चरमसूत्रे तदुदाहरणयोस्तदुक्तार्थवैमनस्यं स्पष्टमेव । प्रथम

पदवैयर्थ्याद्योगशब्दास्वारस्याच्च । किंच योगशब्दस्याभेदपरत्वे जीवभिन्नत्वमानन्दमयस्य कुतः स्यात् ? प्राप्यप्राप्तृभेदस्यावश्यकत्वादिति चेन्न; अभेदस्यैव प्राप्यत्वेन तदसिद्धेः । अभेदस्य साध्यत्वात्ततः प्राग्भेदो वाच्य इति चेत् ? सभेदः किमभेदेन विरुद्धयते, उत न ? आद्ये मोक्षस्य कादाचित्कतया मोक्षदशायामपि भेदप्रसङ्गः, कादाचित्काभेदस्य ब्रह्म स्वरूपत्वासम्भवात्; अविरोधे सर्वदैवाभेदसम्भवेन उत्तरकालं भेद सम्भवेन च प्राग्भेदो वाच्य इत्यनुपपत्तेः । श्रुतौ च प्रतिष्ठाशब्दो नाभेदपरः, तत्राव्युत्पत्तेः; किन्तु ज्ञानपरः, "ब्रह्मसंस्थोऽमृतत्वमेति" "श्रोत्रियं ब्रह्मनिष्ठमि" त्यादिप्रयोगात् । अन्तरशब्दश्च भगवज्ज्ञान विच्छेदपरः । अनेनाविच्छिन्नस्मृतिसन्तानरूपस्य ध्यानस्य मोक्षसाधनत्व मुक्तं भवतीति ।

अपरपक्षे किं सूत्रमन्नमयादीनामपि बोधकमिति विवक्षितम्, उत न्यायतौल्येनान्नमयादीनामपि परमात्मत्वसिद्धिरिति ? नाद्य, आनन्दमय शब्दस्य तद्बोधनासामर्थ्यात् । उपलक्षणत्वे स एव दोषः । उपलक्षणत्व चान्नमयेनैव युक्तम्, प्राथम्यात् । यदुक्तम् 'ब्रह्मण आनन्दमया वयवत्वेनोक्तेर्नानन्दमयो ब्रह्मेति पूर्वपक्षयुक्त्याधिक्यात् प्रधानेवयविन्या नन्दमये सति तदवयवत्वेन श्रुतस्य ब्रह्मणः कथं जिज्ञास्यत्वमित्याक्षेप रूपसङ्गतेश्चानन्दमयग्रहण' मिति; तन्न, "अन्नात्पुरुष" इत्यस्य 'अन्न मय' इत्यत्र मयटो विकारार्थतानिर्धारकत्वात् उत्तरत्र मयटो विकारार्थ तायास्तन्मूलत्वात्, "सवा एष पुरुषोऽन्नरसमयः" "इदमेव शिर" इत्याद्यपरोक्षनिर्देशरूपपूर्वपक्षयुक्त्याधिक्यात्, गतिसामान्याक्षेपरूपाया स्त्वदभिमतायास्सङ्गतेः कारणत्वश्रवणेनान्नमयेपि सत्त्वेनान्नमयग्रहणस्यैव युक्तत्वात् । युक्तिश्चासिद्धा, "सोकामयत" त्यादिनानन्दमयस्य जगत्कारणत्वश्रवणात्, "असन्नेव सभवती" त्यादिना ब्रह्मशब्दाभ्यासाच्च "ब्रह्मपुच्छ" मित्यत्र ब्रह्मशब्दस्य दुर्बलतया तस्यैव गौणत्वावश्यम्भा

वात्। किंच एतदधिकरणराद्धान्तात् प्राग्जगत्कारणभूतं सर्वस्मात्परं विष्ण्वाख्यं ब्रह्मशब्दमुख्यार्थभूतं वस्तु सिद्धं न वा? आद्ये ब्रह्मणः कथमजिज्ञास्यत्वम्, जिज्ञास्यत्वप्रयोजकस्य कारणत्वादेरवयवत्वेपि सत्त्वात्। यद्यवयवत्वमेव जिज्ञास्यत्वविरोधि, तदा 'सोकामयते' त्यादिना जगत्कारणत्वेन श्रुतस्य 'असन्नेव स भवती' त्यादिना ब्रह्मशब्दाभ्यासवत आनन्दमयरूपस्य परब्रह्मणोवयवे ब्रह्मशब्दप्रयोग इति वा, 'सोकामयत' 'असन्नेवे' त्यादिवाक्यपरामर्शे 'तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायत' इत्यत्रैव ब्रह्मशब्दः परब्रह्मान्यविषय इति वा स्यादिति कथं जिज्ञास्यत्वाक्षेपः। द्वितीये ब्रह्मशब्दाभ्यासरूपसिद्धान्तहेतूपन्यासासम्भवः। ब्रह्मणो जिज्ञास्यतायां कारणतायां यद्गतिसामान्यमुक्तम्; तदयुक्तम्, ब्रह्मप्रत्ययविन आनन्दमयस्य 'सोकामयते' त्यादिना कारणत्वावगतेः; कारणस्यैव च जिज्ञास्यत्वनियमादिति पूर्वोक्ताक्षेपेण पूर्वपक्षप्रवृत्तेराक्षेपिकी सङ्गतिरित्यवान्तरसङ्गत्युपपादकत्वदुक्तिविरोधश्च। किंचात्रानन्दमये परमात्मत्वनिरूपणे सति तुल्यन्यायेनान्नमयादावपि परमात्मत्वं सिद्ध्यति, नवा? मुधैवोभयथापि लक्षणा। नापि द्वितीयः, अभ्यासस्य हेतुत्वेनाभिधानात्तस्य ब्रह्मशब्दाभ्यासरूपतायास्त्वयाभिधानाच्च तस्यान्नमयादावसिद्ध्यान्नमयादावेतन्न्यायाप्रवृत्तेः। यच्च ब्रह्मशब्द एव हेतुतया विवक्षितः, विज्ञानमयानन्दमययोर्ब्रह्मशब्दाभ्यासस्यापि सत्त्वात्तत्कीर्तनमित्युक्तम्; तन्न, ब्रह्मशब्दाभ्यासाच्चेत्यनुक्तेः, अतोभ्यासस्यैव हेतुतया कीर्तनादेतन्न्यायविषयत्वमन्नमयादीनामनुपपन्नम्। अथ स्यात्, प्रतिपर्यायं ब्रह्मशब्दप्रयोग एवाभ्यास इति विवक्षित, आनन्दमयशब्दश्चोपलक्षणमेव, ततश्चान्नमयादयः परमात्मा, प्रतिपर्यायं ब्रह्मशब्दप्रयोगादिति; तन्न, तथा सति ब्रह्मशब्दस्यैव हेतुतयाभ्यासपर्यन्तधावनवैयर्थ्यात्। ततश्चाभ्यासपदग्रहणेन विना यो हेतुर्न प्रतीयेत स एव हेतुतया विवक्षित इति वाच्यम्। स च प्रागेव दर्शितः। श्रुतिविरुद्धञ्चान्नमयादीनां परमा-

रमत्वम्, 'अन्नात्पुरुष' इत्यत्रप्रकृतत्वेनोक्त 'स वा' इति परामृश्य 'एष' इत्यपरोक्षनिर्देशेन, इद शिर अय पक्ष अयमात्मा इद पुच्छ मित्यपरोक्षनिर्देशेन च प्रसिद्धशरीरस्यैवात्रसमयत्वावगमेन तस्य परमा त्मत्वासम्भवात् । प्रतिपर्याय 'अन्योन्तर आत्मे' ति निर्देशश्च धर्मि भेद एव स्वरस ।

यदुक्त 'आत्मन आकाशस्सम्भूत" इत्यात्मशब्देन मान्त्रवर्णिक ब्रह्मोच्यते, आकाशशब्देन भूताकाशतदभिमानिदेवता तद्विग्रहेतत्रितयान्तर्यामिणो गृह्यन्ते, 'आकाशाद्वायु' रिति मुख्या मुख्यभेदेन चतुर्विधादाकाशादुक्तविधया चतुर्विधस्य वायो सृष्टिरुच्यते, एव 'वायोरग्नि' रित्यादिकमपि योज्यम्, 'अन्नात्पुरुष' इति चतुर्विधा दन्नाच्छरीरतदभिमानितदन्तर्यामिरूपस्य त्रिविधस्य पुरुषस्य सृष्टिरुच्यते, अत्र सर्वत्र 'सम्भूत' इति यथायोग्यमुत्पत्तिप्रादुर्भावावुच्येते, 'स वा एष पुरुष' इति प्रकृतमपि भूतादिक सर्वन्त्यक्त्वा आत्मादि देहपर्यन्तमागत तेन तेन शब्देन प्रकृत हरिमेव परामृशति, तस्यैव सृष्टिकर्तुश्शरीरेऽन्नमयादिपञ्चरूपत्वज्ञापनाय 'स' इत्यात्मपदोद्दिष्ट परामृश्यते, 'एष' इति जीवशरीरग परामृश्यते, प्रत्यक्षे जीवशिरआदौ ईश्वरशिर प्रभृतीना व्यवस्थिते 'इदमेव शिर' इत्यादिनिर्देश अप्रत्यक्षेपि वस्त्रप्रावृते प्रत्यक्षवस्तुसन्निधानादिदमिति निर्देशवत्, 'अन्योन्तरआत्मे' ति निर्देशश्च विशेषनिबन्धन, इति, तत्र किमाकाशादिशब्दा अक्षादिशब्दवच्छक्तिप्रवृत्तिनिमित्तभेदेन भूता काशादिनानार्थान् बोधयन्तीति विवक्षितम्, उतैकेन प्रवृत्तिनिमित्तेनैकया शक्त्या इमानर्थान् बोधयन्तीति ? आद्ये एकस्य प्रयोगस्यैकार्थ्येनैव चारितार्थ्यादनेकार्थबोधनासम्भव । क्वचिन्मन्त्रादावेकस्मिन्प्रयोगे नानार्थ त्वाङ्गीकारो निरुक्तिवचनप्रामाण्यात् । तादृशनियामकाभावेप्येकस्मि न्प्रयोगेनेकार्थबोधनाङ्गीकारे धात्वादिभेदेन बह्वर्थनियमनमसम्भवात् बहु

सामंजस्यम् । मुख्यार्थप्रतीतावप्यमुख्यार्थप्रतीत्यङ्गीकारे अमुख्यत्वात्परित्यागः क्वापि न स्यात् । द्वितीयेपि किं प्रवृत्तिनिमित्तं शक्तिर्वा एकैकत्र परिसमाप्य वर्तते, उत द्वित्वादिवद्व्यासज्य ? आद्ये कथं सर्वव्यक्तिबोधः । तादृशप्रवृत्तिनिमित्ते च न मानम् । न द्वितीयः, शक्तेर्व्यासज्यवृत्तौ तादृशधर्मे च मानाभावात् । किंच भगवत आकाशादिशब्दार्थत्वेऽर्थान्तराणि किमर्थमिष्यन्ते ? किं युगपद्बोधनियमात्, उत प्रयोजनवशात् ? आद्यमसिद्धम् । द्वितीये किन्तत्प्रयोजनम् ? शरीरे सृष्टिकर्तुरन्नमयादिपञ्चरूपप्रतिपादनमिति चेत्? मामूत्तत्प्रयोजनम् । नहि प्रयोजनानुसारि प्रमाणम्, किन्तु प्रयोजनमेव प्रमाणानुसारि । किञ्चैवमपि देवताविग्रहयो. किमर्थः परिग्रहः । अपिच पञ्चानां विग्रहाणां शरीरे सत्त्वे न किञ्चिन्मानम् ! ऋगादीनाञ्च कथं शरीरान्तर्वर्तिता ? कथञ्च शिर प्रभृतिरूपता ? ऋगादिशब्दानां प्रसिद्धार्थं परित्यज्याप्रसिद्धार्थकल्पनं च न प्रमाणपदवीमधिरोहति । 'स वा एष पुरुषविध एवे' ति प्रथमपर्याये न श्रुतम्, किन्तु द्वितीयादावेव, अतोनेन वाक्येन रूपणमेवावगम्यते । एवशब्द इवार्थः, अन्यथा वैयर्थ्यात् । पुरुषे चक्षुरादिविधान्तराणामपि सत्वाच्छिर प्रभृतीनामेव रूपणमिति ख्यापनार्थं 'तस्य पुरुषविधताम्, अन्वयं पुरुषविधः' इत्युक्तम् । पूर्वोक्तपुरुषविधानुसारेणै वैतत्पुरुषविधस्वरूपणमित्यर्थ । एव च शरीरे कथं पञ्चविग्रहसिद्धि । यदुक्तं—स एष आनन्दमय. पुरुषाकार एव, तस्यानन्दमयस्य पुरुषाकारतानुसारेणायं विज्ञानमय. पुरुषाकार. तस्मादुद्भूत इत्यर्थ इति ; तन्न, उद्भूतत्वबोधकपदाभावात् । 'तस्य पुरुषविधताम्, *अन्वयं पुरुषविध' इति 'तस्ये' त्यनेन पूर्वपर्यायोक्तपरामर्शस्यावमित्यने*नैतत्पर्यायस्थपरामर्शस्य च स्वरसत्वाच्च । विशेषस्यान्यशब्दनिबन्धनत्वं चानुपपन्नम्, विशेषो हि भेदकार्यकर इत्युक्तम्, ततश्चाभेदेन विरोधस्यापि भेदकार्यत्वाद्भेदे सति भेदवदेव विशेषस्यासम्भव । भेदव्यवहारस्य भेदकार्यत्वविवक्षायान्न विशेषस्य भेदव्यवहारजनकत्वमात्राप

नर्भीत्यादिमुखेन । अतो भेदव्यवहारजनकत्व भेदव्यवहारविषयत्वमेध । तत्र किं भेदव्यवहारो विशेषे मुख्य, उतामुख्य ? मुख्यत्वे किं भेदशब्द एकार्थ, उत नानार्थ ? आद्ये विशेष एव भेद स्यात् । अन्त्यस्त्वसिद्ध, मानाभावात् । न द्वितीय, प्रकृते मुख्ये बाधकाभावात । नटु मुख्यार्थग्रहणे बाधकमस्ति, तथाहि अन्नमयादिपर्यायेपु 'येन्न ब्रह्मोपासते' 'ये प्राण ब्रह्मोपासते' 'आनन्द ब्रह्मणो विद्वान्' 'ब्रह्म ज्येष्ठमुपासते' 'विज्ञान ब्रह्म चेद्वेदे' ति ब्रह्मशब्द श्रूयते, तथा 'एतमन्नमयमात्मानमुपसंक्रामती' त्या त्मशब्दो मुक्तप्राप्यत्वञ्च श्रूयते, नच शरीरपरिग्रहे तद्युज्यते, 'तस्येद मेवशिर' 'अयन्दक्षिण पक्ष' अयमुत्तर पक्ष, अयमात्मा, इद पुच्छ प्रतिष्ठे' त्युपदेशश्च व्यर्थ, शरीरशिर प्रभृते प्रत्यक्षत्वेन उपदेशानपेक्ष णात्, 'अद्यतेत्ति च भूतानि तस्मादन्न तदुच्यत' इति चानुपपन्नम् भूतात्तृत्वभूताद्यत्वयोश्शरीरेऽसम्भवात्, 'सर्ववै तेनमाप्नुवन्ती' त्यन्नमय ज्ञानान्मोक्ष श्रूयते, नच शरीरज्ञानान्मोक्षस्सम्भवति, किंच 'सर्वमेव त आयुर्यन्ती' ति प्राणमयज्ञानान्मोक्ष श्रूयते, कदापि मरणाभावो हि सर्वमायु, नचासौ विना मोक्षाद्युज्यते तथा 'प्राणदेवा' इति सर्वदेवचेष्ट कत्व प्राणमयस्य श्रूयते, नच तदुभय प्राणपरिग्रहे युज्यते, किंच 'यतो वाचो निवर्तन्त' इति वाङ्मनसागोचरत्वम्मनोमयस्य श्रूयते, तथा 'विज्ञान देवास्सर्व, ब्रह्म ज्येष्ठमुपासत' इति सर्वदेवोपास्यत्व ज्येष्ठत्व च विज्ञानमयस्य श्रूयते, नच कोशपरिग्रहे तद्युज्यते, इतिचेत् ? उच्यते । न तावदन्नब्रह्मशब्दसामानाधिकरण्यानुपपत्ति, 'एष' इति प्रत्यक्षसिद्धस्य शरीरस्योपक्रम एवान्नमयपर्याये निर्देशात्पर्यायान्तरेपूपक्रमे 'एतस्मा दन्योन्तरआत्म' ति निर्देशाच्चोपक्रमानुसारेणोपसंहारस्यस्य ब्रह्मशब्दस्य नेयत्वात्, मनोमयविज्ञानमययोश्च न ब्रह्मशब्दप्रयोगोस्ति, 'यतोवाच' इत्यस्यार्थ प्रागेव वर्णित विज्ञानस्यैकस्यायमर्थ —विज्ञानशब्देन जीव उच्यत, यच्छब्दो विहितकर्मापलक्षक कर्माणीति निषिद्धकर्मपर, अनेन

कर्मवश्यत्वमुक्तम्, निरुक्तोभयविधपाप्मनिवृत्त्युपायं सदाचारं प्रदर्श्य त्वाह 'विज्ञानन्देवा' इति, विज्ञानशब्दो ब्रह्मविशेषणम्, 'विज्ञानंब्रह्मे' ति विज्ञानशब्दः कर्तृनिर्देशकः, कर्माकाङ्क्षायां ब्रह्मपदेन शान्ते· कर्त्राकाङ्क्षाया निवर्तकान्तराभावाच्च, देवग्रहणेन तेषामेवोपासनाधिकार इति भ्रमं वारयितुं विज्ञानमिति जीवमात्रनिर्देशः कृतः, 'पाप्म न' इति 'न सुकृतन्न दुष्कृतं सर्वे पाप्मानोतो निवर्तन्ते' इत्युक्तयोरिह यज्ञकर्म शब्दनिर्दिष्टयोस्सुकृतदुष्कृतयोर्ग्रहणम्, 'एतमन्नमयमात्मानमुपसंक्रामती' त्यत्रात्मशब्दः प्राप्यपरान्नमयादिशब्दानां परमात्मपर्यन्ततां ख्यापयितुम्, पूर्वमन्नमयादिसामानाधिकरण्येन क्वाप्यात्मशब्दाप्रयोगात् इह च प्राप्ये सर्वत्रान्नमयसामानाधिकरण्येनात्मशब्दप्रयोगाच्च पूर्वं कोशमात्र तात्पर्यमुत्तरत्र परमात्मतात्पर्यं च स्पष्टमेवावगम्यते; 'तस्येदमेव शिर' इत्याद्युपदेशश्च उत्तरपर्यायेषु एभिरेव शिरःप्रभृतिभिः पञ्चभिरवयवैः पुरुष विधत्वं रूपयिष्यत इति ज्ञापनार्थः; 'अद्यतेत्ति च' त्यत्र भूतश्शरीरिभि रन्नमद्यते भूतानि शरीरिण अन्नमात्राधिक्यादत्ति - हिनस्तीत्यर्थः, अतो नात्तृत्वाद्यनुपपत्तिः; 'सर्वे वै तेन्नमाप्नुवन्ती' त्यत्रान्न ब्रह्मतयोपासीनस्य सर्वविधान्नप्राप्तिरेवोच्यते. अन्यस्यान्यथोपासन च स्थापयिष्यते; 'सर्वमेव त आयुर्यन्ती' त्यत्रापि न मोक्ष उच्यते, आयुश्शब्दो हि द्वादशमास परिमितजीवनकालपरः, स च कालो मोक्षे नास्त्येव, अत आयुश्शब्द एव सांसारिकं फलं द्योतयति; सर्वशब्दश्शतसङ्ख्यापरः, 'शतायुः' पुरुष' इत्यभिधानात्; 'प्राणन्देवा अनुप्राणन्ती' त्यत्र प्राणाधीनजीवनमेव स्वरसतो वगम्यते, अतो नार्थान्तरोत्प्रेक्षावकाश; तस्मादन्यशब्देन भेद एव गृहीतुं युक्त, न तु तदतिरिक्तो विशेष. । यच्च विशेषसमर्थनम्, 'विज्ञानमानन्दं ब्रह्मे' त्यत्र विज्ञानत्वानन्दत्वब्रह्मत्वानां धर्माणां धर्मिणो वा भेदा भावेन विज्ञानादिशब्दानामपर्यायत्वाय विशेषो ऽङ्गीकरणीयः; किंच भेद प्रतिनिधिविशेषस्याभावे धर्मधर्मिभावो धर्माणामनेकत्वं च न युक्तम्. धर्म

धर्मिणोर्धर्माणाच परस्परं भेदाभावात्, अयञ्च विशेषो वन्दरभिन्न इति; तत्र न तावद्विज्ञानादिशब्दानामपर्यायत्वाय विशेषकल्पनम्, धर्म्यभिन्नेन विशेषेणेव धर्म्यभिन्नैर्धर्मैरेवापर्यायत्वोपपादनसम्भवात्, नापि धर्मधर्मिभावाय धर्मानेकत्वाय वा तत्कल्पनम्, भेदस्य धर्मधर्मिभावधर्मानेकत्वयोरुपपादकत्वे तदभावे तदनुपपत्ते, यदि भेदाभावधर्मधर्मिभावयो प्रमाणसिद्धयोरुभयोरप्यपह्नवासम्भव, तर्हि भेदो न धर्मधर्मिभावप्रयोजक, व्यभिचारात्। यदि च तत्र स प्रयोजक, तर्हि प्रयोजकाभावेऽपि प्रयोज्यसिद्धिं कथ मन्यसे। प्रयोजकान्तरेणेति चेत्? किं तद्वस्तु तस्य प्रयोजकत्वञ्चान्यत्र क्लृप्तम्, किंवात्रैव कल्प्यते? नाद्य, असिद्धे। न द्वितीय, लाघवेनात्र प्रयोजकनैरपेक्ष्यस्यैव कल्पयितुमुचितत्वात्। तस्माच्छ्रुतिविरुद्धमन्नादीना परमात्मपरत्वम्। द्वितीयसूत्रमभ्यासग्रहणस्य ब्रह्मशब्दगोचरता वारयति। हेत्वाक्षेपसमाधानार्थत्वे सूत्रास्य सन्निवेशोपपत्ति। हेत्वाक्षेपकत्वञ्च मय डर्थस्य हेतुत्व एव। अतो मयडर्थमात्रयोरुपपादकाभ्यास एव हेतुतया विवक्षित, न तु ब्रह्मशब्दाभ्यास इति। तृतीयसूत्रे तच्छब्दाम्वारस्य स्पष्टम्। 'कोह्येवान्या' दित्यत्र च 'एष ह्येवानन्दयाती' त्युत्तरवाक्यानुसारादन्नप्राणनयोरैहिकामुष्मिकानन्दरूपता स्वरसतोऽवगम्यते, अतोऽर्थान्तरकथनमनुपपन्नम्। चतुर्थसूत्रे मान्त्रवर्णिकस्यानन्दमयपदेनैव गानादन्नमयादिशब्दैरपि गीत इत्यसङ्गतम्, अन्नमयादीनामब्रह्मत्वस्य स्थापनात्। पञ्चमसूत्रार्थो प्यनुपपन्न, 'सर्वे वै तेऽन्नमाप्नुवन्ती' त्यादीना मोक्षपरत्वाभावस्योक्तत्वात्। सप्तमसूत्रे ऽपेक्षापदमस्वरसम्। अष्टमसूत्रेऽस्मिन्निति व्यर्थम्, तद्धेतुव्यपदेशादित्यादावविवाधिकरणग्रहणाभावेऽपि प्रकृतत्वादेवाधिकरणलाभात्।

अन्येषामेकदेशिमते तद्धेतुव्यपदेशाच्चेत्यत्र यो विशेष उक्तस्सोऽनुपपन्न, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती" त्यत्र जीवाना

ब्रह्मानन्दाश्रयत्वे जीवानन्दे नाशोत्पत्तितरतमभावा. जीवस्य किञ्चिज्ज्ञत्वा दीनि न विरुद्धेरन् , ज्ञानस्यैवानन्दरूपत्वात् । ब्रह्मगतसार्वज्ञ्यस्य जीवे प्रसङ्गे तस्य किञ्चिज्ज्ञत्वविरोधः । तारतम्येनाभिव्यक्ते. सर्वमुपपद्यत इति चेत् ? किमभिव्यक्तौ तरतमभावो विवक्षित.? तथा सत्यानन्दस्यैव स्वाभिव्यक्तिरूपतया तत्र नानात्वानित्यत्वतरतमभावा. ब्रह्मणि किंचि ज्ज्ञत्वं जीवे सर्वज्ञत्वञ्च प्रसज्येरन् । अभिव्यक्तेरन्यत्वेपि तस्यान्तरत मभावो विषयबाहुल्याल्पत्वाभ्या वाच्यः, सोनुपपन्न , अभिव्यङ्गचस्या नन्दस्यैकत्वात् । किञ्च - अस्यानन्दस्य ब्रह्मण्यभिव्यक्त्यन्तरापेक्षाऽस्ति नवा? आद्ये स्वप्रकाशत्वभङ्ग. । द्वितीये कुतो जीवेऽभिव्यक्त्यन्तरापेक्षा । ततश्च विकल्पा एव पूर्वोक्ता दोषाः । अभिव्यक्त्यन्तराङ्गीकारे गौरवमधिकम् । अथ तरतमभावेनाभिव्यक्तिर्नाम — तरतभावविशिष्टतयाभिव्यक्ति ; तत्र किमभिव्यक्तिस्तत्रोत्पत्ति. तत्र सत्वं तत्र प्रतीतिर्वा स्यात् ? आद्ये व्याघात., नहि ब्रह्मानन्दस्यात्रोत्पत्तिसम्भव. । द्वितीये तत्तदधिकरणावच्छेदेन तरतमभाव उत्पद्यत इति स्यात् , तत्तु व्यक्त्यैक्ये सत्यनुपपन्नमेव । तृतीये यदि सा प्रमा तदा दोषतादवस्थ्यम् , यदि भ्रमस्तदा 'अधिकन्तु प्रविष्टन्न तद्धानिकर' इति न्यायेन सर्वेषान्निरतिशयानन्दत्वमपरिहार्यम् । तरतमभावारोपस्तत्स्वरूपतिरोधानेनैवेत्युक्तावानन्दाप्रकाश प्रसज्यते , निरवयवत्वात् । किञ्चिस्स्वरूपन्तिरोहितम् , किञ्चित्प्रकाशत इत्युक्तच सम्भव., तरतमभाववैयर्थ्यं च । अथ तरतमभावोपन्नान्त करणवृत्त्यव च्छेद एव तारतम्येनाभिव्यक्ति ? तथा सति जीवानन्दस्य ब्रह्मानन्दात् अविशेष । उपाधिगतस्यात्रारोपे तूक्त एव दोष । अथ ब्रह्मानन्दस्य सर्वगतस्यानुभवेन कस्यचित्प्रीतिमान्द्य कस्यचिदुत्कर्षश्च तारतम्येनाभि व्यक्तिः; तथासत्येतस्यैवेत्यवधारणविरोध । अवधारणेन जीवे ब्रह्मानन्दा तिरिक्तानन्दस्य निषेधात् । ननूपजीवन्तीति ह्युच्यते, न तु तदानन्दे-

नानन्दिन इति, ततश्चोपजीवन्तीति तमेवानन्दं भुञ्जत इत्यर्थः, इति; तन्न, स्रक्चन्दनादिभोगानुभवविरोधात् । तस्मादियं श्रुतिरानन्दवल्लीव चतुर्मुखाद्यानन्दानां ब्रह्मानन्दापेक्षया खद्योतकल्पत्वपरा । " रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवती " त्यत्रापि भगवतो भोग्यत्वमेव प्रतीयते, नतु तदानन्देनानन्दवत्त्वम् । रसेनानन्दवत्त्वोक्तावपि ब्रह्मणैवानन्दवत्त्वं स्यात् , नतु ब्रह्मानन्देन । तस्मात् , ' रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवती ' ति महानन्दलक्षणमोक्ष उक्तः । स कुतो भवतीत्यपेक्षायां 'एष ह्येवानन्दयाती ' त्युच्यते । तदुपपादकं 'कोह्येवा न्यात्कः प्राण्यादि ' ति । प्रकर्षेणानन्दः सुखेन जीवनम् । तस्मादानन्द यितत्र्यानन्दमिन्नोरनेन सन्दर्भेण भेदप्रतीतिस्सूत्रे विवक्षिता । सा च परमसाध्य एव हेतुः ।

एकदेश्यन्तरमते गुहाविवरणरूपता कुतः प्रतीयते ? यदि 'गुहायां परमे व्योमान्नि ' ति अधिकरणद्वयनिर्देशादुत्तरत्राप्यधिकरणद्वयं निर्दिश्येत, तदा विवरणविवरणिभावः प्रतीयेत । यदि वा परमव्योमस्थं वस्तु निर्दिश्येत, तदापि प्रतीयेत । नच तन्निर्देशोऽस्ति । ब्रह्म तु 'ब्रह्मपुच्छं प्रतिष्ठे ' ति प्रतिष्ठात्वेन निर्दिष्टम् , नत्वाधेयत्वेन, तत्रापि पर्यायान्तर साधारणोपसर्जनावयवत्वेन । अत इदं कथम्परमव्योमनिहितमकाशकं भवेत् । अत आनन्दमयादान्तरस्यानभिधानात् ब्रह्मेत्युपक्रान्तो गुहानि- हितत्वेनोक्तः 'तस्माद्वा एतस्मादि ' ति आत्मशब्दनिर्दिष्टः 'सोकामयते ' त्यादिना वक्ष्यमाणः । अतएव प्रकरणप्रधानप्रतिपाद्यश्चानन्दमय इत्य वगम्यते । तेन तद्विरुद्धा विवरणरूपता । गुहाविवरणार्थत्वे 'अन्योन्तर आत्मे ' ति अन्तरात्मत्वेनोपदेशो न समञ्जसः । अतः स्थूलारुन्धती न्यायेन ब्रह्मलिलक्षयिषैव प्रकरणस्य प्रतीयते । हृदयस्यैव गुहात्वेन तदाकाशवर्तित्वेन भगवतः श्रुतिस्मृतिषु प्रसिद्धेर्नविवरणापेक्षा । अपेक्षाया

भपि न तद्विवरणयोग्यस्सन्दर्भः । सूत्रार्थोऽप्यनुपपन्नः । तथाहि – 'भीषास्माद्वातः पवते, भीषोदेति सूर्य' इति- 'अस्मा'दित्यानन्दमयः परामृश्यते। यद्ययमेव 'सैषानन्दस्ये' त्यानन्दशब्देन परामृश्यते तदा 'अस्माद्वात' इतिवदस्य मीमांसा भवतीत्येव स्यात् , सत्वानन्दस्येति । तस्मादानन्दग्रहण आनन्दमयविशेषणानन्दपरिग्रहार्थमेव । अत आनन्दमयः प्रचुरानन्दाश्रय एव, नतु प्रचुरानन्दरूपः । पूर्वापरसूत्रेषु चिच्छक्तेर-प्रसङ्गेन चिच्छक्तिरिति साध्यनिर्देशश्चानुपपन्न. । द्वितीयसूत्रार्थोऽप्यनुपपन्नः, जीवानन्द इव ब्रह्मानन्देपि प्राचुर्यसम्भवात् । प्रचुरत्वं जीवानन्दाल्पत्वापेक्षन् , ब्रह्मानन्दस्यैव जीवानन्दरूपतायास्त्वयाभ्युपगमात् कथन्तत्र प्राचुर्यम् । अत्र हि प्राचुर्यम् – प्रभूतत्व दशवर्णस्वर्णस्य स्वर्णान्तरादिवोत्कर्षः, ततश्च स एवानन्दोन्यत्रापीति कथमुत्कर्षः । अतः प्राचुर्यार्थो-नुपपन्नः । एतेन तृतीयमपि निरस्तम् , अत्र विवक्षितप्राचुर्यस्यावयवबाहुल्यसापेक्षरूढारन्यायविषयत्वासम्भवात् । एवमुत्कर्षविवक्षयैव हि 'शतं एक' इत्यावर्त्यते । दृष्टश्च यूनो युवतिसम्भोगजन्यानन्दात्स्थविरस्य तद्भोगजन्यानन्दस्यापकर्ष ।

अन्नमयादयश्चेतना इत्येकदेशिपक्षोप्यनुपपन्न , पूर्वान्नमयादिभ्या वृत्त्यर्थमेव 'आत्मानमुपसङ्क्रामति , आत्मानमुपसङ्क्रम्ये' त्यात्मपदसामानाधिकरण्येन प्रयोगात् । अत एवान्नमयादीना ज्ञोप्यत्वोपपत्ति', तस्मिन्वाक्ये आत्मपदप्रयोगाभावश्च । "नेतरोनुपपत्तेरि" त्यादेरधिकरणान्तरत्ववर्णनञ्चानुपपन्नम् . हिरण्यगर्भविषयचिन्तातात्पर्यसूचकाभावात् । ईक्षत्याद्यधिकरणेषु तत्चिन्तासूचकानि दृश्यन्ते । प्रतिज्ञाचकाराभावयो रवान्तरप्रतिज्ञात्वेनोपपत्ति' प्रागेवाभिहिता । 'कामाच्च नानुमानापेक्षा' इत्यत्र अपेक्षापदवैयर्थ्यं स्पष्टमेव । इति ।

इतरपक्षे अभ्यासशब्दोस्वरसः, 'ते ये शत' 'स एक' इतिवद्विपर्ययाभावात् । तद्धेतुसूत्रवैयर्थ्यं च, आनन्दयितृत्वस्याभ्यासादित्यत्र

विवक्षिततया व्याख्यातत्वात् । "कामादि" ति सूत्रार्थः परपक्षदूषणे-नैव निरस्तः । इति आनन्दमयाधिकरणम् ॥६॥

## अथ अन्तरधिकरणम् ।

'सयश्चायमि' ति वाक्ये आदित्यमण्डलान्तर्वर्तित्वेनोक्तो भगवा-नेवेति पर्यवसाययितुमन्तरादित्यविद्या निरूप्यते ।

१- अन्तस्तद्धर्मोपदेशात् ॥ १ – १ – २१ ॥

इदमाम्नायते छान्दोग्ये - "य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्य ऋक्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गाता तस्य हि गाता स एष ये चामु-ष्मात्पराञ्चो लोकास्तेषाञ्चेष्टे देवकामानाञ्चेत्यधिदैवतम्, अथाध्यात्ममपि, अथ य एषोन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्त-द्ब्रह्म, तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामा-नां चेति, तद्य इमे वीणायां गायन्ति तस्मात्ते धनसनयः" इत्यादि । अत्रादित्यशब्दो "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्यप्रत्ययान्तो मण्डलवाची, "य एतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेक्षन्नि" ति बृहदारण्यके, "य एष एतस्मिन्मण्डलेर्चिषि पुरुषः" इति तैत्तिरीये च पुरुषस्य मण्डलवर्त्तित्वश्रवणात्, हिरण्मयशब्दो रमणीयत्वपरः, दृश्यते, योगिभिरित्यर्थः । "दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभि" रिति श्रुत्यैकार्थ्यात् ।

"तस्य ऋथे" त्यस्य वाक्यस्य वाक्यकारेण षड्धा पूर्वपक्षत्वेन सिद्धान्तत्वेन चोक्ता । तत्रार्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतम् ।

कादिरादित्यः, 'कपिचलन' इति धातोर्निष्पन्नः कपिशब्दः; कं पिबतीति च कपिः, 'कपिर्बिभर्ति तेजनम्'' इति वैदिकप्रयोगः; तस्य,आसं- मण्डलम्; यथा आदित्यमण्डलं हृदयपुण्डरीकञ्च परमात्मन उपासनस्थानं तथो पासकस्याक्षिणी अपि उपासनस्थानमित्येकोर्थः। अयन्नोपपद्यते, समान विभक्त्यन्तयोस्स्वतः प्राप्तसामानाधिकरण्यभङ्गास्वारस्यात्, पुण्डरीकसदृशे हृदयपुण्डरीकशब्दस्य गौणत्वप्रसङ्गात्, उपासनस्थानमुपासकस्येति प्रथमान्तषष्ठ्यन्तपदयोरध्याहारप्रसङ्गाच्च। तस्येत्युपासकपरत्वे सत्यप्रकृत परामर्शित्वम्, अनन्तरवाक्यस्थषष्ठ्यन्तशब्दविरूपार्थता च स्यात्। विद्याङ्गवर्णनप्रकरणानौचित्यं च। नामविधिवाक्यात्पूर्वं रूपकथनं ह्यनुचि- तम्। 'यश्चायन्दक्षिणेक्षन्नि' ति दक्षिणस्याक्ष्ण उपासनस्थानत्वश्रवणा दक्षिणी इति द्विवचनविरोधश्च। 'अन्तरादित्य' इति आदित्यमण्डलस्य स्थानतया विहितत्वात् 'एवमक्षिणी' इति अक्ष्णः स्थानत्वे विहिते सति स्थानभेदाद्रूपभेदेन विद्याभेदादेकवाक्येन विद्याद्वयस्य विधातुमशक्यत्वाच्च वाक्यभेदस्स्यात्। तस्मादस्य वाक्यस्योपासनस्थानविधिपरत्वमनुपपन्नम्। कपिः — मर्कट', तस्यासः- आस्यते उपविश्यते अनेनेति व्युत्पत्त्या जघन प्रदेशः. मर्कटपृष्ठसाम्यमुच्यत इति; तदप्ययुक्तम्। मर्कटपृष्ठं पुण्ड- रीकञ्च किमुपमाद्वयम्, उतैकोपमा [2] नाद्य, स्वतः प्राप्तसामानाधि- करण्यपरित्यागप्रसङ्गात्। श्लाघ्योपमासम्भवे हीनोपमाश्रयणायोगाच्च। द्वितीये मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात्, तदा कप्यासपदं गौणं स्यात्। नच प्रथमान्तकपिपदरूढ्यनुसाराच्चरमश्रुतस्यासपदस्य गौ- णत्वं युक्तमिति वाच्यम्, आसपदमुख्यार्थविशेषणसमर्पकस्य कपिपदस्य वाक्यानन्वयप्रसङ्गात्, आसपदे लक्षणाप्रसङ्गाच्च। कपिपदे यौगि- कार्थस्यैव ज्यायस्त्वात्। उपपन्नश्च योगार्थो वक्ष्यते। कप्यासम्- ईष- द्विकसितमित्यपरोर्थः। सोप्ययुक्तः, अवयवशक्त्या रूढ्या वा ईषद्विका सपरत्वम्याभावात्। एवं शब्दार्थस्वरूपपर्यालोचनया इदमर्थत्रयं पूर्वपक्ष

तया वाक्यकाराभिमेतमित्यवगतम् । अर्थान्तरत्रयमुपपन्नम् । कं पिबतीति कपिरादित्यः, तेन. आस्यते- क्षिप्यते- विकास्यत इति कप्यासम् ; कं पिब तीति कपिर्नाळम्, तस्मिन्नास्त इति कप्यासम्; अपचितादपि पङ्कजान्नाळस्थपुण्डरीकस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षितः; कं- जलम् , 'आस उपवेशन ' इति धातुरपिपूर्वकः ; 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरि' ति अपेरकारलोपः , कप्यासम् - सलिलस्थितमित्युक्तं भवति । एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्य हि भगवता भाष्यकारेण वेदार्थसंग्रहेऽभिहितम्- " गम्भीराम्भस्सम्भूतसुमृष्टनाळरविकरविकसितपुण्डरीकदळामलायतेक्षणः " इति । गेष्णौ - गानविशेषौ । गानपर्वणि प्रस्तावादिसामभक्त्यवयवरूपे सामगासामगानां पर्वेत्येव प्रसिद्धेस्साम्नावच्छेदे गेष्णाख्यायास्तेषां प्रसिद्धत्वात् , ततश्च गेष्णाविति ऋक्सामयोः पूर्वत्वोक्त्या स्तुतौ साध्यायां सोपानपर्वद्वय वत् साधनत्वं विवक्षितम् । एवं च सामाभिव्यक्तऋक्साध्यस्तोत्र विषयत्वं 'ऋक्च साम च गेष्णावि ' त्यनेन विवक्षितम् । गेष्णौ — शरीरावयवपर्वणी इत्यपि केचित् । अस्मिन्नपि पक्षे अनेन सामाभिव्यङ्ग्य ऋक्प्रतिपाद्यत्वमेव विवक्षितम् । अधिदैवतम्— देवतायामुपासनम् । अध्यात्मम्—आत्मन्युपासनम् । आत्मशब्दो देहवचनः । अमुष्य- आदित्यस्थस्य । तस्मात्ते धनसनय । " एतन्ते गायन्ती " त्येतच्छब्दो ' हिरण्मय पुरुषस्तस्मादि ' त्यनेन परामृश्यते । यः धनलाभयुक्तः तस्मादेव पुरुषाद्धनवन्त इत्यर्थ । यस्मादीश्वरं गायन्ति तस्मात्ते धन वन्त इत्यपि वदन्ति, तदानीमप्ययमेवार्थ । अत्र संशयः- वेदान्तवेद्यं कारणं किं प्रकृष्टपुण्यो जीवः , उत अन्य इति, तदर्थं आनन्दमयः किं जीवः उतान्य इति, तदर्थं अक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचय निमित्तैश्वर्य आदित्यादिशब्दाभिलप्य जीव एव, उत तदतिरिक्त इति ।

अत्र पूर्वपक्षः- उपचितपुण्यविशेषो जीव एव, करचरणाद्यात्मक भोगार्थशरीरसम्बन्धश्रवणात । ततश्च 'सयश्चायं पुरुष' इत्यादित्यमण्डलान्तर्वर्तिनानन्दमयस्यैक्यावगमादानन्दमयो जीवः । एवमानन्दमयस्य जीवत्वे निश्चिते 'एको ब्रह्मण आनन्द' इत्यादिकं कथञ्चिदुपपादनीयम् । प्रजापतिशब्दो दक्षादिपरोस्तु, आनन्दयितृत्वप्राप्यत्वविपश्चित्त्वभेदव्यपदेशानन्दहेत्वनुभवविषयत्वादिकमुपचितपुण्यविशेषस्य जीवान्तरापेक्षया सम्भवत्येव । तादृशपुण्यमाहात्म्यादेव शरीरानपेक्षसङ्कल्पसम्भवोपि । अस्य 'भीषोदेति सूर्य' इति सूर्यभयहेतुत्वं च द्वादशादित्येषु प्राधान्यात्तदतिरेकाद्वोपपद्यत इति ।

राद्धान्तस्तु - अक्ष्यादित्यमण्डलान्तर्वर्ती जीवादन्य एव, जीवासम्भावितापहतपाप्मत्वादिधर्मोपदेशात् । तत्रैव सम्भावितधर्मोपदेशादिति सूत्रार्थः । करचरणाद्यात्मकशरीरसम्बन्धश्च-'अजायमानो बहुधा विजायते' इत्ययथारत्वश्रवणादुपपन्नः । अत्रोपदेशग्रहणं अपहतपाप्मत्वादीनां कथञ्चिन्नयनं वारयितुम् । सर्वोपदेशस्य सङ्कोचो न युक्त इति हृदयम् ।

२· भेदव्यपदेशाच्चान्यः ॥१-१-२२॥

"य आदित्ये तिष्ठन्' त्यादिना जगत्कारणात् भेदव्यपदेशादपि जगत्कारणमादित्यमण्डलान्तर्वर्त्यानन्दमयो जीवादन्यः । अयं चान्य शब्द उत्तरसूत्रेष्वनुवर्तते । अत्रेदमवधातव्यम् - ईक्षतिसूत्रे साध्यन्निर्दिष्टम, आनन्दमयसूत्रे साध्यन्न निर्दिष्टम्, अस्मिन्नधिकरणे द्वितीय सूत्रे साध्यनिर्दिष्टम्, एवन्निर्देशतोयं भाव. - ईक्षतिसूत्रे अन्य इति निर्देशे तस्यैवोत्तरत्राप्यनुवृत्तिसम्भवेन सूत्रलाघवे सत्यपि निर्विकारस्य ब्रह्मणः कथमुपादानत्वमिति शङ्कायां प्रकृतिशरीरकत्वेन तदुपपत्ति व्यञ्जयितुं स्वतन्त्रप्रधानकारणत्वनिरासमिद्ध्यर्थं नाशब्दमिति निर्दिष्टम् ।

आनन्दमयसूत्रे तदधिकरण एव नेतर इत्यन्यार्थप्रतिज्ञाया आवश्यकत्वा त्तस्यैवान्वयसम्भवात् साध्यनिर्देशो न कृत । अत्र 'आकाशस्तल्लिंगादि' त्यनेन सन्निधानात् झटित्यन्वयसिद्धये कृत्स्नहेतुष्न्यामानन्तर साध्यनिर्दे शेनानस्यासिद्धेश्च द्वितीयसूत्रे साध्य निर्दिष्टम् । अत एवानन्दमयसूत्र एवान्य इति निर्देशे तस्यैव सर्वत्रान्वयसम्भने ऽस्मिन्नधिकरणे साध्यनि र्देशो न कार्य इति शङ्कापि निरस्ता । नेतर इत्यत्रेतरपदस्य साध्योप स्थापकत्वाभावाज्जीवोपस्थापकत्वाच्च साध्यसाकाङ्क्षे वाक्ये झटित्यन्वया सम्भवादिह साध्यनिर्देश । यद्यपीहान्यशब्दो जीवादन्यपर, तदर्थ कन्य च नोत्तरत्रान्वयसम्भव, तथापीह सूत्रे पूर्वपक्षयुक्तान्यतात्पर्य-कत्वस्य सिद्धत्वादस्योत्तरत्र सर्वत्रान्वयसम्भवतीति ।

परेतु - अन्तरादित्येन्तरक्षिणि चोपास्य पुरुष किमादित्यजीव रूपससारी कश्चित्, किं वा परमेश्वर इति सशय । 'हिरण्यश्मश्रु' रित्या दिरूपश्रवणात् 'य एषोन्तरादित्ये' 'य एषोन्तरक्षिणि' इत्याधारश्रवणात्, 'ये चामुष्मात्पराञ्चो लोकास्तेषा चेष्टे देवकामानाश्च ये चैतस्मादर्वाञ्चो लोकास्तेषा चेष्टे मनुष्यकामानाञ्चे" त्यादित्यपुरुषाक्षिपुरुषयोरैश्वर्य मर्यादाश्रवणाच्च ससारीति पूर्वपक्ष । सिद्धान्तस्तु अन्तरादित्येन्तर क्षिणि चोपास्य पुरुष परमेश्वर एव, न ससारी, कुत 'अपहतपाप्म त्वोपदेशात्, "सैवर्क्तत्सामेत्या" दिना ऋक्सामाद्यात्मकत्वोपदेशात्' आदित्यपुरुषे उद्गातृकर्तृकगानविषयत्वोकेराक्षिपुरुषे लौकिकवीणागानविषय त्वोक्तेश्च । भेदव्यपदेशाच्चान्य । अस्ति चादित्यादिशरीराभिमानिभ्यो जीवेभ्योन्य ईश्वरोन्तर्यामी, "य आदित्ये तिष्ठन्नि" त्यादिना श्रुत्यन्तरे भेदव्यपदेशात् । तत्र हि 'आदित्यादन्तरो यमादित्यो न वेदे" ति वेदितु रादित्याद्विज्ञानात्मनोन्यो ऽन्तर्यामी स्पष्ट निर्दिश्यते, स एवेहाप्यन्तरादित्ये पुरुषो भवितुमर्हति, श्रुतिसामान्यादिति ।

अपरेतु– " अन्तःप्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानं शतधा चरन्तमि " त्यादितैत्तिरीयवाक्यं विषय । अन्तस्थो विष्णुः, इन्द्राद्यन्यतमो वेति सन्देह. । पूर्वपक्षस्तु- इन्द्राद्यन्यतम एवान्तस्थः, " इन्द्रो राजा जगतो य ईशे स्वरारं रूपाणि विकुर्वन्तं विपश्चिम् , अग्नेन्द्रमग्निं जगतः प्रतिष्ठाम् , दिव आत्मानं सवितारं ब्रह्मस्पतिम् " इति इन्द्रादिश्रुतेरिति । सिद्धान्तस्तु- अन्तस्थो विष्णुरेव, "अन्तस्समुद्रे मनसा चरन्तं यस्याण्डकोशे शुष्ममाहुः प्राणमुल्बमि " ति समुद्रशायित्वब्रह्माण्डवीर्यत्वरूपतद्धर्मोपदेशात् । नचेन्द्रादिश्रुतिभिस्तद्बाधः, निरवकाशलिङ्गबलेन सावकाशश्रुतीनामेव बाधौचित्यात् । ननु यदि निरवकाशलिङ्गबलादन्तः प्रविष्टो विष्णुः, तर्हि स्वत. प्रबलेन्द्रादिश्रुतिबलादिन्द्रादिरूपोप्ययमस्त्वित्यत्या शङ्क्याह- भेदव्यपदेशाच्चान्यः। अन्तस्थ इन्द्रादिभ्योन्यश्च,"इन्द्रस्यात्मा निहितः पञ्चहोता अन्तरादित्ये मनसा चरन्तमि"त्यादि भेदव्यपदेशादिति ।

अन्येतु– "अन्तस्तद्धर्मोपदेशात्" इत्यत्र "नेतरोनुपपत्ते" रिति सूत्रात्नेतर इत्यस्यानुवृत्तिमुक्त्वा; आदित्यान्तर्वर्ती परमेश्वरः, न तु मण्डलाभिमानी पुरुष इति चोक्त्वा, अस्तु परमेश्वर, सतु मण्डलाभिमानिनः पुरुषादन्यो न भवतीति शङ्कायाम् , " भेदव्यपदेशाच्चान्य" इति सूत्रं मण्डलाभिमानिन. पुरुषाद्भेदपरमित्याहु ।

इतरेतु– अन्तरक्षिवाक्यमेव विषयः । तत्र संशयः, अक्ष्यन्तःपुरुषः किं जगदादिश्रीमदादिगुरुरेव, उत छायापुरुषजीवप्रत्यगात्मान इति । छायापुरुष एवायम् , 'दृश्यत' इति अपरोक्षाभिधानात् ; यद्वा विनाश्यचेतनत्वे फलप्रापणायोगाज्जीवो वा स्यात् , तस्यापि दर्शने अक्षिसान्निध्यात् ; यद्वा तस्याप्याभासत्वाचेतनत्वाथित्वादित उक्तफलाहेतुत्वा

विशेषात् प्रत्यगेव वा स्यात्, तस्य नित्यचेतनत्वत फलयोगात्; नरवादिगुरुर्भगवान्, शारीराश्यन्तरवस्थाने मानाभावात्, इति प्राप्ते उच्यते - अन्तस्तद्धर्मोपदेशात् । अक्ष्यन्त पुरुषो भगवानादिगुरुर्हिरण्यगर्भो ब्रह्मैव, सद्साधारणापहतपाप्मत्वादिधर्मोपदेशात्। यदवादि, शरीरान्तश्शारीरादन्यस्थितिर्निर्मानेति, तत्राह भेदव्यपदेशाच्चान्य । अस्त्येव शारीरादन्य. शरीरान्त परमेश्वरोप्यन्तर्यामी, भेदव्यपदेशात् - शारीराद्भेदेन शरीरान्तरेव चान्तर्यामिण परमेश्वरस्य श्रुतिस्मृतिभ्यामुपदेशात्। श्रुति "यश्चक्षुषि तिष्ठन्नि" त्यादि, स्मृतिश्च - "उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वर । परमात्मेति चाप्युक्तो देहेस्मिन्पुरुष पर ॥' इति ।

परपक्षे पूर्वपक्षे आधारत्वस्य युक्तिता न युक्ता, तत्र हि नात्मस्वरूपाधारत्व श्रूयते, किन्तु रूपविशिष्टस्यैव, तच्च परमेश्वरेऽपि सम्भवत्येव। यदि रूपाभावात्तत्र सम्भवतीति पूर्वपक्षिणोऽभिमान, तर्हि पृथग्युक्तिता न युक्ता। अत एव सिद्धान्ते तस्य पृथक्परिहारोपन्यासोऽपि व्यर्थ । ऐश्वर्यमर्यादाश्रवणमपि न पूर्वपक्षसाधकम्, आदित्याक्षिपुरुषैक्यस्य पूर्वपक्षिणोप्यभिमतत्वेन मर्यादाया असिद्धे । अत एव किमादित्यजीवरूप ससारी कश्चित् किं वा परमेश्वर इति सशयोपन्यास । आचार्यैस्तु मर्यादाश्रवण पूर्वपक्षहेतुतया परमतानुसारेणोपन्यस्तम्, स्वमते तस्य हेतुत्वासम्भवात्। यदि पूर्वपक्षे आदित्यमण्डलाक्षिपुरुषयार्भेदो विवक्षित, तदाक्षिपुरुषस्य कारणत्व न सिद्ध्येत्। यद्यभेदो विवक्षित, तदा न मर्यादा। सिद्धान्ते च ऋक्सामाद्यात्मकत्वयुक्तिरयुक्ता, तत्र प्रकरणे वस्त्वन्तरेपि ऋक्सामाद्यात्मकत्वेन स्तुतिदर्शनात्। किंच त्वन्मते सर्वत्र सदभेदप्रतीत्या सत्तादात्म्यमेव सर्वत्र वाच्यम्, नतु परमेश्वरतादात्म्यम् । द्वितीयसूत्रेपि आदित्यजीवान्तर्यामित्वमीश्वरस्यानुपपन्नम्, अभेदेनान्तर्यामित्वासम्भवात्,

जीवानुस्मृतिमात्रात्कथञ्चिदन्तर्यामित्वोक्तावपि सत एव तत्स्यात्, न तु परमेश्वरस्य । श्रुतिसाम्यन्यायोगव्यवच्छेदपरत्वोपपादनस्थले दूषितमेवेति ।

अपरपक्षे 'अन्तःप्रविष्ट' मित्याद्युदाहरणमनुपपन्नम्; तथाहि— यत्नान्तरपरत्वं प्राधान्येन प्रतिपाद्यते, तदेवोदाहरणं युक्तम्, अन्त शब्दनिर्देशेन तादृशवाक्यस्यैव बुद्धौ विपरिवृत्त्या तत्परित्यागे हेत्व भावात्; नहि "अन्तःप्रविष्ट" मित्यादिवाक्यं प्राधान्येनान्तर्यर्तित्व परम्; यदीमं न्यायमुपेक्ष्यान्तश्शब्दश्रवणमात्रेण स्वर्णधर्मानुवाकवाक्य-मात्रस्योदाहरणत्वमिष्यते, तदाप्यन्तरादित्यवाक्यस्याप्यन्तस्तद्धर्मोपदेशायो ग्यत्वे तस्याप्युदाहरणता कुतो न स्यात्? नन्वक्षिविद्याविषये "अन्त रुपपत्ते" रिति वक्ष्यते, यद्यन्तराक्षिविद्यायां अक्ष्यन्तर्वर्ती भगवानिति निश्चीयते, तदा ऽक्षिविद्यापि तत्तुल्यार्थेति निश्चयान्न तदधिकरणारम्भ सम्भव इति चेत्;— तदधिकरणपर्यालोचनायां तच्छङ्कानुदयात्; तच्च तत्रैव स्फुटीभविष्यति । द्वितीयसूत्रमप्यनुपपन्नम्, परस्परानुपजीवि साध्यद्वयपरत्वेनाधिकरणभेदप्रसङ्गात्, चकारास्वारस्याच्च ।

अन्यपक्षोऽप्यनुपपन्नः, अस्मिन्नेवाधिकरणेऽन्यशब्दे विद्यमाने चकारेण सूत्रद्वयोक्तहेतुद्वयस्य तदन्वये स्वरसतः प्रतीयमाने चाधिक रणान्तरात्तेतर इत्यनुवृत्त्ययोगात् । आदित्यान्तरुपास्यत्वेनोक्तो मण्डला भिमानी न भवति, किन्तु परमेश्वर एव, परमेश्वरो मण्डलाभिमानि नोऽन्य इत्येवं सूत्रद्वयेपि प्रतिज्ञाद्वयविवक्षायां चशब्दवैयर्थ्यम् । नन्वस्त्व नुक्तसमुच्चयार्थश्चकारः, आदित्यान्तरुपास्यत्वेनोक्तो नारायणादप्यन्य इति; तन्न, हेतुसभिव्याहृतस्यास्य चकारस्य हेत्वन्तरसमुच्चयं विना समुच्चया न्तरायोगात्, तदर्थानुपपत्तेश्च । तथाहि सवितृमण्डलमध्यवर्ती हिरण्मय वपुर्नारायण एव, "अथ य एष" इति वाक्ये आदित्यमण्डलस्थं पुरुष मभिधाय, "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्यक्षिद्वयानुवादेन

पुण्डरीकसादृश्यं विधीयते, एतच्च पूर्ववाक्यप्रतिपन्नाया देवताया द्वयक्षत्वे लिङ्गं सत्तवक्ष्य व्यावर्तयति, उद्देश्यविशेषणानामपि प्रतीतिरस्त्येव, परन्तु तद्विरुद्धार्थस्य प्राप्तौ कथञ्चित्तदनुगुणानुवादत्वादुद्देश्यविशेषणमविवक्षित मित्युच्यते, एवञ्चात्र विरोधाभावात् द्विवचनस्य कथञ्चिद्दुर्णनीयत्वाभावेन द्वित्वानुवादो द्वयक्षस्यैव तत्रावस्थानं सूचयति, पुण्डरीकाक्षाभिधानयोगा-धीनतत्प्रत्यभिज्ञा, " हिरण्मयः पुरुषः " " आप्रणखात्सर्व एव सुवर्णः " इत्याभ्यां " सुवर्णज्योतिस्सरिरस्य मध्ये " इत्येतत्प्रत्यभिज्ञा, अपहतपाप्म त्वञ्च अत्र लिङ्गानि । अपहतपाप्मत्वञ्च सुबालोपनिषदादिषु भगवदसाधा-रण्येन प्रसिद्धम् । पूर्वत्रापि " अथ यदेतदादित्यस्य शुक्लं भास्सैवर्क् अथ यन्नील परं कृष्णस्तत्साम, अथैतदेवैतदादित्यस्य शुक्लं भास्सैव सा, अथ यन्नीलं परं कृष्णस्तदिदं स तत्साम " त्यादित्यान्तर्वर्ती भगवानेवेति स्पष्ट मवगम्यते । अत्र ' अथयन्नील ' मित्येतत् यदादित्ये नीलमिति शङ्करेण व्याख्यातम्। नील- नीलद्रव्य। तत्किमित्याकाङ्क्षायां तद्व्याचष्टे 'परं कृष्णं' इति, परमात्मा कृष्ण इत्यर्थः । " परं कृष्ण " मिति पाठे लिङ्गव्यत्यय श्छान्दसः । एवं श्रुत्यैव भगवत्त्वावगतिः । पूर्वत्र सर्वत्रेयमित्यादिना पृथि व्यादिकं निदिश्य, ' सैवर्क् तदम " इत्याद्युक्तम्, अतोऽत्रापि " यन्नील तत्साम तदम " इत्येतावत्येव वक्तव्ये " परं कृष्ण " इत्यतिरिच्यते । अत इदमिह विज्ञायते, पूर्वमेकेनैव पदेन पदान्तरनिरपेक्षेण द्रव्यविशेषण समर्पणात्तत्र पदान्तरप्रयोगः, इह तु नीलपदेन द्रव्यविशेषप्रतीतेस्तत्प्र तीत्यर्थं ' परं कृष्णं ' इत्युच्यते, इयशब्दस्य सामान्यशब्दत्वेपि प्रयोग प्राचुर्येण द्रव्यविशेषप्रतीतेर्न पदान्तरप्रयोगः । अतो द्रव्यविशेषप्रतीत्यर्थ मेवेदं विवरणम् ' परं कृष्णं " इति । नैल्योत्कर्षविवक्षाभ्रमवारणार्थमेव वत्सलतरा भगवती श्रुतिरपस्थितत्वान्नीलपदेन निर्दिष्टेऽपि कृष्णपदेन नि-र्दिशति भगवदुपासनार्थम् । एवमपि यदि भ्राम्यति, भ्राम्यन्तु नाम , न

श्रुतेरपरार्थोऽस्ति । यदि कृष्णशब्द कृष्णद्रव्यपर कार्ष्ण्यपरो वा, तत्र च लिङ्गव्यत्ययश्छान्दस, तदेद लिङ्गम् । अस्मिन् पक्षे परकृष्णपदयोर्न किंचित्प्रयोजन दृश्यते । एवमक्षिविद्यायामप्यक्षिसन्निहितस्यैव निर्देशो दृश्यते । उपबृंहिता चेय विद्या योगार्णवे " आदित्यमण्डले तत्र पद्मे द्विष्णु परात्परम् । सर्वाधार वासुदेवमीशान शिवमच्युतम् ॥ आत्मान सर्व जगता पुरुष हेमरूपिणम् । हिरण्यश्मश्रुकेश च हिरण्मयनख हरिम् ॥ कप्यास्यासनवन्नेत्र सृष्टिस्थित्यन्तकारणम् । पद्मासनस्थित सौम्य प्रबुद्ध कमलेक्षणम् ॥ ईश्वर सर्वभूताना सर्वलोकाभयप्रदम् । विजानन्त सदा सर्व धारणाद्धर्ममुत्तमम्" इति । अत्र "परात्पर' मिति "पर कृष्ण" इत्यत्र पर शब्दो व्याख्यात । 'आस्यासनव" दिति कप्यासशब्दस्यार्थद्वयमुक्तम् । द्वितीयो भाष्यकारोक्त, प्रथमो ऽपूर्व । " प्रबुद्धकमलेक्षण " मिति रवि करविकसितत्वरूपार्थान्तरमुक्तम् । क जल पिबतीति कपिस्सूर्य , तेनास्यत इति कप्यासम् , आदिकर्मणि क्तविवक्षाया क्ते अप्यास्त इत्ययमप्यर्थो लब्ध । " सर्वलोकाभयप्रद " मित्यनेन कृष्णशब्दस्य यौगिकार्थो विवृत । तैत्तिरीयमहोपनिषदि आदित्यान्तर्वर्तित्व भगवत श्रूयते —

स एषोऽन्तरादित्ये हिरण्मय पुरुष ' इति, अस्य च नारायणपरत्व पूर्वस्मिन्नारायणानुवाके तस्य प्रकृतत्वादवगम्यते । किञ्चानन्दवल्ल्या " स यश्चाय पुरुषे यश्चासावादित्ये स एक " इति पुरुषे आदित्ये च वर्तमानत्वेन प्रसिद्धवन्निर्दिष्टस्याभेद श्रूयते, नारायणानुवाके तदनन्तरा नुवाके च तदपेक्षिता प्रसिद्धिराधेया, तयो परस्परसन्निधानात् । अत्र स्वप्रकरणे " यो वेद निहित गुहाया ' मिति पुरुषान्तर्वर्तितया प्रकृत त्वादयमिति निर्देश । नारायणानुवाकरूपप्रकरणान्तरे तथा प्रकृतत्वात् स इति निर्देश । अनेन नारायणानुवाकस्योपस्थित्या तदनन्तरानुवा कस्यापि बुद्धिस्थत्वेन "यश्चासावादित्ये ' इत्यसावसाविति निर्देश ।

यद्यपि "यो वेद निहितं गुहाया" मिति पूर्वनिर्दिष्टस्य "अन्योन्तर आत्मानन्दमय" इत्यव्यवधानेन प्रकृतस्यानन्दमयस्य तदिदशब्दाभ्यां परामर्शास्सम्भवति, तथापि भृगुवल्ल्या "सयश्चायं पुरुष" इत्यत्र तच्छब्दस्य व्यवहितप्रकरणस्थपरामर्शित्वदर्शनेन तत्समानरूपेऽस्मिन्नपि वाक्ये तच्छब्दस्य व्यवहितप्रकरणस्थपरामर्शित्वमेव युक्तम् । ननु "अय" मित्यन्तरात्मपरम्परापर्यवसानभूमित्वेनोक्त परामृश्यते, 'स' इति 'य आत्मनी' त्यन्तर्यामिब्राह्मणोक्त, "यश्चासावादित्य" इत्यप्यन्तर्यामिब्राह्मणोक्त इति चेन ;— आदित्यान्तरात्मनो जीवान्तरात्मनश्चैक्यस्यान्तर्यामिब्राह्मणसिद्धत्वेन तदुपजीविवाक्येनावक्तव्यत्वात् । स्वशाखास्था व्यवहितमभगतवाक्योपजीवनसम्भवे परशाखागतोपजीवनायोगाच्च । इह तत्र च जीवान्तरत्वेनोक्तस्य सर्वान्तरस्य विशिष्यादित्यान्तर्याम्यभेदोप देशे प्रयोजनाभावाच्च । एवञ्च "यश्चासावादित्य" इति सविग्रह स्यादित्यमण्डलान्तरवस्थानमेव परामृश्यत इति तत्सारूप्यात् "स यश्चाय" मित्यत्रापि पुरुषे सविग्रहस्यावस्थानमेव प्रतिपाद्यत इति । 'स' इत्यपि 'य आत्मनि तिष्ठन्' त्येतदपेक्ष न भवति । किञ्चात्र पुरुषशब्दस्य शरीरपरत्व प्रकरणादवगतम्, अतश्च 'अय पुरुष' इत्येतत् 'यो वेद निहित गुहाया' मित्युक्तहृदयसम्बन्धपरम्, हृद यस्य शरीरैकदेशत्वात्, ततश्च 'स' इत्यपि 'पञ्चकोश' मित्यादिना प्रतिपन्नहृदयसम्बन्धपरम्, हृदयसम्बन्धश्च सविग्रहस्यैवेति तत्सारूप्यात् 'यश्चासावादित्य' इत्यपि विग्रहविशिष्टावस्थानपरमिति नान्तर्यामिब्राह्मणापेक्षमिद वाक्यम् । नच 'ऋत सत्य' मिति मन्त्रबलात्पूर्वोत्तरयोरन्यपरत्व शङ्कनीयम्, तस्यापि "अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ" वित्यादिभिर्वेदान्तविन्मये भगवत्परतया निर्णीते अम्भसीत्यनुवाके श्रुतेन "तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परम कवीना" मित्यनेन वाक्येन व्याख्यातत्वेन 'ऋत सत्य पर ब्रह्म पुरुष नृकेसरिविग्रह कृष्णपिङ्गलम्,

ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् । उमापतिः पशुपतिः पिनाकी ह्यमितद्युति ' " ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति ब्रह्मणोधिपति " रिति तापनीयानुसारेण " तन्मध्ये दहराकाशं तन्मध्ये सूर्य मण्डलम् । तन्मध्ये परमानन्दवपुषं कृष्णपिङ्गळम् । नारायणं जग न्नाथं वासुदेवमनामयम् " इति योगार्णववचनानुरोधेन, " विष्णुः कृष्णः केशवो मञ्जुकेशः श्रीवत्साङ्कः श्रीपतिः पीतवासाः । विष्वक्सेनो विश्वरूपो मुरारिश्शौरिश्शार्ङ्गी पद्मनाभो मुकुन्दः " इति हलायुधवचनात् विश्वरूपशब्दस्य भगवति रूढत्वेन च भगवत्परत्वात्, तापनीये उमा शब्दो लक्ष्म्यात्मकसकलजगत्सृष्टिमूलभूतभगवद्बुद्धिशक्तिपरः । वाराहे " पूर्वं नारायणस्त्वेको नासीत् किंचिद्धरेः पर" मित्यादिना " एको ह वै नारायण आसी " दित्युपनिषदर्थमनुक्रम्य, " तस्य द्वितीयं मिषतश्चिन्ता बुद्ध्यात्मिका बभौ " इति प्रकृतायां लक्ष्म्यात्मिकाया बुद्धौ " उमेति संज्ञया सा तु तदादिरेव व्यवस्थिता । ओमित्येकाक्षरीभूत्वा ससृजे सा भुवन्तु सा " इत्युमासंज्ञकत्वाभिधानात् । पिङ्गलत्वञ्च लक्ष्मीभूषाम्बरायुधै रुपपन्नम् । विरूपाक्षत्वञ्च वाराहे तस्मिन्नेवाध्याये "तस्य चिन्त यतो नेत्राद्वेजस्समभवन्महत् । दक्षिणं वह्निसंकाशं वामं तुहिनसन्निभम्" इति शीतोष्णत्वेन वैरूप्याभिधानान्निर्व्यूढम् । "ऊर्ध्वरेत" मिति च रेतोभ्यो विकारेभ्य ऊर्ध्ववर्ति, विश्वविकारोत्तीर्णम्, छान्दसस्सकारलोपः, ऐतरेयके " अथातो रेतसस्सृष्टिः प्रजापतेरेतो देवा देवानां रेतो वर्ष वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्न " मिति विकारे प्रयोगात् । नच " ऋतं सत्य " मित्यत्र विरूपाक्षशब्दरूढ्या रुद्रपरत्वाशङ्का, तस्य प्रथमान्तस्य ब्रह्मविशेषणत्वेन नपुंसकलिङ्गत्वात्; पुल्लिङ्गस्यैव तत्र रूढत्वात् । " यद्वा ऋतं परं ब्रह्म भाति विष्णु सदाशिवः । ऊर्ध्वरेता ध्यायतीह शङ्करो नीललोहितः " इत्यथर्वणि श्रूयते, तदनुसाराच्चाप नीयश्रुतौ " कृष्णपिङ्गळ " मित्यन्तः पूर्वभागो द्वितीयान्तो भगवत्परः;

उत्तरभागस्तु प्रथमान्तो रुद्रपरः; ध्यायतिपदञ्चाध्याह्रियते ; ततश्च ऋतं सत्यं परं ब्रह्म कृष्णपिङ्गलं पुरुषं विरूपाक्षं ऊर्ध्वरेतारसन् ध्यायतीति वाक्यार्थः । पूर्वोत्तरभागयोरेकविषयत्वे कृष्णपिङ्गलशब्देन नीललोहितशब्दस्य पौनरुक्त्यप्रसङ्गात् । " ऋतं सत्य " मिति तैत्तिरीयश्रुतेरप्येवमेवार्थः । ननु " सर्वो वै रुद्र " इत्यारभ्य, " नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नम" इति श्रवणाच्च बाहुग्रहणस्योपलक्षणत्वेनादित्यान्तर्वर्तिहिरण्मयपुरुषप्रत्यभिज्ञानाच्च रुद्र एवादित्यान्तर्वर्तीति चेन्न;— " आदित्यो वा एष " " आदित्यो वै तेज " इति वाक्याभ्यामनुवाकाभ्यां अन्तरादित्यविद्यां सफलामभिधाय, तदन्ते ' इत्युपनिषत् ' इत्युपसंहारेण तद्विद्याप्रकरणविच्छेदात् । " हिरण्यबाहव " इति च बहुव्रीहिणा हिरण्यालंकृतबाहव इत्यर्थः । अन्यथा लक्षणाप्रसङ्गात् । तस्मान्न प्रत्यभिज्ञा । अतस्सिद्धं भगवानेव तैत्तरीयमहोपनिषदादित्यान्तर्वर्ती श्रूयत इति । तथैव चेममुपबृंहिता श्रीविष्णुपुराणे — " सर्वशक्तिः परा विष्णोः ऋग्यजुस्सामसंज्ञिता । सैषा त्रयी तपत्यंहो जगतश्च हिनस्ति यत् ॥ सैव विष्णुस्स्थितः स्थित्यां जगतः पालनोद्यतः । ऋग्यजुस्सामभूतोन्तस्सवितुर्द्विज तिष्ठति ॥ मासि मासि रविर्योयस्तत्र तत्र हि सा परा। त्रयी मयी विष्णुशक्तिरवस्थानं करोति वै ॥ अङ्ग एषा त्रयी विष्णो ऋग्यजुस्सामसंज्ञिता । विष्णुशक्तिरवस्थानं सदादित्ये करोति सा ॥ नोदेता नास्तमेता च कदाचिच्छक्तिरूपधृक् । विष्णुर्विष्णो पृथक्तस्य गुणस्सप्तविधोप्ययम् । एव सा वैष्णवी शक्तिर्नैवापैति ततो द्विज । मासानुमासं भास्वन्तमध्यास्ते तत्र संस्थितम्" इति । अत्र ' सैषा त्रयी तपती ' ति- " सैषा त्रय्येव विद्या तपती " ति वाक्यस्यैव किंचिद्विकृतस्य निबन्धनाच्छक्तेः ऋग्यजुस्सामत्रयत्ववर्णनाच्च तदुपबृंहणत्वं स्फुटम् । शक्तिशब्दो विग्रहविशेषविशिष्टपरः, " ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः "

इत्यादिषु तथा दर्शनात्। " विष्णोः पृथक्त्वस्य गुण " इत्युक्त्या मण्डलाधिष्ठातृविग्रहविशिष्टाद्विष्णोः पृथक्त्वस्य विवक्षितत्वादादित्यान्तर्वर्ती पुरुषो हिरण्मयो विष्णुरिति दर्शितं भवति। स्वरूपात् पृथक्त्वस्यैव पुराणे बहुशो निषेधात्। " मासि मासी " ति वीप्सया " नापैती " त्युक्त्याच मासविशेषे विष्णोर्मण्डलाधिकारित्वात्तस्यादित्यान्तर्वर्तितोक्तिः क्वचिदिति सूर्ये प्रतापोपास्तः, तैत्तिरीय एव " प्रजापतिरिन्द्रमसृजतानुजावरं देवानां तं प्राहिणोत् परे हि एतेषां देवानामधिपतिरेधी ति "तं देवा अब्रुवन् कस्त्वमसि वयं त्वच्छ्रेयांसस्स्म इति देवा अवोच " न्निति, अथ वा "इदं तर्हि प्रजापतौ हर आसीत् यदस्मिन्नादित्ये तदेनमब्रवीत् एतं मे प्रयच्छ अथाहमेतेषां देवानामधिपतिर्भविष्यामीति " इत्यारभ्य, " तदस्मै रुक्मं कृत्वा प्रत्यमुञ्चत् ततो इन्द्रो देवानामधिपतिरभवत् " इति सूर्यमण्डलान्तर्वर्तितेजसो रुक्माभरणीकृतस्य इन्द्राय प्रदानमुक्तम्; तस्य रुक्माभरणीकरणं च यन्त्रप्रतिकृत्यादिरूपेण रुक्माभरणे विन्यासः; तच्च तेजो विष्णुरूपमेवेति उदाहृतानुवाकार्थप्रत्यभिज्ञापकनृसिंहतापनीयखण्डादवगम्यते। सोयं खण्डः–" इन्द्रः किल देवानामनुजावर आसीत्तं प्रजापतिरब्रवीत् गच्छ देवानामधिपतिर्भवेति सोऽगच्छत् तं देवा ऊचुः अनुजावरोसि त्वमस्माकं कुतस्तवाधिपत्यमिति स प्रजापतिमभ्येत्योवाच न देवा ऊचुः अनुजावरोसि कुतस्तवाधिपत्यमिति तं प्रजापतिस्त्रैवर्ण्यैः कलशैरमृतपूर्णैरानुष्टुभामन्त्रैरभ्यषिंचत् तं सुदर्शनेन दक्षिणतोऽरक्षत्पाञ्चजन्येन वामतः द्वाभ्यामेव सुरक्षितोऽभवत् रौक्मे फलके सूर्यवर्चसं मन्त्रमानुष्टुभं विन्यस्य तदस्य कण्ठे प्रत्यमुञ्चत् तदस्य दुर्निरीक्षोभव" दित्यादि। हरशब्दस्य तेजोवाचित्वञ्च "ज्योतिर्हर उच्यते लोकाहरांस्युच्यन्त" इति नैरुक्तवाक्यादिभ्योवगन्तव्यम्। किंच "स्वर्णघर्मानुवाकेन महापुरुषविद्यया " इति भागवते एकादशस्कन्धे भगवदर्चायां विनियोगात् "समुद्रेन्तः कवयो विचक्षत" इति तत्रत्यसमुद्रशब्दार्थित्वलिंगाच्च

भगवत्परतया सिद्धस्वर्णधर्मानुवाकोप्यादित्यान्तर्वर्तित्वे भगवतः प्रमाणम् । तत्र " अन्तरादित्ये मनसा चरन्तं मरीचीनां पदमिच्छन्ति वेधसः " " सप्त युञ्जन्ति अजस्रं ज्योतिर्नभसा सर्ववेदनी " त्यादिषु परमात्मलिंगे स्सूर्यान्तर्वर्तिपरमपुरुषाभिधानात् मरीचीनां पदं सूर्यमण्डलम् । तथा आरुणकेतुके प्रपाठके " क्वेदमभ्रं निविशत " इत्यनुवाके अभ्रादीनां निवासप्रश्नोत्तरवाक्ये " विद्युत् सूर्ये समाहिता अनवर्णे इमे भूमी इयं चासौ च रोदसी " इति सूर्यमण्डलस्य द्यावापृथिवीधारकत्वमुक्त्वा, किं स्विदन्तराभूतं येनेमे विधृते उभे " इति अस्मिन् सूर्यमण्डलान्तः किं भूतं वर्तते यन्मुखेनास्य द्यावापृथिवीधारकत्वमुपपद्येतेति " गुह्यम्महो बिभ्रदिती " ति सावित्रवाक्योक्तगुह्यतेजोविषयकप्रश्नमवतार्य, " विष्णुना विधृते भूमी " इत्युत्तरवाक्येन सावित्रान्तर्वर्ति गुह्यं महो भगवानेवेति व्याख्यातम् । तथा मैत्रायणीयोपनिषदि षष्ठे प्रपाठके "विश्वभृद्वैनामैषा तनूर्भवतो विष्णोर्यदिदमन्नं प्राणो वा अन्नस्य रसः प्राणस्य मनो विज्ञानं मनस आनन्दं विज्ञानस्मेत्येवं विद्वान् प्राणवान्मनस्वान् विज्ञानवानानन्दवांश्च भवती"त्यारभ्य,"अग्निहोत्रं जुह्वानो लोहजालं भिनत्ति अन्तस्तम्मोहं छित्वा क्रोधं स्तुन्वानः काममभिध्यायमानश्चतुर्जालं ब्रह्मकोशं भिनत्ति ततः परममाकाशम् " । अत्र हि सौरसौम्याग्नेयसात्विकानि मण्डलानि ततश्शुद्धसत्त्वान्तरवस्थमचलममृतं ध्रुवं विष्णुसंज्ञितं सर्वाधारं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि प्रतिष्ठमानं पश्यति, अत्रोदाहरन्ति- " रविमध्ये स्थितः सोमस्तस्य मध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥ शरीरप्रादेशमात्रमङ्गुष्ठमात्रमणोरप्यणुतरं ध्यातः परमतां गच्छति अत्र हि सर्वे कामास्समाहिता इति, अत्रोदाहरन्ति अङ्गुष्ठप्रदेशशरीरमात्रं प्रदीपप्रतापवद्द्विधा त्रिधा हि ब्रह्माभिध्यायमानम्महो देवो भुवनान्याविवेश ओंनमो ब्रह्मणे नम " इत्युक्तम् । तथा— हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । स त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ॥

योसावादित्ये पुरुषः सोसावह" मिति "एषवै सत्यधर्म" इति । अत्र विष्णव इति "क्रियार्थोपपदस्य कर्मणि स्थानिन" इति चतुर्थी । एधेभ्यो व्रजतीतिवत् । विष्णुं द्रष्टुमित्यर्थः । घटायोन्मीलितचक्षुरितिवत् "योसावादित्ये पुरुषस्सोहमस्मीति' तदनन्तरसंभूतदर्शनाभिलापः । बृहदारण्यके तु "सत्यधर्माय दृष्टय" इति पाठादयमेवार्थः । तत्र च सत्यधर्मशब्देन भगवानभिधीयते, सत्यधर्मशब्दस्य भगवत्परतायाः प्रागभिधानात् । सत्यधर्मायेति चतुर्थी "षष्ठ्यर्थे चतुर्थी वक्तव्ये" ति अहल्यायै जारेति वत् । इयमेवोपनिषद्योगयाज्ञवल्क्येनाप्यनुगता "ईश्वरं पुरुषाख्यन्तु सत्यधर्माणमच्युतम् । भर्गाख्यं विष्णुसंज्ञन्तु ज्ञात्वामृतमुपाश्नुते ॥ हृद्योम्नि तपति ह्येष बाह्ये सूर्यस्य चान्तरे । अग्नौ वधूमके ह्येष ज्योतिश्चित्रतरो ह्यय" मिति । सावित्रीव्याख्यानावसरे च "सवितुस्तद्वरेण्यन्तु सत्यधर्माणमीश्वरम् । हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितम् । सूर्यमध्ये स्थितस्सोमस्तस्य मध्ये हुताशनः । तेजोमध्ये स्थितं सत्यं सत्यमध्ये स्थितोऽच्युतः । सोऽन्नं प्राणा मनश्चैव ज्ञानमानन्द एव च । निमेषादिः क्षणः कालः तस्मादुत्पद्यते यतः । कालकर्ता ततो ज्ञेयः कालाख्यो विष्णुरव्ययः । एषा विश्वभृतो नाम तनुर्विष्णोस्सनातनी । अग्निरूपेण विज्ञेया ययेदं धार्यते जगत् ।' इति । अत्र शब्दतोर्थतश्च प्रत्यभिज्ञानात् स्पष्टं मैत्रायणश्रुत्युपबृंहणत्वम् । यमस्मृतावपि 'रविमध्ये स्थित' इति श्लोकं पठित्वा, अनन्तरं 'एष देवस्तु मर्त्यानां पटैरिव पिधीयते । अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः । एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः"इति पठितम् । शङ्खस्मृतावपि 'रविमध्येस्थित' इति श्लोकः पठितः । दत्तात्रेयस्मृतौ च दीक्षाविधौ'योसौ विष्ण्वाख्य आदित्ये पुरुषोन्तर्हृदि स्थितः । सोहं नारायणो देवः पुरुषो लोकभावन' इति 'योसावादित्ये पुरुषस्सोसावह' मिति मैत्रायणीयवाक्यं 'योसावसौ पुरुषस्सोहमस्मी' ति बृहदारण्यकेशावास्याम्नातवाक्यं चोपबृंहितम् । किञ्चैतरेयकब्राह्मणे नारायण एवादित्यमण्डलान्तर्वर्तीति

स्पष्टमाम्नायते ‘ चत्वारः पुरुषा इति बाध्वः, शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति, शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रसः, छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्याकारो रसः, वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसस्तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्, महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतानि तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति तदप्येतदृषिणोक्तं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेत्येतामनुविधां संहितां संधीयमानां मन्य इति ह स्माह बाध्वः, एतमु ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते स एष संवत्सरसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मे ’ति शरीरपुरुषादीनां चतुर्णामधिकरणत्वेन प्रज्ञात्मादयो रसा उच्यन्ते । अकारस्यापि सर्ववाक्प्रकृतित्वेन पूर्वोक्तस्य युक्तं विकृतित्वेनोक्तवर्णान्तराधारत्वम् । वेदविदो वेदधारणप्रसिद्धे ऋत्विग्विशेषे ब्रह्मण्यपि युक्तम् । आदित्ये तु परब्रह्मस्थानत्वं स्पष्टम् । दैहिक इति शरीरपुरुषस्य तच्छब्दवाच्यत्वोपपादकावयवार्थसम्बन्धः कथ्यते । अक्षरसमाम्नाय इत्युक्त्यैव अक्षरसमूहात्मकच्छन्दसा सम्बन्धो द्वितीयपुरुषस्य लभ्यते । वेदपुरुषे तु येनर्ग्वेदं वेदेति तृतीयया लभ्यते । महापुरुषशब्दस्तु कर्मधारयः । तत्रैव महच्छब्दस्यात्वविधानात् । ततस्तत्रावयवार्थमहत्त्वयोगः प्रध्वंसयन्नन्यानि भूतानीत्यनेनोक्तः । संवत्सरशब्दश्च परे ब्रह्मणि वाराहे विंशेऽध्याये आदि

स्वमण्डलाधिष्ठातरि संवत्सराभिमानिनि विष्णुरूपे प्रसिद्ध — "एते मासा स्तथादित्याः स्वयं संवत्सरो हरिः ।" इति । एते आदित्याः मासाभिमानिनो मण्डलाधिकारिणः सर्वमासानुवृत्तसंवत्सराभिमानी सर्वमासेष्वधिष्ठाता हरिरित्यर्थः । भारते च सहस्रनामसु "अहस्संवत्सरो व्याळ" इति संवत्सरशब्दो विष्णोर्नामसु पठ्यते । एवं च तस्यैतस्येति संवत्सरात्मा महापुरुष उच्यते । आदित्यशब्दश्च रूढ्या मण्डलं तदभिमानिजीवं वाऽऽहेति तदेव रसशब्देनाधारत्वेनोच्यते , आदित्यशब्दात् "दित्यदित्यादित्यपत्युत्तरपदाण्ण्य" इति ण्यप्रत्ययान्तत्वमाश्रित्यादित्यान्तर्वर्तिवाचित्वे रूढिहानेः, "यश्चासावादित्य" इत्यनेन वैरूप्याच्च । 'स यश्चायमशरीर' इत्यनन्तरवाक्ये शरीरात्मत्वेनास्मिन्नेव प्रकरणे पूर्वोक्तोऽनूद्यते । पुरुषद्वयव्यवधानात्तच्छब्दः एतत्प्रकरणस्थत्वादयमिति यश्चासावादित्यइति वाक्येनन्तरोक्तो महापुरुषोऽसाविति प्रत्यक्षतया निर्दिश्यते । उत्तरत्र "एतं ह्येव बह्वृचा" इत्येतच्छब्देन संवत्सरत्वेनादित्यान्तर्वर्तितया प्राक्तया चोक्तो महापुरुष एव परामृश्यते । महापुरुषशब्दश्च "महादेवं वा महापुरुषं वार्चयेत् , अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः" इति बौधायनादिप्रयोगात् "महापुरुषशब्दं च बिभर्त्येष सनातन" इति नारायणोपाख्यानादिगतद्वैपायनादिवचनाच्च नारायणवाचकत्वेन सिद्धः । इयं चैतरेयश्रुतिः पाद्मे पुराणे उपबृंहिता वत्सापहारानन्तरं ब्रह्मस्तोत्रे– 'त्वं वेदपुरुषो ब्रह्मन्महापुरुष एवच । शारीरपुरुषस्त्वम्याच्छन्दः पुरुष एवच । चत्वारः पुरुषास्त्वं हि त्वमेव पुरुषोत्तम.' इत्यारभ्य, 'उक्थे महति मीमांस्यमेतद्ब्रह्म प्रचक्षते' इति । तथानुशासनिकेच 'समध्वरे शंसितारस्तुवन्ति रथन्तरंसामगाश्च स्तुवन्ति । तस्मै हविरध्वर्यव कल्पयन्ते स पौराणीं ब्रह्म गुहां प्रविष्ट' इति। अत्र 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त' इत्यादिवाक्यमुपबृंहितम् । बृहदारण्यके च 'इन्द्रो वै नामैष योयं दक्षिणेक्षन् पुरुषस्तं वा एतमिदं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्ष

प्रिया इव हि देवाः प्रत्यक्षद्विष अथैतद्वामेक्षिणि पुरुषरूपमेषास्य पत्नी विराट्तयोरेष सस्तावो य एषोन्तर्हृदय आकाश" इति । इह चोक्तमिन्द्रश ब्देन परोक्षाभिधानं 'राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी 'ति का ठके श्रीदेव्यामिन्द्रपत्नीति प्रयोगात् भगवतो विष्णोरेवेति गम्यते । भूसूक्ते च 'विष्णुपत्नीं महीं देवी' मितिवच्च 'नमाम्यच्युतवल्लभा' मितिवच्च 'इन्द्रपत्नी व्यापिनी' ति भूम्या प्रयोगाच्चावगम्यते । 'तयोरेष सस्ताव' इत्यक्ष्यन्तर्वर्तिनो हृदयाकाशान्तर्वर्तित्व श्रूयते । हृदयाका शान्तर्वर्तिनश्चादित्यान्तर्वर्तित्व 'स यश्चायं पुरुष' इति वाक्यान्निर्णीतम् । एतद्बलादपि भगवत एवादित्यान्तर्वर्तित्व सिद्धम् ।

किञ्च 'आदित्यमण्डलासीन रुक्माभ पुरुष परम् । ध्यायन् जपे च्चैदित्येतन्निष्कामो मुच्यते द्विज ॥' 'आदित्यमण्डलान्तस्स्थ पर ब्रह्माधिदैवतम् । छन्दोभिर्वृतस्याद्वायत्री मया दृष्टा सनातनी ॥' इत्यादि स्मृतिवचनैरादित्यान्तर्वर्ति पर ब्रह्म गायत्रीप्रतिपाद्यमिति तावदवसीयते । तथाहि—गायत्रीमन्त्रार्थतया स्मृतिवचनै प्रतिपाद्यमान पर ब्रह्म भगवा नेव, तस्यैव परब्रह्मत्वात्, "नारायणपर ब्रह्म" "नारायण परब्रह्म" "सर्वभूतस्थमेक नारायण कारणरूपमकार पर ब्रह्मो"मित्यादिश्रुते । "ऋत सत्य पर ब्रह्मे" ति मन्त्रश्च भगवत्परतया व्यवस्थापित । किञ्च सवितृ शब्द सहस्रनामसु भगवन्नामतया पठ्यते 'सविता रविलोचन' इति । किञ्च मैत्रायणीयोपनिषदि 'हिरण्मयेन पात्रेणे'ति पूर्वोक्तमन्त्रेणादित्या न्तर्वर्ती विष्णुदर्शनप्रतिबन्धकनिवृत्तिप्रार्थनानन्तरमाम्नायते "यदादित्यस्य मध्येऽक्षिण्यग्नौ चैतत् ब्रह्मेनदमृतमेतत् भर्गमेतत्सत्य धर्मइति यदादित्यस्य मध्य उदुत्वा मयूखे भगवत एतत्सवितुर्वरेण्य सत्यधर्म एतद्यजुरेतत् तप एत त्तप एतदग्निरेतद्वायुरेतत्प्राण एतदपान एतच्चक्रमेतदमृतमेतत् ब्रह्म वैषयमेतत् भानुवर्णस्तस्मिन्नेव यजमानास्सैन्धवघन इव लीयन्त्येषा वै ब्रह्मैकता अत्र हि सर्वे कामास्समाहिता" इति च भर्गशब्दस्य वरेण्यशब्दस्य च

सवितृसम्बन्धित्वादसङ्कोचेन धर्मादिगोचरधीप्रचोदकत्वस्मृत्या च सकलधी प्रचोदकस्य सवितुश्चाक्षुषज्ञानसहकारिभूतप्रसिद्धसवितुरन्यत्वेन परमात्म तया तद्विग्रहपरत्वौचित्येन ब्रह्मादिशब्दास्तत्परा एव । अतएव ब्रह्म विषयत्वं भानुवर्णत्वञ्चोक्तम् । तलवकारिणां श्रुतौ सावित्रीविषये "कस्स-विता का सावित्री' ति खण्डे- 'तस्या एष तृतीयस्त्वधियो यो नः प्रचोद यादिति, यज्ञो वै प्रचोदयती' ति प्रचोदयिता यज्ञ इति व्याख्यातम् । यज्ञशब्दश्च 'यज्ञो वै विष्णु' रिति श्रुते, 'यज्ञेन यज्ञमयजन्ते' त्यादि प्रयोगात्, 'पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम्' इति मात्स्योक्तेः, 'यज्ञा याचरतः कर्म' 'कर्मग्रन्थिर्विलीयत' इति गीतादिप्रयोगात्, कर्मणोऽचेत-नस्य प्रेरकत्वादित्यान्तवर्तित्वानुपपत्तेश्च विष्णुपरः । एवं बृहदारण्यके सप्तमप्रपाठके—'भूमिरन्तरिक्षं द्यौ' रित्यादिना गायत्र्याः पादत्रयं तुरीय ऋचाभिधाय 'गायत्र्येतस्मिंस्तुरीये दर्शिते तुरीये पदे परोरजसि प्रतिष्ठिते' ति चतुर्थपादात्मकपरोरजश्शब्दवाच्ये " एष वा व स परोरजाः इति हो वाच एष तपती " ति काठकश्रुत्या सूर्यान्तर्वर्तिपुरुषतया निर्णीते वस्तुनि प्रतिष्ठितत्वमुक्त्वा, पुनश्च गायत्रीमहिमानमभिधाय, आदित्यान्तर्वर्तिपुरुष दर्शनप्रार्थनामन्त्र आम्नातः – " हिरण्मयेन पात्रेण " त्यादिः । सच मैत्रायणीयश्रुतौ— " सत्यधर्माय विष्णव " इति पाठाद्विष्णुविषय इत्युक्तम् । परोरजस्त्वञ्च 'लोका रजांस्युच्यन्त' इति यास्कनिरुक्त्य नुसारात् सर्वलोकेभ्य उपरिस्थितत्वं रजोगुणकप्रकृतिमण्डलोत्तीर्णत्वं वा 'क्षयन्तमस्य रजसः पराके' इति विष्णावयगमितं गायत्रीप्रतिष्ठा भूतस्य विष्णुत्वे लिङ्गम् । भागवते भरतचरित्रे गायत्री तद्विषयक बृहदारण्यकश्रुतिरन्याश्च भगवद्वासुदेवपरतयोपबृंहिताः- " भगवन्तं हिरण्मयं पुरुषं उज्जिहाने सूर्यमण्डले प्युपतिष्ठन्नेतदुवाच परोरजाःसवितुर्जात वेदा देवस्य भर्गो मनसेद जजाने' ति । अत्र 'एष वा व स परोरजा इति होवाच एष तपती' ति काठकश्रुतिं 'उदुत्यं जातवेदस '

मिति श्रुतिं, उक्तबृहदारण्यकश्रुतिं, ' य एषो ऽन्तरादित्ये हिरण्मयः पुरुष ' इत्यादिनांचिरीयकछान्दोग्यश्रुतिञ्चाभिप्रेत्य ' परोरजा जातवेदा हिरण्मय पुरुष ' इत्युक्तम्। योगयाज्ञवल्क्ये — 'ईश्वरं पुरुषाख्यन्तु सत्यधर्माणमच्युतम्। भर्गाख्यं विष्णुसंज्ञन्तु ज्ञात्वाऽमृतमुपाश्नुते'' इति। गायत्र्यास्तुध्यानावसरे च " सवितुस्तद्वरेण्यन्तु सत्यधर्माणमीश्वरम्। हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञितं " मिति। सनकस्मृतौ— " रश्मिज्वालासहस्राढ्यं मण्डलं विपुलं रवेः। तदन्तर्दर्शितराभन्तु सौम्यं सोमस्य मण्डलम्॥ स्फुरत्स्फुलिङ्गमनलज्वालामालासहस्रकम्। तस्य मध्ये सुखासीनं तप्तहाटकसन्निभम्। चतुरङ्गुलमात्रं तु शुकपक्षनिभाम्बरम्। रक्तनेत्राम्बरं रक्तपाणिपादनखाङ्कुशम्। शङ्खचक्रगदापाणिं श्रीवत्साङ्कितवक्षसम्। एवं ध्यात्वा जपेन्मन्त्रं सावित्रीं नियतश्शुचिः॥" इति। संवर्तस्मृतौ च— ' आदित्यमण्डलान्तस्थं रुक्माभं पुरुषं परम्। ध्यायन् जपेत्तदित्येतान्निष्कामो मुच्यते द्विजः॥ " इति। आग्नेयपुराणे नवमे ऽध्याये " ध्यानयज्ञाग्निना प्रोक्तं सन्ध्यायाश्च मरीचये। तवेऽर्थेन प्रवक्ष्यामि द्विजानां हितकाम्यया॥ सन्ध्ये द्वे रश्मितस्सूर्यस्सूर्यमध्ये स्थितश्शशी। चन्द्रमध्ये हुताशस्तु सर्वतेजोमयो हरिः॥ अङ्गुष्ठमात्रं पुरुषं सूर्यमध्ये यथोदितं। शङ्करेण तथा ऽदृश्यस्तत्प्रकाशोऽतितेजसा॥ विष्णुर्भुवनाधारो वसेद् सकलं जगत्॥ वरेण्यं च तत्सवितुर्भर्गो यो भगवान् गिराम्। धीशब्दवाच्यां ब्रह्मा च प्रचोदयति सर्वदा। सूर्यार्थं भगवान्विष्णुस्सविता स तु कीर्तितः। सर्वलोकप्रसवनात् सावित्री सा तु कीर्त्यते॥" इति। एवं श्रुतिस्मृतिभिः गायत्र्या भगवत्परत्वे निश्चिते सति यद्यापाततः एतद्विरुद्धार्थः किञ्चिदुपलभ्येत तदा तदेतदेतदनुगुणतयैव कथञ्चिन्नेयम्। एवं चायं गायत्र्यर्थः — नो धियो यः प्रचोदयात् तस्य सवितुर्देवस्य तत्प्रसिद्धं वरेण्यं भर्गस्तेजोमयं रूपं धीमहीति। तथा चागस्त्यः " यो देवस्सविताऽस्माकं धियो धर्मादिगोचराः। प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे॥ " इति।

ननु सवितुर्वरेण्यमित्यन्वय, अव्यवधानात्, 'तदक्षर तत्सवितुर्वरेण्य' मित्यत्र तथा दर्शनाच्च, अत कर्तरिषष्ठी, भर्गशब्दश्चाकारान्त, तलवकारिणा श्रुतौ 'तस्या एष द्वितीय पादो भर्गमय' इत्युपादानात्, मैत्रायणीयश्रुतौ 'सविता वै देवो योऽस्य भर्गाख्यस्त चिन्तयामी तिदर्शनात्, 'आदित्यान्तर्गत यच्च भर्गाख्य वै मुमुक्षुभि' रिति योगशास्त्रवस्योक्तेश्च, भर्गशब्दश्च रुद्रे रूढो धीमहीत्यनेना वेति 'सुपा सुलुगि' त्यादिना स्नादेशेन द्वितीया त, न्वत्ययेन प्रथमान्तो व, तद्विनि च ब्रह्मवाचि, 'तद्विनि वा एतस्य महतो भूतस्य नाम भवती' त्यैतरेयश्रुते, एवञ्च देवस्य सवितुर्वरेण्य तेज प्रदत्वेन समाश्रयणीय भर्ग ध्यायाम, यो भर्गो नो धिय प्रचोदयादित्यर्थ, उत्तरवाक्यगतत्वाद्यच्छब्दस्तच्छब्दानपेक्ष इति तन्न,प्रधानभूतभर्गशब्दान्वयसम्भवे उपसर्जनवरेण्यशब्दान्वयायोगात्, विशेषणस्याव्यवधायकत्वाच्च । किञ्च सवितुरिति देवविशेषणम्, व्यावर्तकत्वात्, ततश्च देवस्येत्यनेनैव वरेण्यशब्दस्य भर्गशब्दस्य वा अन्वयो वाच्य, देवस्येत्यनेन च भर्गशब्दस्यैवाव्यवधानमिति तस्यैव तेनान्वयो वाच्य । यत्सवितेत्यनुक्त्वा यो देव इति वदन्नगस्त्योपीममेवार्थमाह । नच वरेण्यशब्दस्य वरणीयार्थकस्य प्रतिसम्बन्ध्यपेक्षत्वात्तेनैव सवितृशब्दस्यान्वयो युक्त इति वाच्यम्, वरेण्यशब्दस्य श्रेष्ठे रूढतया यौगिकार्थस्यानादेयत्वात् । ननु स्मृतिसिद्धस्य आदित्यान्तर्वर्ति पर ब्रह्म गायत्र्या दैवतमित्यस्यार्थस्य सिद्धये सवितृशब्दो रविपरो वाच्य, अतो वरेण्यशब्दो वरणीयार्थकस्सन् तदन्वय्येव युक्त इति चेन्न,– सवितृशब्दस्य रविपरत्वेपि भर्गशब्देन तेजोवाचिना परमात्मपरेणान्वयसम्भवेन वरेण्यशब्दे रूढिपरित्यागे हेत्वभावात् । सवितृवरणीयत्वाङ्गीकारेपि वह्निष्ठस्यैव सतस्समाश्रयणीयत्वसम्भवेन तेन मण्डलवर्तित्वालाभाच्च । तल्लाभस्तु प्रसिद्धिबलेन तच्छब्देनेति मन्त्ररहस्यविद । नच 'तदक्षर तत्सवितु-

वरेण्य" मिति श्रुत्यनुसारात्तथान्वय, तत्र किं प्रकृतशिवापेक्षया वरेण्यमिति निर्देश, किंवा गायत्रीस्थभर्गशब्दापेक्षया? नोभयथापि नपुसकोपपत्ति। नच तत्पदस्य ब्रह्मपरत्वाद्भर्गशब्दस्य च तद्विशेषणत्व,तत्पदापेक्षया नपुसकोपपत्तिरिति वाच्यम्, य इति पुल्लिङ्गनिर्देशानुपपत्ते। अतो गायत्रीस्थवरेण्यशब्दस्य द्वितीयान्तस्य भर्गसो विशेषणस्य नपुसकस्याय विपरिणामेन प्रथमान्ततया निर्देश इत्यास्थेयतया अनेन वाक्येन गायत्र्या सकारान्तभर्गशब्दसिद्धया घट्टकुटीप्रभातम्। ततश्च सवितुर्वरेण्येन भर्गसा चान्वये न किंचिदपि बाधकम्। अथापि "सविता वै देव योस्य भर्गाख्यस्त चिन्तयामी" ति मैत्रायणीयश्रुत्या सवितुर्देवस्य भर्गमान्वयस्य दर्शितत्वात्तथैवान्वय, तस्या श्रुतेः गायत्र्यर्थपरतया तच्छेषत्वात् इदन्तु वाक्य न तत्परम्, किन्तु प्रकृत शिवसोत्कर्षप्रतिपादनाय गायत्रीप्रतिपाद्यार्थयोगपरम्। तस्माद्भर्गसो विशेष्यपदस्य पुरोवादप्रसिद्धस्यानिर्देशेन विशेष्यविवक्षयैव विशेषणपदप्रयोग कृत। यथा—"बुद्धेरात्मा महान्पर" इति महत्त्वविशिष्टे आत्मन्युक्ते, "महत परमव्यक्तमिती" ति गन्तव्यम्।

एतेन "ता सवितुर्वरेण्यस्य चित्रा" मिति मन्त्रोपि व्याख्यात। एव परोदाहृतवाक्येनैव सकारान्तत्व सिद्धम्। अत एव मैत्रायणीयश्रुतौ "यदादित्यस्य मध्य उदुत्या मयूखे भगवत एतत्सवितुर्वरेण्यमेतदमृतमेत द्भर्ग" इति च नपुसकलिंगेन निर्देश, यदिति व्याख्येयगायत्रीस्थभर्गशब्दलिंगग्रहणौचित्याच्च, "भर्गस्तद्वरेण्यमुपास्मह" इत्याद्युदाहृतस्मृतेश्च। नच तत्प्रकारिणा "भर्गमय" इति श्रुतेरकारान्तत्वावगम, उपक्रमे प्रथमपादार्थकथने "अग्निर्वै वरेण्य आपो वै वरेण्य चन्द्रमा वै वरेण्य" मिति त्रिष्वपि नपुसकैकवचननिर्देशेन गायत्रीस्थवरेण्यशब्दस्य नपुसकतावगमात्, तन्निर्देशस्य व्याख्येयानुरोधित्वात्, अन्यथाप्यादिशब्दानुरोधे नानालिङ्गवचननिर्देशापत्ते। गायत्र्या च वरेण्यशब्दस्य विशेष्यलिंगत्वात्

सकारान्तं विशेष्यपदम् । भर्गमय इति तु भर्गश्शब्दे सकारं त्यक्त्वा इतरांशेन पादो निरूपितः । दृष्टंच पदैकदेशेनापि निरूपणम्—यथा वारवन्तीयमिति । तत्र हि वारवन्तीयसामयोनिभूतायामृचि "अश्वं नत्वा वारवन्त" मिति द्वितीयान्तवारवन्तशब्देन तद्भवसाम्नो निर्देशः, "मतौ छप्सूक्तसाम्नो" रिति शब्दवाचिनो मत्वर्थे छविधानात् । वस्तुतस्त्वत्र "तस्या एष प्रथमः पादो भूर्भुवस्सवितुर्वरेण्य" मिति पूर्ववत्, "तस्या एष तृतीयस्स्वः धियो यो नः प्रचोदयात्" इत्युत्तरवच्च, "तस्या एष द्वितीयः पाद" इत्यनन्तरं "भुवो भर्गो देवस्य धीमही" ति वक्तव्ये "भर्गमय" इत्यतिरिक्तमाम्नातम् । तस्य चैतत्प्रयोजनम्- 'धियो य' इति प्रयोगानुरोधाद्भर्गशब्दोयगकारान्तस्तृतीयपादान्वयीति शंक्येत,- तन्माशंकि द्वितीयपादान्तर्भाव उच्यते । भर्गमय— भर्गशब्दप्रचुरोयं पादः । प्रकृत्यर्थे चार्थतः स्वरूपतश्च तत्रैवान्वयात् । पादस्य विशेष्यस्य शब्दात्मत्वात्, भर्गशब्दो मयट्प्रकृत्यर्थस्वरसतोऽवगम्यते। भर्गश्शब्दस्य तृतीयपादान्वयस्य शंकितत्वात्तस्यैव द्वितीयपादान्तर्गतेर्वाच्यत्वात्सकारं विना पदैकदेशनिर्देशः कृतः । सान्तत्व एवात्रान्वयोपपत्तेः, द्वितीयान्तत्वात्, न कारान्तत्व इति तात्पर्यतो रुद्रस्य गायत्रीप्रतिपाद्यत्वाभावसिद्धिः ।

नच वाच्यम्— द्वितीयः पादो भर्गमय - रुद्रमय इति गायत्र्या रुद्रपरत्वज्ञापनं प्रयोजनमिति; गायत्र्या एव रुद्रपरत्वेन पादविशेषे भर्गत्वकथनस्य प्रयोजनविशेषाभावेनानुचितत्वात्; विभक्तिव्यत्ययादिकल्पनारहितप्रयोजनसम्भवे तस्यैव आह्यत्वात्; मैत्रायणीयोपनिषदि "भर्गाख्यं विष्णुसंज्ञं सर्वाधार धामे" ति दर्शनेन तद्विरोधाच्च । तस्मादिदं उत्तरान्वयनिषेधमुखेन सकारान्तत्वव्यंजनार्थमेव । अतो नाकारान्तत्वस्थापनमस्य प्रयोजनमिति युक्तम् ।

एवञ्च तलवकारिश्रुतिरेव भगवती भर्गशब्दप्रयोगप्रयुक्तरुद्रपरत्व भ्रमवारणाय सकारान्तत्वं ख्यापयितुं प्रवृत्तेन प्रथमपादव्याख्याने भिन्न लिङ्गवचनैर्वरेण्यशब्दस्य नपुंसकैकवचनस्य सामानाधिकरण्येन द्वितीय पादव्याख्याने भर्गशब्दस्य सदन्वयकथनेन, तृतीयव्याख्याने यज्ञस्य प्रचोदयितृत्ववचनेन, ततस्समस्तां गायत्रीं निर्दिश्य यज्ञस्य वाक्यप्रधाना र्थस्य प्रचोदयितृत्वाभ्यासेन च गायत्री विष्णुपरेति दृढीकरोतीति सर्व मवदातम्।

"सविता वै देव योऽस्य भर्गाख्यस्तं चिन्तयामी"ति मैत्रायणीय श्रुतावपि शब्दैकदेशे आख्याशब्द औपचारिकः, छान्दसत्वात्, पूर्वत्रा सिद्धत्वाभावो वा, देवापि मार्गं मुञ्चन्तीतिवत्। अकारान्तत्वे च "वरेण्य भर्गाख्य" इति सवितृशब्देनान्वयप्रदर्शनं न स्यात्। नहि सवितुः द इत्यन्वयस्समञ्जसो भवति। भवति तु सवितुस्तेज इति। किञ्च नाद वचनं भगवतो भर्गशब्दवाच्यत्वाय प्रवृत्तम्, किंतु गायत्रीप्रतिपाद्यत्वा। गायत्र्या च न विसर्जनीयस्य श्रुतिरिति "भर्गस्य विष्णुसंज्ञ" मित्यदि निर्देशोपि युक्त एव। गायत्र्या योजनान्तरसत्त्वे भर्गशब्दस्याकारान्तत्वे च भगवत्परत्वे न विवादः। बह्वृचे रुद्रसूक्ते "यश्शुक्र इव सूर्ये यो हिरण्य मिव रोचते श्रेष्ठो देवानां वसु" रिति। अत्र सूर्ये शुक्र इवेति योजना, अव्यवधानात्। शुक्रशब्दो भगवत्परः, "तन्मण्डलस्थं मा ध्याये त्तेजोमूर्तिं चतुर्भुजम्। उदुत्यन्तु जपेन्मन्त्रं चित्रं तच्चाक्षुरित्यपी"ति भगवद्वचनेनादित्यान्तर्वर्तितदुपस्थाने विनियोगात्तत्परेण "तच्चक्षु र्देवहितं पुरस्ताच्छुक्रमुच्चर" दिति मन्त्रेण भगवत एव शुक्रत्वावगमात्। मोक्षधर्मे—'वैकुण्ठः पुरुषो विष्णुश्शुक्रः तस्सनातनः। शुक्रो हरिश्मश्रुस्सर्वभूतपितामहः' इति विष्णौ शुक्रशब्दप्रयोगाच्च। शुक्र शब्दस्य प्रथमान्ततया पाठे तु उक्तरीत्या शुक्रशब्दस्य भगवत्पर शब्दस्य प्रथमान्ततया पाठे तु सूर्ये इत्युपमानभूतशुक्रविशेषणम्। शतरुद्रीये च—'असौ योऽवस

नीलग्रीवो विलोहित' इति । अत्र नीलपदं छान्दोग्यस्थं कृष्ण पदं प्रत्यभिज्ञापयति । नीलग्रीवशब्दो मण्डलपर', 'उतैनं गोपा अदृशन्नदृशन्नुदहार्ये' इत्युक्तेः । नीलग्रीवत्वं नीलमध्यकत्व । तथै न्द्रनीलश्यामळकोमलभगवल्लीलाकमनीयविग्रहयोगादेव, मानान्तरोनुरोधात्। पुरुषस्यार्धशरीरत्वप्रसिद्धेर्पुरुषेतरागसन्धिभूतग्रीवावाचिनो ग्रीवापदस्य मध्य- परत्वं युक्तम् । अतो मण्डलाभिमानित्वाद्रुद्रस्य तदभिमन्तव्यार्थवादः । त्रिधामेति समाख्यापि भगवतो भानुमण्डलान्तर्वर्तित्वे प्रमाणम्, "क्षीराब्धि मैण्डल भानोर्योगिनां हृदयानि च । त्रीणि धामानि मे सन्ति त्रिधामाहं सनत्सुत." इति नामनिर्वचनात् । भगवतस्सवितृमण्डलमध्यवर्तित्वे स्मृति विस्तरो वेदान्तविजये द्रष्टव्य । तस्मादन्योक्तयोजनानुपपन्ना ।

इतरपक्षे छायापुरुषस्य कोटित्वमनुपपन्नम्, "तदेव रूपं यदमुष्य रूप" मित्यादिना हिरण्यश्मश्रुत्वादीना तत्रासम्भवात् । पाप्मभ्य उदय स्तु जीवस्य सम्भवत्येव, पूर्वं पापसम्बन्धे सति मुक्तिदशायां तन्निवृत्ते । द्वितीयसूत्रार्थश्चानुपपन्न, पक्षनिर्देशरूपस्यान्तश्शब्दस्य साध्यपरत्वाङ्गी कारेणानुपपन्नकल्पनाप्रसङ्गात् ; चकारस्य स्थानचलनप्रसङ्गाच्च ।

एवमधिकरणत्रयेण येषु वाक्येषु संशयो भवति पदाना साधारण्या- त्तानि वाक्यानि निरूपितानि । अथ येषु वाक्येष्वसाधारणपदैर्विपर्ययो भवति तानि वाक्यान्यधिकरणचतुष्टयेन विचार्यन्ते । तत्र प्रथमे वस्त्वन्तर *प्रसिद्धशब्दविशेषेण प्रत्यवस्थानसमर्थविरोधेन परिहार , द्वितीयेऽर्थविरोधशङ्कया* प्रत्यवस्थान विरोधोद्घाटनमुखेन परिहार , तृतीये विरोधिलिङ्गाभावेना- न्यपानुकूललिङ्गसद्भावेन च प्रत्यवस्थान स्ववाक्ये विरोधिलिङ्गाभावेऽप्युप क्रमवाक्यस्थविरोधिलिङ्गप्रदर्शनेन सिद्धान्त', चतुर्थे उपक्रम एवानुकूल लिङ्गसद्भावेन प्रत्यवस्थान तन्निरासेन सिद्धान्त इति भेद ।

पूर्वाधिकरणे पुण्डरीकाक्षयोगार्थोपस्थापकवाक्यमुखेन पुण्डरीकाक्ष श्रुत्युपस्थित्या भगवति कारणत्वपर्यवसायकं वाक्यन्निरूपितम् । इदानीं श्रुत्यैवानन्तश्रुत्युपस्थित्या ' सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्त' इति पूर्वतापनीयप्रत्यभिज्ञया च भगवति कारणत्वपर्यवसायकं वाक्यं निरूपयति ।

आकाशस्तल्लिङ्गात् ॥ १–१–७ ॥

इदमाम्नायते छान्दोग्ये– " अस्य लोकस्य का गतिरिति आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथस्स एषोऽनन्त" इति ।

तत्र संशयः, जगत्कारणवादिवाक्यप्रतिपाद्यं वस्तु किं प्रसिद्धाकाशः, उत तदन्य इति विचारः । तदर्थं 'अस्य लोकस्य का गतिरिति आकाश' इत्यत्राकाशशब्दः किं प्रसिद्धाकाशपरः, उतान्यपर इति ।

पूर्वपक्षस्तु—प्रसिद्धाकाश एव जगत्कारणवादिवाक्यप्रतिपाद्यं वस्तु, " यतो वै " त्यादिवाक्यप्रतिपन्नसर्वभूतोत्पत्तिस्थितिलयकारणत्वस्य विशेष साकांक्षस्य " सर्वाणि ह वा इमानि भूतानी " त्यादिना भूताकाशे पर्यव सानवर्णनात् । तत्र हि " सर्वाणि ह वा इमानि भूतान्युत्पद्यन्त " इत्यनु वादः । " आकाशा " दिति विधिः । एवञ्च सद्ब्रह्मात्मादिशब्दा अपि विशेषसाकांक्षास्तत्रैव पर्यवस्यन्ति । आत्मशब्दोऽपि मृदात्मको घट इत्यादि प्रयोगेण साधारणो विशेषसाकांक्षस्तत्रैव पर्यवस्यति । ननु—"आत्मन आकाशस्सम्भूत " इत्युत्पत्तिमत्त्वेन श्रुतस्य भूताकाशस्य कथं सर्वभूतस्थिति लयकारणत्वम् ? मैवम्, " आत्मेश्वर " मिति अनन्येश्वरत्व इवास्याप्य नन्योत्पाद्यत्व एव तात्पर्यात् । अतः प्रसिद्धाकाश एव जगत्कारणम् । यद्वा- सर्वेषामपि भूताना सूक्ष्मावस्थास्सन्ति, एवञ्च " आत्मन आकाश

सम्भूत" इत्यस्य स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपस्सम्भूत इत्यर्थः। एवमाकाशविशेषश्रुत्यनुसारादाकाश एव जगत्कारणमिति निश्चिते सतीक्षणा दयस्तदनुगुणाः कथञ्चिद्वर्णनीयाः । नन्वाकाशस्य कारणत्वमुपादानत्वमेव, अतः कर्तुरीक्षणादिकमुपपद्यत इति किमर्थं कथञ्चिद्वर्णनमिति चेन्न; इदं सदित्युपादानपरसद्वाक्यस्याकाशे पर्यवसाने सति तत्राद्वितीयमिति कर्तृ निषेधेन कथञ्चिलयनस्यावश्यकत्वात् । आकाशस्य जगत्कारणत्वादेव "यदेष आकाश आनन्दो न स्यात्," "आकाशो ह वै नामरूपयोर्निर्वहिते"त्येवमादिनिर्देशोऽप्युपपद्यते । नामरूपनिर्वोढृत्वं नामरूपभाक्त्वम् । "ते यदन्तरा तद्ब्रह्मे" ति च सकलनामरूपभागाकाश एव ब्रह्मेत्यर्थ इति।

एवं प्राप्ते सिद्धान्तः- आकाशस्तल्लिङ्गात् । आकाशः प्रसिद्धा काशादन्यः, तल्लिङ्गात् - अन्यत्वगमकादित्यर्थः । निखिलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि ह्याकाशस्य प्रसिद्धाकाशादन्यत्व गमयन्ति । भूतशब्दस्य महच्छब्दपञ्चशब्दपृथिव्यादिशब्दसमभिव्याहाराभावे ऽचिसंसृष्टचेतनपरत्वं स्वतःप्राप्तम् , "यतो वा इमानि भूतानि जायन्ते" "न हिंस्याद्भूतानि" "भूतानां प्राणिनः श्रेष्ठा" इत्यादिप्रयोग स्वारस्यात् । नहि भूताकाशस्य चेतनवर्गकारणत्वमुपपद्यते । यद्यपि जीवस्य कार्यत्वन्न स्वरूपेण, किन्तु शरीरविशिष्टरूपेण, विशिष्टरूपे च कारणत्वं विशेषणकारणस्याकाशस्य सम्भवत्येव, अथापि न तावन्मात्रेण सदिदमित्यादि सामानाधिकरण्योपपत्ति: ; तदुपपत्तिर्हि विशिष्टोपादानोपादेयभाव एव । चेतनानां परमप्राप्यत्वरूप परायणत्वञ्चाचेतनस्यापुरुषार्थस्य हेयस्य भूताकाशस्य नोपपद्यते । नवा सर्वतो ज्यायस्त्वम् , चेतनापेक्षया ज्याय स्त्वासम्भवात् । यदुक्तं जगत्कारणविशेषाकांक्षायामाकाशशब्देन विशेष समर्पणादन्यत्सर्वं तदनुरूपमेव नेयमिति; तन्न, "सर्वाणि ह वा" इति वाक्ये हि कारणत्वन्न विधीयते , हवेशब्देन प्रसिद्धचर्यकेनानुवादत्वद्योतनात् ।

अत पुरोवादाकाङ्क्षाया "सदेव सोम्येदमग्र आसी" दित्यादि वाक्यमेव पुरोवादत्वेनावतिष्ठत इति तत्रेक्षितृत्वादिभिश्चेतनत्वेन सिद्ध सच्छब्दाभिधेय कारणवस्त्विहाकाशशब्देन "परामृश्यत इति वक्तव्यत्वात्। विशेष पर्यवसानाकाङ्क्षा चानन्तपदेनैव पूर्णा नत्वाकाशपदेन, "स एषोऽनन्त" इति तस्यैव विधे। 'स एष' इति पूर्वप्रकृतमनूद्य 'अनन्त' इति विधाने स्पष्टमेव प्रतीयमाने "सर्वाणि हवा' इति वाक्ये भूतोत्पत्त्यनुवादेनाकाशस्य कारणतया विधिरस्त्विति शङ्का नोत्थानमर्हति। आकाशशब्दश्च आकाशते आकाशयति चेति पुरोवादसिद्धकारणपरस्सन्ननुवाद। नच लिङ्गाच्छ्रुत्यन्यथाकरणमयुक्तमिति वाच्यम्, अनन्यथासिद्धश्रुतिसिद्धतया लिंगस्य बलवत्त्वात्। "ऐन्द्या गार्हपत्यमुपतिष्ठत" इत्यत्र हीन्द्रप्रकाशनरूपलिंग नानन्यथासिद्धश्रुतिसिद्धम्, इन्द्रप्रकाशकपदस्यानन्यथासिद्धगार्हपत्यमिति श्रुत्यनुसारेण लक्षणया यथासिद्धे। नच मन्त्रवन्नाद्विधिवाक्ये लक्षणा, विधिवैय्यर्थ्यात्। इह त्वीक्षणलिंगमनन्यथासिद्धेक्षतिरूपश्रुतिसिद्धम्, पुरोवादतया स्वोपजीवकवाक्याननुरोधिवाक्यस्थत्वादीक्षतिरनन्यथासिद्धएव। भूतकारणत्वाद्यपि परस्परमवादिवाक्योपस्थापिततया बलवदेव। तेषा वाक्याना परस्परसवादितया अन्यथासिद्धिसम्भावनाविरहात्। बहूना लक्षणाप्रसगेन अन्यथासिद्धेरशङ्कनीयत्वात्। अत्राधिकरणद्वयेप्यैकरूप्येण धर्मपदेन लिंगपदेन वा हेतूपस्थापन सम्भवति, अथवा लाघवार्थं पूर्वाधिकरणे धर्मलिंगान्यतरपदेन हेतुनिर्दिश्य "आकाशश्च 'इतिवा निर्देष्टु शक्यम्, चशब्दमहिम्ना पूर्वहेत्वनुकर्षसिद्धे, तथाच पूर्वाधिकरणे धर्मशब्देन अनन्तराधिकरणे लिंगशब्देन च हेतु निर्दिशतोऽय भावोऽवगम्यते— लिंगपद मनन्यथासिद्धिरूपप्राबल्याभिप्रायकम्, इदमवश्य साधकमेवेति विवक्षितत्वात्, श्रुत्यवलम्बनपूर्वपक्षस्य लिंगमात्रेण निरासासम्भवात्, पूर्वसूत्रे पूर्वपक्षस्य लिंगमात्रेण निराकरणसम्भवाच्चद्धर्मपदेन हेतुनिर्देश इति।

परेतु–प्रतिष्ठिवलाद्भूताकाश इति पूर्वपक्षे–कारणत्वादिभिरानन्त्येनच ब्रह्मैव, जैवलिना "अन्तवद्वै किलते शालावत्य सामे" ति पृथिवीलोकं परिच्छिन्नत्वेन दूषितवता किन्तर्ह्यपरिच्छिन्न वस्तु तस्य कारणमिति कथनेन तस्याः परिच्छेदसिद्धेः तस्य च भूताकाशे असम्भवादिति सिद्धान्त इति। अपरेन्वे चानन्तशब्दार्थमेवमेवाहुः । सर्वेषामपि पक्षे ऽ नन्तशब्दार्थो नुपपन्नः । तथाहि– शालावत्य दाल्भ्य जैवलिभिस्त्रिभिरारब्धायां कथायां प्रथमं शालावत्यदाल्भ्ययोः प्रश्नोत्तरपरम्पराप्रसृता - " का साम्नो गतिरिति स्वर इति होवाच, स्वरस्य का गतिरिति प्राण इति होवाच, प्राणस्य का गतिरिति अन्नमिति होवाच, अन्नस्य का गतिरिति आप इति होवाच, अपां का गतिरिति असौ लोक इति होवाच, अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदितिहोवाचे ' ति । एवं दाल्भ्येन स्वर्गलोके सामकारणपरम्पराविश्रान्तिभूमित्वेन स्थापिते तस्य पक्षश्शालावत्येन दूषितः– " अप्रतिष्ठितं वै किल ते दाल्भ्य सामे " ति । एवं दूषितस्वपक्षतया शिष्यभावं प्राप्तस्य दाल्भ्यस्य शालावत्यस्य च प्रश्नद्वयमुत्तरद्वयं च प्रवृत्तम्— " अमुष्य लोकस्य का गतिरिति अयं लोक इति होवाच अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाचे" ति । ततश्शालावत्यपक्षो जैवलिना दूषितः— " अन्तवद्वै किल ते शालावत्य सामे " ति । ततो जैवलिशिष्यभावं प्राप्तस्य शालावत्यस्य जैवलेश्च प्रश्नोत्तरे " अस्य लोकस्य का गतिरिति आकाश इति होवाचे" ति । अस्य प्रकरणस्य साम्नो मूलकारणे प्रश्नोत्तरयोस्तात्पर्यम्मूलकारणमसौ लोक इति दाल्भ्यमतम् , अयं लोक इति शालावत्यमतम् , आकश एवेति जैवलिमतम् । स एव सिद्धान्तः । अत्र सावधिकत्वेन हि मूलकारणत्वं दूष्यते । तच्च " अप्रतिष्ठितं वै किल ते दाल्भ्य सामे " त्यमुष्य लोकस्य सामकारणपरम्पराविश्रान्तिभूमित्वाभावाभिप्रायेण साम्नो ऽ प्रतिष्ठितत्व कथनादवगम्यते । अस्य चोपक्रमत्वादेतदनुसारेण "अन्तवद्वै किल तेशाला

यत्य सामे " त्राापि अस्य लोकस्यापि कारणरूपान्यन्तरसत्त्वेन तस्य सामकारणपरम्पराविश्रान्तिभूमित्वाभावाभिप्रायेण तवत् सामेत्युच्यते । यद्यस्य लोकस्य वस्तुपरिच्छेदादिनैव, दोष उद्भाव्येत तदा ' अस्य लोकस्य का गति ' रिति प्रश्नानुपपन्न । इदमपि सकारणमित्युक्तो किं तस्य कारणमिति प्रश्न उपपद्येत । तस्य कारणत्वासम्भवे उद्भाविते " अमुष्य लोकस्य का गति " रिति वा, साम्न का गतिरिति वा प्रश्न स्यात् । एव च सामशब्देन किं विवक्षित यस्यद नेभवमुच्यते इति, आकाशशब्देनच किमभिप्रेतमित्याकाङ्क्षायामुक्त " स एष परोवरीयानुद्गीथस्स एषोनन्त ' इति । अनेनैव समभिव्याहारेण उद्गीथप्रधानप्रणवप्रतिपाद्यो भगवानेव जगत्कारणमिति स्थापयितुमेव ' का साम्नो गति " रित्यादिसरम्भ इत्यवगम्यते । अतो देवतानिर्धारणार्थ एवायमनन्तशब्द , नतु दूषणोद्धारार्थ । ननु कारणरूपावधिमत्त्वेन पूर्वमते दूषितेपि अत्रानन्तशब्देन रूढिपरिग्रहो न युक्त , अनन्तशब्देन कारणरूपावध्यभावस्यैव वक्तुमुचितत्वात् , तस्यानुक्तौ "आकाशस्य का गति" रिति प्रश्नप्रसङ्गादिति चेन्न, आकाशस्य चरमकारणत्वद्योतनार्थमेव ' सर्वाणि ह वे' ति वाक्यप्रवृत्ते । प्रश्नानुत्थानार्थमेवच तद्द्योतनम् । यदि हि पूर्वरीत्या 'अमुष्य लोकस्य का गति " रितिवत् अस्य लोकस्य का गति' रितिवच्च 'आकाशस्य का गति' रिति प्रश्नमुक्त्वा, "न स्वर्ग लोकमति नयेदि ' तिवत् 'न प्रतिष्ठा लोकमतिनये'दितिवच्च तत्स्थाने 'स एषोऽनन्त' इत्युत्तरमुच्येत, तदानन्तशब्दोवध्यभावपर इति निर्णीयेत । नच तादृश सन्दर्भो दृश्यते । अतोऽनन्तशब्दो रूढ एवेति ।

अनन्तशब्दे योगरूढोऽमुष्योमेपत्व मन्यमान प्रति रूढिबलीयस्त्वन्यायावलम्बनेन भावति कारणत्वपर्यवसायक वाक्यान्तरस्य, तन्न्याया नपेक्षन्दृश्युन्मेषवद्विष्णुपदेन तादृशनृसिंहपदेन च पर्यवसाययितु विष्णु

पदचिह्नितेन कठवल्लीस्थेन " यदिदं किञ्च जगत्सर्वं प्राण एजती " ति वाक्येन नृसिंहपदचिह्नितताणनीयवाक्योक्तभयहेतुत्वेन प्रतिपादितस्य प्राणस्य प्रतिपादकवाक्यं विचारयति—

१. अत एव प्राणः ॥१—१—२४॥

छान्दोग्ये श्रूयते- " प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते " ति प्रस्तुत्य, " कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते " ति । अत्र प्राणशब्दो ऽप्याकाशशब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमादिलिङ्गात् - प्रसिद्धवन्निर्दिष्टात् । अधिकाशङ्का तु- कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात्, बृहदारण्यके- " यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनो यदा प्रबुध्यते प्राणं देवा अपि पुनर्जायन्त " इति प्रसिद्धवन्निर्देशरहितया श्रुत्या प्राणस्याप्ययोद्गमनहेतुत्वावगमाच्च, प्रसिद्धप्राण एव जगत्कारणम् । प्राणस्य चाचेतनस्य प्रस्तावदेवतात्वं अन्नस्याचेतनस्य प्रतिहारदेवतात्ववदुपपद्यते । अन्नस्याचेतनत्वञ्च " अन्नमेव प्रतिहरमाणानि जीवन्ती " त्यनेनावगम्यते;—इति ।

परिहारस्तु- शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात् " सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत " इति नोपपद्यते, "प्राणं तर्हि वागप्येती"त्यादिश्रुतिरिन्द्रियव्यापारविषयेति ; अतः " प्राण इति सर्वाणि भूतानी " ति प्राणशब्देन परं ब्रह्मैवाभिधीयत इति ।

अपरे त्वेतदधिकरण " तद्वै त्व प्राणो अभव । महान् भोग प्रजापते । भुव करिष्यमाण । यद्देवान्प्राणयो नवे" ति तैत्तिरीयवाक्यविषयं योजयन्ति । तन्न, सूत्रास्वारस्यात् । 'अत एवे' त्यस्य पूर्वप्रकृत हेतुपरामर्श एव स्वारस्यात्, पूर्वप्रकृतकारणत्वादीनामुदाहृतवाक्ये श्रवणाभावात् । अतएवेति परामर्शनीयतया तदुक्तस्य " अद्भ्यःसम्भूत " इत्यनुवाकोक्तस्य श्रीभूपतित्वस्याकाशाधिकरणे विवक्षितत्वाभावादिति ।

इति प्राणाधिकरणं – नवमम् ।

## अथ ज्योतिरधिकरणम् ।

" इद पुरुषसूक्त हि सर्ववेदेषु पठ्यते " इति सर्वशाखासु पाठेन सकलशाखातात्पर्यग्राहकपुरुषसूक्तमत्यभिज्ञया भगवति कारणत्वपर्यवसायक वाक्य निरूपयति—

१- ज्योतिश्चरणाभिधानात् ॥ १- १-२५ ॥

*छान्दोग्ये श्रूयते " अथ यदत परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वत पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वा व तद्यदिदमस्मिन्नन्त पुरुषे ज्योति " रिति* । पृष्ठेषु- उपरितनेषु, " त्रिपादूर्ध्व " " तमसो परिष्टा " दित्यादि श्रुतिभ्य । व्यष्टिसमष्टिविवक्षया " विश्वत सर्वत " इत्युक्तम् । अनुत्तमेषु- स्वस्मादन्य उत्तमो नास्तीत्यनुत्तम । इदञ्च वाक्य कारणविषयम्, निरतिशयदीप्तियोगस्य कारणत्वाक्षेपकत्वात् ; " न तत्र सूर्यो भाति " " तस्य भासा सर्वमिद विभाती " ति प्रकरणे " तथाक्षरात् सम्भवतीह विश्व " मिति निरतिशदीप्तियुक्तस्य वस्तुन कारणत्वश्रवणात् । तत्प्रकरणस्य कारणविषयत्व ह्यविगीतम् , परमात्मविषयत्वे हि विमति ।

अत्र संशय — निरतिशयदीप्तियोगात्कारणभूत ब्रह्म भवत् ज्योतिश्शब्दनिर्दिष्टोऽर्थ किं प्रसिद्धभूततृतीयज्योति , उत तदन्य इति ।

अत्र पूर्वः पक्षः— प्रसिद्धेः कौक्षेयज्योतिषैक्योपदेशाद्दीप्तिरूपत्वात् त्वाच्च प्रसिद्धभौतिकज्योतिरेव ज्योतिश्शब्दार्थः । "इदं वा व तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति" रिति कौक्षेयज्योतिषैक्यमुपदिश्यते । तस्य च भौतिकत्वं "तस्यैषा दृष्टिर्यत्रैतदस्मिच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिः यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उप शृणोती" ति उष्णस्पर्शगुणकत्वाम्नानात् सिद्धम् । एवं कौक्षेयज्योति रैक्योपदेशदीप्तिम्यामुपोद्बलितया प्रसिद्ध्या ज्योतिश्शब्दस्य महाभूत तृतीयपरत्वे निश्चिते सति, तदनुसारेण कारणवाक्येषु श्रूयमाणो भूतशब्दो नाचित्संसृष्टचेतनपरः, किन्त्वचिन्मात्रपरः । अत्रापि पूर्वाधिकरणवत् सूक्ष्मरूपेण निखिलजगत्कारणत्वं विवक्षितमिति ।

राद्धान्तस्तु— ज्योतिश्शब्दनिर्दिष्टोऽर्थः प्रसिद्धज्योतिषोऽन्यः, चरणाभिधानात्—उपक्रमे "पादोस्य सर्वाभूतानि त्रिपादस्यामृतं दिवी" त्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूताभिधानात्, स्वस्यापि सर्वान्तर्भावेन सर्वभूतपादत्वस्य प्रसिद्धज्योतिष्यसम्भवात् । सूत्रे 'चरणाभिधानादि' त्यनेन युक्त्यन्तरमपि संगृहीतम् । "पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी" ति वाक्यमुखेन पुरुषसूक्त प्रत्यभिज्ञायते । तस्य च सर्ववेदतात्पर्य निर्धारकत्वद्योतनार्थमेः सर्ववेदेषु पाठात्, "वेदेषु पौरुषं सूक्त" मित्यादिना सर्ववेदापेक्षयाभ्यर्हितत्वश्रवणाच्च, तदनुरोधेनेतरेषां वाक्यानां नेयतया पुरुषश्रुत्यनुसारात्, 'अमृतत्वस्येशान' इति मोक्षप्रदत्वश्रवणाच्च ज्योतिश्शब्दो न महाभूततृतीयपरः, किन्तु पुरुषपर इति । पादाभिधानादित्युक्ते शब्दप्रत्यभिज्ञा स्यात्, न त्वर्थतः, अर्थतोऽपि प्रत्यभिज्ञां द्योतयितुं चरणग्रहणम् । 'पादोस्य सर्वा भूतानि' 'पादोस्य विश्वा भूतानी' त्यनयोः स्तुतिपरत्वेऽन्यतरस्य स्तुतिपरत्वेवार्थतः प्रत्यभिज्ञा न स्यात्, बाधकाभावादुभयमप्यर्थपरमिति चरणग्रहणस्य भावः ।

ननु सर्ववेदतात्पर्यनिर्धारकपुरुषसूक्तेन चिदचिद्विलक्षणपरमात्म सिद्धेर्वाक्यान्तराणां सर्वेषां तदनुरोधित्वाचायोगव्यवच्छेदाधिकरणानाम नारम्भ एव प्रसज्यत इति चेत्? सत्यम्, तत्तद्वाक्यस्वारस्यपर्यालोचनयैव सर्वेषां वाक्यानां परमात्मपरत्वं व्यवस्थापयितुं पुरुषसूक्तानाकलनेनैव पूर्वपक्षमुत्थाप्य तदनाकलनेनैव सिद्धान्तकरणात्; इह तु स्ववाक्यस्वारस्येन सिद्धान्तकरणायैव पुरुषसूक्तस्योपन्यासः । कौक्षेयज्योतिषैक्योपदेशश्च चिदचिद्विलक्षणे वस्तुन्यपि सम्भाव्यते, "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इत्युक्तेः । दीप्तियोगश्च 'आदित्यवर्ण'मित्येतत्प्रत्यभिज्ञापकः । विग्रहद्वारा च तदुपपत्तिः ।

२. छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम् ॥ १-१-२६ ॥

उपक्रमे— 'गायत्री वा इदं सर्वं भूत' मिति गायत्र्याख्यं छन्दोभिधाय, 'तदेतदृचाभ्यनूक्त' मित्युदाहृतायाः 'तावानस्य महिमे" त्यस्या ऋचोपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानम्; यद्यपि छन्दोमात्रप्रसिद्धस्यापि गायत्रीशब्दस्य परमात्मासाधारणसर्वभूतपादवत्त्वलिङ्गबलात्परमात्मविषयत्वं अकाशाधिकरणनयेन सिद्ध्यति, तथापि गायत्रीशब्दस्य ब्रह्मपरत्वे चतुष्पदेत्यस्य 'टावृची' ति विहितटावन्तत्वानुपपत्तेः छन्दोविषयत्वमावश्यकमिति चेन्न;— न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दोमात्रस्य सर्वभूतपादवत्त्वानुपपत्तेः । अत्र हेत्वनुपन्यासः पूर्वसूत्रस्यहेतोरेवान्वयात् । ततश्च ब्रह्मण एव गायत्री चेतोर्पणनिगमात्—ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यते । गायत्रीवाक्यनिर्वाहस्यापि उक्तहेतुसहकारित्वान्निगमादिति पञ्चम्यन्तनिर्देश । 'तथा हि '- अन्यत्रापि सादृश्याच्छन्दोभिधायी शब्दो अर्थान्तरे प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायां 'ते वा एते पञ्चान्ये पञ्चान्ये दश

सम्पद्यन्ते ' इत्यारभ्य. ' सैषा विराडन्ना ' दित्युच्यते । वाय्वग्निचन्द्र सूर्यसलिलानि प्राणवाक्चक्षुःश्रोत्रमनांसि च दशसंख्यत्वाद्विराट् । अन्नं च तदत्ति चेत्यन्नात् । अनुसन्धानफलं च श्रूयते ' पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेदे ' ति । पूर्णत्वमपरिच्छिन्नत्वम् । अप्रवृत्तित्वमचलत्वं-स्थिरत्वम् । अनन्तास्थिरा श्रीर्मुक्तैश्वर्यम् । ननु हार्दाकाशविशिष्टपरमात्मोपासनफलं हि तच्छ्रूयते; " यद्वै तद्ब्रह्मेतीदं वा व तद्योयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः, अयं वा व स योयमन्त:पुरुष आकाशो यो वै सोन्त:पुरुष आकाशः, अयं वा व स योयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ती" ति हि श्रूयते, अतो न गायत्रीसादृश्यानुसन्धान फलमिदमिति । उच्यते, स्वतोपरिच्छिन्नत्वेपि ब्रह्मणः परिच्छिन्नः पदार्थैश्चतुष्पात्त्वोपदेशस्योपासनार्थत्वाभावे वैयर्थ्यात् , प्रकरणे तस्य फलान्तराविधानाच्च गायत्रीसादृश्यरूपस्य चतुष्पात्त्वस्यानुसन्धेयता प्रतीयते; तत्र भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वेभिहिते ब्रह्मणोऽपूर्णत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवृत्तित्वगुणकतयैव चतुष्पाद्ब्रह्मण उपासनं विधीयते । चतुष्पदेति च गभीरायां नद्यां घोष इत्यत्रेव गायत्रीविशेषणमेव ।

उपक्रमस्थगायत्रीशब्दानुरोधेन मन्त्रगतसर्वात्मकत्वमस्वारस्येन नि-र्वाह्यम् , ननु सर्वात्मकत्वानुरोधेनोपक्रमस्थगायत्रीपदास्वारस्यं न्याय्यमिति शङ्कायां, उपक्रम एव गायत्रीपरत्वे स्वारस्यहानिरुच्यते—

२· भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १–१–२७ ॥

उपक्रमे ह्येव श्रूयते—" गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च, या वै सा गायत्रीयं वा व सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते, या वै सा पृथिवी इयं वा व सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते, यद्वै तत्पुरुषे शरीरमिदं वा

व तद्यदिदमस्मिन्नन्त पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते, सैषा चतुष्पदा षड्विधा गायत्री " इति । " गायत्री वा इदं सर्वं भूत " मिति गायत्रीशब्दश्चतुष्पाद्ब्रह्मपरः, सर्वभूतशब्द आत्म परः, आत्मवर्गस्य पादत्वं सामानाधिकरण्येनोक्तम् , तस्यैव ब्रह्मणो गान त्राणादिभिष्षाड्विध्यं च विवक्षुः श्रुतिः गानत्राणोपपादनाय वाग्रूपत्वमाह- " वाग्वै गायत्री " ति । गायत्रीशब्दवाच्यं चतुष्पाद्ब्रह्म वाग्रूपविशिष्ट मित्यर्थः । " रसोहमप्सु कौन्तेये " त्यारभ्योच्यते— "शब्दः खे पौरुषं नृष्वि" ति । तथा भगवत्पराशरवचनम् "शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः" इति । ततः किं विवक्षितषाड्विध्यस्येत्यत्राह– " वाग्वा इदं सर्वं भूतं गायति च त्रायते चे " ति । वाग्विशिष्टं परं ब्रह्म सर्वं भूतं गायति- अभिधत्ते, हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थ. । एवमेकः पादो गान त्राणरूपविधाद्वयं चोक्तम् । तदनुवादपूर्वकं द्वितीय पादं सामानाधिकरण्ये नाह— " या वै सा गायत्री इयं वा व सा येयं पृथिवी " ति । उक्ता कारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ । या सा सर्वभूतरूपैकपादा गायत्री- गायत्र्याख्यं ब्रह्म, तदेव पृथिवीत्यर्थः । कथं पृथिव्या ब्रह्मात्मकत्वमित्य- त्राह- " अस्यां ही " ति । ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम् , न हि केवलपृथिव्याम्सर्वभूतधारणशक्तिरित्यर्थ । प्रतिष्ठात्वं च नियतमित्याह - " एतामेव नातिशीयत " इति । पृथिवीं भूतजातं नातिवर्तते, कर्मवश्या त्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थ । पृथिवीमयब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते । एव द्वितीय पादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । अथ तृतीय पादमाह- " या वै सा पृथिवी इयं वा व सा यदिदमस्मिन् पुरुषे शरीर " मिति । पुरुषशब्दश्शरीरविशिष्टजीवपरः । पृथिवीरूपपादविशिष्टा या सा गायत्री गायत्र्याख्यं ब्रह्म, सा शरीरम् - शरीराख्यपादविशिष्टेत्यर्थ । भूतपृथिव्योर्गायत्रीसामानाधिकरण्येन निर्दिष्ट तया पृथिवीशब्दस्य ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वात् , अप्रयतमायन्या-

यादत्रापि पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्तत्वाच्च । शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्यामुपपादयति—"अस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्त " इति । चतुर्थं पादमाह– " यद्वै तत्पुरुषे शरीरं इदं वा व तद्यदिदमस्मिन्नन्त:पुरुषे हृदय " मिति । शरीरारूयपादविशिष्टं यत् गायत्र्याख्यं ब्रह्म तदेव हृदयमित्यर्थः । पूर्ववद् ब्रह्मात्मकत्वमुपपादयति " अस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्त " इति । प्राणाः प्राणापानादयः, इन्द्रियाणि वा, तेषां हृदयसम्बन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्व तदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम्। "सैषा चतुष्पदा षड्विधा गायत्री"- एषा चतुष्पदा षड्विधा सा गायत्रीत्यन्वयः । एतद्ब्रह्म चतुष्पदत्वेन षड्विधत्वेन च प्रसिद्धा गायत्रीत्यर्थः । विधेयानुसारात् स्त्रीलिंगनिर्देशः । " इन्द्रश्शचीपतिः बलेन पीडितः । दुश्च्यवनो वृषा । समित्सुसासहिः"— इति चतुष्पदा षड्विधा च गायत्री प्रसिद्धा । तस्याश्च षड्विधत्वं तत्पादस्य षडक्षरत्वात् । चतुष्पदेति गायत्रीपदमुख्यार्थस्यैव निर्देशः , तस्य पदस्य ऋग्वाचकत्वाभावे " टाबृची " ति विहितटाबनुपपत्तेः । अतश्चतुष्पदेति पदं गम्भीरायां नवामित्यत्र गभीरपदवद्गायत्रीपदमुख्यार्थे विशिनष्टि । षड्विधेति पदमपि तत्समभिव्याहारात्तद्विशेषणमेव । एवंच ब्रह्मणि गायत्र्यां च चतुष्पात्त्वषाड्विध्योक्तेः ब्रह्मणि गायत्रीसादृश्ये तात्पर्यमव गम्यते । एवं च गायत्रीपदस्य विशेषणद्वयसमभिव्याहारलब्धोयमर्थः— पादविधाभ्यां गायत्रीसदृशं ब्रह्मेति । एवं भूतपृथिवीशरीरहृदयानां पादत्वेन व्यपदेशो ब्रह्मण एव गायत्रीशब्दाभिधेयत्व उपपद्यते । चरणाभिधानादिति वत् पादाभिधानादिति वक्तव्ये व्यपदेशग्रहणं " पादोस्य सर्वा भूतानी " ति वत् भूतादीनां पादत्वस्य कण्ठोक्त्यभावात् । सामानाधिकरण्याद्गायत्रीपदप्रयोगस्य सादृश्यनिबन्धनत्वाच्च अर्थादेव हि भूतादीनां पादत्वप्रतीतिः।

छन्दोमात्रस्य सर्वभूतपदत्वाद्ययोगात्, तथा "गायत्री वा इदं सर्वमि" त्यादिरपि न छन्दोमात्रविषयं, छन्दसस्सर्वात्मकत्वायोगात्; किन्तु तत्र गायत्रीशब्दो गायत्रीरूपस्वविकारानुगतब्रह्मानुसन्धानोपदेशात्तल्लक्षकं, विकारश्च ब्रह्मानुगते ब्रह्मण्युपलक्षणमिति न सर्वात्मकत्वानुपपत्तिः । तथाह्यन्यत्रापि विकारानुगतब्रह्मानुसन्धानोपदेशो दृश्यते— "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त" इत्यादौ । तथेत्यस्य तेन विकारानुगतत्वेन प्रकारेणेत्यर्थः । इति ।

अपरे तु- ज्योतिश्चरणाभिधानात् । बह्वृचा पठन्ति "वि मे कर्णा पतयतो विचक्षुर्वी इदं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधी किंस्विद्वक्ष्यामि किमु नू मनिष्ये" इति । मम कर्णौ ज्योतिषो विरुद्धं पततः, चक्षुश्च विरुद्धं पतति, यदिदं हृदय आहितं ज्योतिः तदत्यन्तं कर्णादिविरुद्धं वर्तते, मनश्चातिविरुद्धश्चरति, अतो व्यासबुद्धिरप्यहं किन्नु वक्ष्यामि, किं वेदं अनुचिन्तयेयम्, इति मन्त्रार्थः । अत्र हृदयाहितज्योतिः किमग्निः किं वा विष्णुरिति सन्देहः । अग्निरिति पूर्वः पक्षः, अस्य मन्त्रस्याग्निसूक्तान्तर्गतत्वेनाग्निप्रकरणत्वात्प्रसिद्धेश्चेति । राद्धान्तस्तु विष्णुरेवेदं ज्योतिः, कर्णादीनामेतज्ज्योतिर्विरुद्धचरणाभिधानात् । कर्णादिविदूरत्वं हि "परो मात्रया तनुवा वृधान" इत्यादिना विष्णोरेवावगम्यते । मीयते विषयानेवेति मात्रा इन्द्रियगणः । तत्परोऽसीत्यर्थः । नच प्रकरणविरोधः, लिङ्गेन प्रकरणबाधोपपत्तेः । नच श्रुतिविरोधः, श्रुतेर्विष्णावपि सावकाशत्वात् । छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् । छान्दोग्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इत्यादौ ज्योतिः श्रूयते, तच्च गायत्रीत्वेन पठ्यते, "गायत्री वा इदं सर्वमि" त्युपक्रमात्, सा गायत्री किं विष्णुः उत छन्दोविशेष इति संशयः । पूर्वपक्षस्तु—गायत्रीपदेन छन्दोविशेष एवाभिधीयते, गायत्रीशब्दस्य तत्रैव रूढत्वात्;

तस्माज्ज्योतिश्शब्देनापि स एवाभिधीयते न विष्णुरिति। सिद्धान्तस्तु गायत्रीपदेन विष्णुरेव निगद्यते, *गायत्रीशब्दार्थोऽसावित्युपासनार्थम्।* अतो ज्योतिश्शब्देनापि स एव निगद्यते। कुत एतदितिचेत्? गायति च त्रायते चेति गानत्राणकर्तृत्वलिङ्गश्रवणात्। तस्य छन्दस्यसम्भवात्। अतो विष्णुरेव गायत्री, ज्योतिरपि स एव। **भूतादिपादव्यपदेशोपपत्तेश्चैवम्।** "एतावानस्य महिमा, अतो ज्यायांश्च पुरुषः पादोऽस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवी"ति गायत्रीमधिकृत्योदाह्रियते। सर्वाणि भूतान्यस्यैकः पादः, अस्यामृतस्वरूपभूतं पादत्रयं दिवि तिष्ठतीति पादोऽस्येत्यादेरर्थः। एवं गायत्र्या भूतादिपादव्यपदेशाच्च सा विष्णुः, तस्य विष्णावेवोपपत्तेः, *अन्यत्रानुपपत्तेश्चेत्यर्थः।* इति।

अत्रेतु—दिवि श्रूयमाणं परं ज्योतिः किं सूर्यो जाठराग्निः परमेश्वरो वेति संशयः। पूर्वपक्षस्तु द्योशब्दस्याकाशवाचित्वात् परोऽविव दूराकाशवर्ती सूर्य एवात्र प्रतिपाद्यते, अथवा 'यदिदमस्मिन्नन्तः पुरुषे ज्योतिरि"ति पुरुषान्तर्वर्तितया जाठराग्निरिति। सिद्धान्तस्तु– "परो दिवो ज्योतिरि"ति सर्वोत्तरं परं ज्योतिः परमेश्वर एव, 'पादोऽस्य सर्वा भूतानी'' ति ज्योतिषोऽस्य एकांशतया सर्वभूतानामभिधानात्, नैतज्जाठराग्निसूर्ययोः सम्भवति, परिच्छिन्नत्वादिति। द्वितीयसूत्रे अन्येषां भाष्ये सिद्धान्तान्न विशेषः। टीकायां तु '*तथाचेतोर्पणनिगमात्तथाहि दर्शनमि*' त्यत्र प्रकारान्तरेण योजितः। तथा– तेन गायत्र्यवच्छिन्नत्वप्रकारेण, ध्यानोपदेशात्, तथाऽन्यत्रापि 'एतमेव बह्वृचा महत्युक्थे मीमांसन्त' इत्यादौ कार्यविशेषावच्छिन्नपरमेश्वरदर्शनोपासनमस्तीति।

परपक्षे सिद्धान्ते ब्रह्मण एव त्रिपाद्रूपत्वोपपत्तिरनुपपन्ना, दिगाद्यधिकरणादिदशानुपपत्तेः, व्यापकत्वाद्ब्रह्मणः। नच द्युशब्दो द्योतनगानस्वरूपपरः, सप्तम्यन्तत्वात्स्यात्। द्वितीयसूत्रे गायत्रीशब्दो गायत्रीप्रतिपादकत्वानुगतब्रह्मानुसन्धानोपदेशात्परः इत्यसङ्गतम्, उत्तरे सूत्रे तयो

स्वारस्यासिद्धेः । सूत्रे तावत्तथाशब्देन छन्दसः प्रकृतत्वाच्छन्दस्सादृश्यमेव ह्यवगम्यते, न विकारानुगतत्वम् । वाक्ये "गायत्री वा इदं सर्वमि" त्यारभ्य ब्रह्मणि भूतपृथिवीशरीरहृदयरूपांश्चतुरः पादान् गानत्राणभूतप्रतिष्ठात्वतदनतिवर्त्यत्वप्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपाण्यड्विधाश्चोपदिश्य , "सैषा चतुष्पदा षड्विधा गायत्री" ति गायत्र्यामप्यन्यदेव चतुष्पात्त्वं षाड्विध्यं चोच्यते; पूर्वोक्तपादविधानां ब्रह्मसम्बन्धित्वं गायत्र्यास्तद्योग्यत्वादवगम्यते । सैषेत्यस्यायमर्थः- एषा- एतद्ब्रह्म, चतुष्पदत्वेन षड्विधत्वेन च प्रसिद्धा या गायत्री सेत्यर्थः । चतुष्पदेति गायत्रीपादस्यैव निर्देशः । तस्य पदस्य ऋग्वाचकत्वाभावे टाबृचीति विहितटावनुपपत्तेः । अतश्चतुष्पदेति पदं गभीरायामाचामित्यत्र गभीरपदवत् गायत्रीपदमुख्यार्थं विशिनष्टि । षड्विधेति पदमपि तत्समभिव्याहाराद्गायत्र्याश्चतुष्पात्त्वस्य प्रतिपादं षडक्षरत्वेनोपपाद्यत्वाच्च गायत्रीपदमुख्यार्थविशेषणमेव । एवं च ब्रह्मणि गायत्र्यां च चतुष्पात्त्वषाड्विध्योक्तिर्ब्रह्मणि गायत्रीसादृश्ये तात्पर्यमवगम्यते। एवंच गायत्रीपदस्य विशेषणद्वयसमभिव्याहारलभ्योयमर्थः- पादविधाभ्यां गायत्रीसदृशं ब्रह्मेति । अवयवगतस्यापि षाड्विध्यस्य समानधर्मतया विवक्षा "अष्टावुपभृति अष्टाक्षरा गायत्री यदष्टाकपालो भवत्यष्टाक्षरा गायत्री" त्यादिवदुपपद्यते । अतस्सादृश्यानुसन्धानविधावेव वाक्यस्य स्वारसिकन्तात्पर्यम् । एतदनुसाराल्लक्षणातोपि गौणवृत्तिरेव ज्यायसी । अथवात्र माभूत् गौणी वृत्तिः, सामानाधिकरण्येन गायत्रीपदमुख्यार्थस्यैव ब्रह्माभेदप्रतिपादने सति तस्यासम्भवाद्वाक्यस्य सादृश्यानुसन्धानविधितात्पर्यावगमे सति सादृश्यानुसन्धानविधेः कल्पनात् । "अन्योन्तर आत्मा","शारीर आत्मे" ति चारोपरूपवाक्यं च दृश्यते । महावाक्यतात्पर्याबाधाच्च न प्रामाण्यहानिः । 'तथा हि दर्शनमि' त्यस्यापि न परोक्तार्थ उपपन्नः, 'एतमेवे' ति वाक्यस्य सर्वकर्मसमाराध्यत्वपरत्वात् । एतमेव परमात्मानं पूजितत्वेन तत्तत्सम्बन्धितया निर्धारयन्तीति हि वाक्यार्थः । इति ।

अपरेयः पक्षोऽप्यनुपपन्न । तथाहि चरण हि प्रतिसम्न सापेक्षम्, नचेन्द्रियरूपप्रतिसम्बन्धि सूत्रे निर्दिष्टम् । चरणशब्द पादपरत्वे ज्योति पदसमभिव्याहारात्तदेव प्रतिसम्बन्धीति गम्यते न्चि "पादोस्य सर्वा भूतानी" ति वाक्येन ज्योतिस्सम्बन्धिचर मवगतम्, सूत्रेपि स्वरसतस्स एवार्थोऽवगम्यते, अतस्सूत्रसमानार्थत्वादि मेव वास्य विषय । किञ्चास्य सूत्रस्य बह्वृचवाक्यविषयत्वे छ मिधानभूतादिपादव्यपदेशोपदेशभेदाना बह्वृचवाक्ये श्रवणाभावेनोत्तरसूत्राण मसाङ्गत्यमेव स्यात् । अतएव तेषामधिकरणान्तरत्वमिष्यत इति चेन, छन्दोभिधानात् ब्रह्म नात्र गायत्रीशब्दार्थ इति वा—' परो दिवो ज्योति ' रित्यत्र ज्योतिश्शब्दार्थो न भवतीति वा शक्यत इति वाच्यम्, ' चे ' दित्यनेन शङ्कात्वावगमात्, नचैव शङ्का सगच्छते, ब्रह्म गायत्री शब्दार्थ इति वा, ' परो दिवो ज्योति ' रित्यत्र ज्योतिश्शब्दार्थ इति वा प्रागप्रसक्तत्वात् । ननु ' इद ज्योतिर्हृदय आहित ' मित्यत्र ज्योति पदेन ब्रह्म नाभिधीयते, ' अथ यदत पर ' इत्यत्र ज्योतिश्शब्देन ब्रह्म नभिधानात् तच्च गायत्रीशब्देन छ दोभिधानात्, ज्योतिष एव गायत्री त्वात्तज्ज्यो तिष पुरुषा तवर्तिज्योतिषैक्योपदेशाचेति शङ्कार्थ इति चेन्न,— अत्र ज्योति पदस्य गाय त्रीपरत्वे तस्य पुरुषा तर्वर्तिज्योतिषैक्यासम्भवेन तदुक्तेरर्थवादतया ' इद ज्योतिर्हृदय आहित ' मित्येतज्ज्योतिराक्षेपासम्भ वात् । वाक्यद्वयेनापि पुरुषा तज्ज्योति प्रतिपादने ह्याक्षेपस्स्यात् । नच छ दोभिधानविधुरवाक्ये पुरुषा तर्वर्तिज्योति प्रतिपादन छ द परम् पुरुषा त र्वतित्वश्रुतिरर्थवाद इति वक्तु शक्यम् । अतो न पूर्वसूत्रार्थाक्षेपसम्भव । सम्भवेपि वा कथ नैकाधिकरणता, पूर्वशेषत्वात् । तदङ्गीकारे च पूर्वसूत्र स्यापि च्छा दोग्यवाक्यविषयत्वमेव युक्तमित्युक्तम् । नच तथासति चरणाभिधानभूतादिपादव्यपदेशोक्त्यो र्पौनरुक्त्यम्, उभयोर्भिन्नहेतुत्वा य परताया प्रागेवाभिधानात् । छन्दोभिधानादित्यत्र च तथाशब्देन छन्द

स्साधर्म्यमेव स्वरसतोवगम्यते, नतु गायत्रीशब्दार्थत्वम्। निगदादित्य यमपपाठ, सम्प्रदायविरोधादर्थविरोधाच्च। पाठोहि निगदः। नच चेतोर्पण पठ्यते, किन्तु तात्पर्यविषयतया गम्यते। अतो निगमादित्येव युक्तः पाठ। निगम - पर्यवसानम्। चेतोर्पणार्थमिति त्वसङ्गतम्, प्रकृतिविकार भावाभावेन चतुर्थीसमासस्य अयन्यत्वात्। तथाहि दर्शनमित्यस्य उक्तार्थो स्यत्रापि दृश्यत इति हि स्वरसतोवगम्यते। लिंगदर्शनपरत्वे लिंगादिति वा लिंगदर्शनादिति वा स्यात्, नतु तथाहि दर्शनमिति। भूतादिसूत्रे चादि पदेन द्वितीयतृतीयचतुर्थपादतया विवक्षितानां पृथिवीशरीरहृदयानामेव ग्रहण स्वरसतो ऽवगम्यते। भूतादीना पादत्वविवक्षा च "सैषा चतुष्पदे" त्युक्तेरवगम्यते। नतु "त्रिपादस्यामृत दिवी" त्युक्तत्रिपात्स्वरूपस्यादि पदेन ग्रहणम्। यदुक्त पाड्विध्यानुवादेन चतुष्पात्त्व ब्रह्मणो विधीयते— "सैषा षड्विधा गायत्री चतुष्पदे" ति, तदेव चतुष्पात्त्व व्याख्यायते— "पादोस्य सर्वाभूतानि त्रिपादस्यामृत दिवी" ति, एवमनङ्गीकारेच "तदेत दृचाभ्यनूक्त" मित्यसङ्गत स्यात्, पूर्वोक्तचतुष्पात्त्वस्य चाभिधान एव हि 'तदेतदि' ति निर्देशस्समञ्जसो भवति, अतो भूतपृथिवीशरीरहृदया ना मपादत्वमिति। तन्न, गायत्रीशब्दस्य ब्रह्मपरत्वे चतुष्पदेत्यनुपपत्ते, 'टाप्यृची' ति ऋच्यभिधेयायामेव टाब्विधानात्। चतुष्पदेत्यस्य पादोस्येति विवरणमित्यप्यमङ्गलम्, पुरुषसूक्त 'पुरुष एवेद सर्वमि' ति मकृतिमाकृत कृत्स्नविभूतिकत्वमुक्त्वा, एतावत्येव विभूतिरिति बुद्धिनिवृत्तये पूर्वोक्तप्रसिद्ध विभूतिकत्व 'एतावानस्य महिमे' त्यनूद्य, 'अतो ज्यायाश्च पुरुष' इति ततो प्यधिकमहिमान प्रतिज्ञाय, स एव महिमा 'पादोस्य विश्वा भूतानि त्रिपादस्या मृत दिवी' ति- पूर्व 'पुरुष एवेद सर्व' मिति प्रतिपन्नविभूतिरेकदेशमात्रमेव ततोपि त्रिगुणविभूतिकत्व ब्रह्मणोस्तीति यथा प्रतिपाद्यते, तथात्रापि भूत पृथिवीशरीरहृदयविभूतिकत्वप्रतिपादनेन परिच्छिन्नविभूतिकत्वबुद्धिव्यावर्त नाय 'तदेतदृचाभ्यनूक्त' मिति विभूतिप्रतिपादिकामृचमवतार्य, 'तावानस्य

— महिमे' ति पूर्वोक्तचतुष्पात्त्वमनूद्य, 'ततो ज्यायाश्च पुरुष' इत्यधिकम मान प्रतिज्ञाय, तत्कथमित्यपेक्षाया 'पादोम्य सर्वा भूतानि त्रिपादस्या दिवी' ति पूर्वोक्त भूतादि अन्यदपि भूतभौतिक कृत्स्नमेकदेशमात्रं ततोपि त्रिगुणविभूतिक ब्रह्मेति हि प्रतिपाद्यते। 'सैषा चतुष्पदे' त्युक्तच . ष्पात्त्वमेव यदि 'पादोस्ये' त्यनेनोच्यते, तदा 'तावानस्य महिमे' ति 'सैषे ति वाक्योक्तमनूद्य, 'अतो ज्यायाश्च पुरुष' इति ततोप्यधिकमहिमान प्रतिज्ञाय, पादोम्ये' ति तद्विवरण कथमिवोपपद्येत? स्वस्यैव स्वस्मादुत्कर्षासम्भवात्, 'तावानस्य महिमे' ति, 'पादोस्य सर्वा भूतानी' ति च पूर्वोक्तस्यैवाभिधानात्। 'तदेतदृचे ति वाक्यमन्यासैव। अधिकोक्तिस्तु न दोष, तथासति 'अतो ज्यायानि' त्यनान्जस्यात्। 'एव' मिति चावान्तरसाध्य परत्र एव सार्थम्, परमसाध्यस्य पुन प्रतिज्ञानैरपेक्ष्यात्। ननु पादोस्ये' त्यस्य यद्येतद्विभूतिवतिपदार्था पाद नित्यविभूतिवर्त्यमृतपदार्था त्रिगुणा इत्यर्थ तदा द्युसम्बन्धेन ज्योति प्रत्यभिज्ञोक्तिरनुपपन्ना, ज्योतिर्वाक्य इवात्र स्वरूपस्य द्युसम्बन्धानवगमात्, त्रिपाद्विभूतेरेव ह्यत्र द्युसम्बन्धावगम, ज्योतिर्वाक्ये प्यमृतत्रिपाद्विभूतित्वमेव 'दीप्यत' इत्यनेन विवक्षित मित्युक्तौ, 'अथ यदत इत्यस्य 'तस्य भासा सर्वमिद विभाती' त्येतत्समानार्थत्वोक्तिविरोध, यदि ब्रह्मव्यतिरिक्तमेक पाद अमृत ब्रह्मस्वरूप त्रिपादित्युच्यते, तदा 'दिवी' त्यधिकरणनिर्देशानुपपत्त, दिवि विद्यमानस्येति द्युसम्बन्धेन व्यापकत्व विवक्षितं तस्य स्वरूपत्रिपादित्युक्तौ दिवीति व्यर्थम्, त्रिपादित्यनेनैव व्यापकत्वलाभात्, इति। तत्र, सर्वा भूतान्यस्य पाद अमृतमस्य त्रिपादित्युक्तया— अमृतातिरिक्त कृत्स्नमेक पाद अमृत पादत्रय मिति प्रतीते। स्वरूपातिरिक्ताना विभूतीनामेकपादत्वोक्त्या पादत्रयात्मकस्यामृतस्यापि स्वरूपातिरिक्तत्वमेव युक्तम्। नच तथैव द्युसम्बन्धात् प्रत्यभिज्ञाविरह, 'दिवि अस्य'— दिवि विद्यमानस्यास्येत्यर्थात्। एवमन्वयश्च 'अथ यदत परो दिवो ज्योतिर्दीप्यत' इति ज्योतिषो द्युसम्बन्धानु

वादात्, सन्निहितवाक्यस्य पुरोवादत्वे सम्भवति व्यवहितकल्पनायोगा च्चावगम्यते । अत्र द्युसम्बन्धिनाममृतत्वाभावस्य सुप्रसिद्धत्वाद्दिवि विद्य मानस्यामृतं त्रिपादिति द्युसम्बन्धकीर्तनस्य सप्रयोजनत्वाय हेतुगर्भतायां वाच्यत्वात्, तस्य हेतुताश्च त्रिपादमृतस्य तत्र विद्यमानतानिबन्धनत्वात्तस्य द्युसम्बन्धलाभ इति ।

अन्येषां पक्षे पूर्वपक्षो ऽनुपपन्नः, आदित्यस्य कौक्षेयज्योति षैक्योपदेशविरोधात्; जाठराग्नेः 'दिवः परः' 'विश्वतः पृष्ठेष्वि' त्याद्यर्थानुपपत्तेः । यत्तु टीकायामुक्तं– 'द्योशब्दो' देहव्याप्यभूताकाश परः, तथाच दिवःपरत्वं देहव्याप्याकाशादन्यत्र देहान्तराकाशे वर्तमा नत्वम् 'विश्वतः पृष्ठेष्वि' त्याद्युक्तं सर्वलोकव्यापिदीप्तिमत्वं ब्रह्माण्डरीत्या पिण्डाण्डरूपे देहे ध्यानार्थं तत्तल्लोकतया कल्पितेषु भागेषु न्यासतया "सन्तापयति स्वं देहमापादतलमस्तक" मिति श्रुतिप्रसिद्धया दीप्त्या युक्तत्वमिति । तन्न, दिवःपरत्वस्यास्वरसत्वात्; आरोपमात्रेण लोकनिष्ठ तया दीप्त्युपदेशानुपपादनात् । "छन्दोऽभिधानादि" त्यत्र टीकोक्त श्रौन्तरमप्यनुपपन्नम्, अपरपक्षदूषणदशायां साहस्यानुसन्धान एव सूत्र वाक्ययोस्तात्पर्योपपादनादिति ॥

इति ज्योतिरधिकरणं दशमम् ।

——(×)——

अथ इन्द्रप्राणाधिकरणम् ।

"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृत" मित्यादिवाक्य मुखेन तापनीयप्रत्यभिज्ञया कारणत्वोपपादकस्य मुमुक्षूपास्यत्वस्य भग वति पर्यवसायकमिन्द्रप्राणवाक्यं विचारयति—

१- प्राणस्तथानुगमात् ॥१-१ २९॥

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" त्यारभ्य, 'वरं वृणीष्वे'

ति वक्तारमिन्द्रं प्रति ' त्वमेव मे वरं वृणीष्व यं त्वम्मनुष्याय हिततम म्मन्यसे !" इति प्रतर्दनेनोक्ते, " स होवाच प्राणोऽस्मि प्रज्ञात्मा तम्मामायुर मृतमित्युपास्स्वे " ति श्रूयते ।

तत्र संशयः— हिततमोपासनकर्मत्वस्य जगत्कारणनिष्ठत्वाज्जग त्कारणमिन्द्रशब्दनिर्दिष्टार्थः किं प्रसिद्धेन्द्रः, उतान्य इति ।

पूर्वपक्षस्तु— इन्द्रशब्दनिर्दिष्टः प्रसिद्धेन्द्र एव, तत्रैवेन्द्रशब्दस्य प्रसिद्धेः; ' प्राणोस्मी ' ति प्राणशब्दनिर्देशश्च इन्द्रस्य बलवत्त्वेन प्राण प्रधानत्वादुपपद्यते, ' प्राणा वै बल ' मिति श्रुतेः; या च काचिद्बल कृतिरिन्द्रकर्मैव तदितीन्द्रस्य बलवत्त्वप्रसिद्धेः; प्रज्ञात्मत्वमप्रतिहतज्ञानत्वा दुपपन्नम् ; ' अजरो मृत ' इत्येतच्च निर्जरत्वामृतत्वप्रसिद्धेरुपपन्नम् ; त्वाष्ट्रवधादिलिङ्गसहितायाः प्रसिद्धेर्वृत्तसर्वसिद्धान्तहेतुभ्योपि बलीयस्तया कारणवाक्यानां सर्वेषामपि तदनुसारेण नेयत्वात्; इति ।

राद्धान्तस्तु इन्द्रशब्दनिर्दिष्टः प्रसिद्धेन्द्रादन्य एव, " आनन्दो ऽजरोऽमृत " इत्युत्तरवाक्यप्रतिपादितानामानन्दादीनामन्यस्मिन्नेव सम्भ वात् । चेतनमात्रसाधारणं स्वरूपानन्दत्वं स्वरूपगतमजरामृतत्वञ्च नेह विवक्षितम् , साधारणार्थस्येहोक्तेरनतिशयहेतुतया इन्द्रे विशिष्योक्तेः प्रयोजनाभावात् । अत आनन्दशब्दो निरुपाधिकानन्दयोगपरः । अजरा मृतशब्दौ जराद्याघातनित्यमङ्गलविग्रहयोगपरौ । निरुपाधिकानन्दादि योगश्च कर्मवश्ये प्रसिद्धेन्द्रे न सम्भवतीति ।

सूत्रार्थस्तु— प्राणशब्दनिर्दिष्ट इन्द्रः प्रसिद्धेन्द्रादन्यः, यथान्यत्व सिद्धिस्तथैव " स एष प्राण एव प्रज्ञात्मा ऽऽनन्दो जरोमृत " इति वाक्ये इन्द्रशब्दार्थस्यानुगमात् । इन्द्रस्तथानुगमादिति वक्तव्ये प्राणशब्देनेन्द्रस्य निर्देश इन्द्रस्य प्राणशब्देनानुगमं दर्शयितुम् ।

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्
॥१- १- ३०॥

इन्द्रशब्दनिर्दिष्ट " आनन्दोजरोमृत " इत्यनेनैकार्थ्योदन्य इति नोपपद्यते, " मामेव विजानीहि प्राणोस्मि प्रज्ञात्मा तम्मामायुरमृतमित्युपास्स्व " ति वक्ता हीन्द्रः " त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं बह्वीस्सन्धा अतिक्रम्य दिवि प्रह्लादिनमन्तरिक्षे पौलोमान्पृथिव्यां कालकञ्जान् तस्य मे न लोम च मीयते " इति त्वाष्ट्रवध सालावृकयतिप्रदानदैत्यातिसन्धानपौलोमनिरासैः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति, अत उपक्रमे जीवविशेष इत्यवगते सति " आनन्दोजरोमृत " इत्युपसंहारस्तदनुगुण एव वर्णनीय इति चेत् ? अध्यात्मसम्बन्धभूमा ह्यस्मिन्—आत्मनि यस्सम्बन्धस्सोध्यात्मसम्बन्धः, तस्य, भूमा- बहुत्वम् , सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम्, तच्चास्मिन् वक्तरि परमात्मन्येव सम्भवति । " तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पितास्स एष प्राण एव प्रज्ञात्मानन्दो ऽजरो ऽमृत " इति भूतमात्राशब्देनाचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य, तमेव "आनन्दो जरो मृत " इत्युपदिशति । तदेवमुक्तलचेतनाधारत्वं जीवादर्थान्तभूतेस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ।

ननु कथं प्रज्ञामात्राशब्देन चेतनवर्गाभिधानम् , " दश प्रज्ञामात्रा अधिभूत " मितीन्द्रियाणामेव प्रज्ञामात्राशब्देनोक्ततया तत्प्रत्यभिज्ञानेनास्यापि तत्परत्वादिति चेन्न;–प्रज्ञाशब्दो हीन्द्रियेष्वमुख्यः, जीवेषु तु मुख्यः, तेषां ज्ञानस्वरूपत्वात् । नच मुख्ये सम्भवति लक्षणाश्रयणं युक्तम् । किंच

स्मिन् प्रकरणे प्रज्ञाशब्दो बहुष्वर्थेषु प्रयुज्यते, जीवे तावत् " प्राणोस्मि प्रज्ञात्मे " ति, मनसि च " न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञापये दन्यत्र मे मनोभूदिति नाहमेतन्नाम प्राज्ञासिष " मिति, तथेन्द्रियेषु च " दश प्रज्ञामात्रा " इति, अतो नैकार्थनियत , अतः पूर्वं प्रज्ञाशब्द निर्दिष्टो जीव इह प्रज्ञामात्राशब्देनोच्यते । अथवा- अध्यात्मसम्बन्ध भूमा ह्यस्मिन्— परमात्मासाधारणधर्मसम्बन्धो ह्यध्यात्मसम्बन्ध , तस्य भूमा- बहुत्वं . ह्यस्मिन् प्रकरणे विद्यते । तथाहि- प्रथमं " त्वमेव वर वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस " इति, " मामुपास्वे " ति च परमात्मासाधारणमोक्षोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते ; तथा " एष एव साधु कर्म कारयति त यमेभ्यो लोकेभ्य उन्निनीषति एष वासाधु कर्म कारयति त यमधो निनीषती " ति सर्वस्य कर्मण. कार यितृत्व च परमात्मन एव धर्म.; तथा- " तद्यथा रथस्यारेषु नेमिरर्पिता नेमावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे ऽर्पिता " इति सर्वाधारत्व च तस्यैव धर्म ; तथा " स एष प्राण एव प्र- ज्ञात्मानन्दोजरोमृत " इत्येतेपि परमात्मन एव धर्माः; " एष लोका धिपति , एष सर्वेश " इति च परमात्मन्येव सम्भवति; तदेवमध्यात्म सम्बन्धभूम्नोत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रशब्दनिर्दिष्ट । यदुक्तम्— उपक्रमे जीवविशेषानुगमादुपसंहारस्तदनुरोधेन नेय इति; तदयुक्तम् , उपक्रमोपसंहारौ हि वाक्यावयवौ, तयोरवयवभूतयो· परस्परविरोधे उप क्रमप्राबल्यम्, नत्ववयविविरोधे, अत्र त्वनेकावान्तरवाक्यै· प्रतिपन्नस्य महा वाक्यार्थस्यावयविनो विरोधे अवयवभूतोपक्रमो दुर्बल ।

कथन्तर्हीन्द्रस्य " मामुपास्स्वे " ति स्वात्मन उपास्यत्वोपदेश स्सङ्गच्छते ? तत्राह—

शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ १- १- ३१ ॥

" एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण " इत्यादिशास्त्रदृष्ट्या स्वान्तर्यामिण उपास्यत्वाभिप्रायेण " मामेव विजानीहि मामुपास्स्व " तीन्द्रस्योपदेश । यथाऽहमादिपदानां तत्तच्छरीरकपरमात्म पर्यन्तत्व जानता वामदेवेन स्वान्तर्यामिणस्सार्वात्म्याभिप्रायेण मनुसूर्यादि सर्वात्मभाव उपदिष्ट. । तथाहि श्रूयते–" तद्धैतत्पश्यन् नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे " त्यादि । प्रह्लादश्च— " सर्वगत्वा दनन्तस्य स एवाहमवस्थित । मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने ॥ " इत्यादि ।

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ १-१-३२ ॥**

" न वाच विजिज्ञासीत वक्तारं विद्यात् " ' त्रिशीर्षाणं त्वाष्ट्र महनम् ' ' यावद्ध्यस्मिच्छरीरे प्राणो वसति तावदायु ' रित्यादि जीव मुख्यप्राणलिङ्गबलात् प्रसिद्धेन्द्रमुख्यप्राणविवक्षा तावद्दुरपह्नवा; नन्व स्त्येव विवक्षा, किन्तु परमात्मविशेषणतयेत्युक्तमिति चेत् ' तथा सति परमात्मन. पदान्तरेणानेनैव पदेन वृत्त्यन्तरेण वोपस्थापनसम्भवात् प्रसिद्धेन्द्रादिविवक्षा व्यर्था, तस्मादध्यात्मसम्बन्धो नेति चेन्न,– **उपासा त्रैविध्याद्धेतो** । उपासनत्रैविध्यमुपदेष्टुं तत्तद्विशेषणकपरमात्माभिधानम् । परमात्मन स्वरूपेणानुसन्धानम्, भोक्तृवर्गशरीरकत्वानुसन्धानम्, भोग्य भोगोपकरणशरीरकत्वानुसन्धान चेति त्रिविधमुपासनमुपदेष्टुमित्यर्थ । अ न्यत्रापि हि त्रिविधं ब्रह्मानुसन्धानम् आश्रित—प्रतिपन्नम् । यथा आनन्द वल्ल्या " सत्य ज्ञानमनन्त ब्रह्मे " त्यादौ स्वरूपेणानुसन्धानम् , " तत सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवात्, निरुक्त चानि- रुक्त च, निलयन चानिलयन च विज्ञान चाविज्ञान चे " त्यादिषु चेतन विशिष्टत्वेनाचेतनविशिष्टत्वेन चानुसन्धानम् । नन्वानन्दवल्ल्या त्रिविध

मुपास्त्वे युज्यते, " यदा ह्येवैष "इति वाक्येन पूर्वोक्तार्थोपासनानुवादात्, इह तु न तथा दृश्यत इत्यत्राह—इह तद्योगा दिति । इहापि प्रकरणे " आनन्दोऽजरोमृत " इति स्वेन रूपेणानुसन्धानम् , " प्राणोस्मी " त्यचिद्विशिष्टानुसन्धानम् , " मामुपास्स्वे " ति चिद्विशिष्टानुसन्धानमिति त्रिविधमुपासनं युज्यत एव । " प्राणोस्मी " ति वाक्ये हि " प्राणोस्मि प्रज्ञात्मे " ति प्रथमान्ततया निर्देश , "अमृत" मितीतिकरण च दृश्यते, तेनायमर्थोऽवगम्यते— आयुरमृत मामित्युपास्स्वेति- प्राणेन्द्रप्रकारकमुपास्स्वे ति । अन्यथा पूर्वे प्रथमान्तनिर्देशस्य इतिकरणस्य चास्वारस्यात् । "आयुरमृत " मित्यैहिकामुष्मिकसकलफलप्रदत्व उपास्यत्वोपपादकमुक्तम् । अतो नेन्द्रशब्दनिर्दिष्ट प्रसिद्धेन्द्रादन्य इति ।

परेतु—प्राणशब्दनिर्दिष्ट पञ्चवृत्तिर्वायु परमात्मा वेति तावत्संशय , तत्र प्रसिद्धयतिक्रमे कारणभावात् वायुरेव प्राण इति पूर्वपक्षे, राद्धान्त — प्राण परमात्मा, तथा— परमात्मपरत्वे, प्रकरणस्योपक्रमपरामर्शोपसहारै , अनुगमाद् समन्वयात् । एव स्थितेपीन्द्रलिंगाना किंचिद्बलावष्टम्भेन पूर्व पक्षान्तरमुत्थाप्य निराकरोति न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् । इह प्राणशब्दनिर्दिष्ट इन्द्र इति युक्तम् , प्रसिद्धस्येन्द्रस्य " मामेव विजानीहि " ति वचनात् लिंगात् , नहीद ब्रह्मणि सङ्गच्छते, " मामेवे ' त्यवधारणेन स्वानुगतब्रह्मपर्यवसानव्यावर्तनात् , अन्यथा अवधारणवैयर्थ्यात्, तस्मादिन्द्र एव प्राण इति पूर्व पक्ष । परमात्मेति सिद्धान्त । अस्मिन् खलु प्रकरणे अध्यात्मसम्बन्धाना प्रत्यगात्म सम्बन्धिना लिंगाना, भूमा बाहुल्य उपलभ्यते। तथाहि " यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायु " रित्यायु प्रदत्व, " अस्ति त्वेव प्राणाना निश्रेयस ' मितीन्द्रियनिश्रेयसहेतुत्वम् , "इद शरीर परिगृह्योत्थापयती" ति शरीरोत्थापकत्वमित्यादीनि बहूनि पराचीनायामिन्द्रदेवतायामसम्भावि

त्तानि प्रत्यग्लिंगानि दृश्यन्ते । कथं तर्हि "मामेव विजानीही" ति वस्तु रात्मोपदेशः? शास्त्रदृष्ट्या तूपदेशो वामदेववत् । इन्द्र स्वगात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेति शास्त्रदृष्ट्या तूपदिशति " मामेव विजानीही " त्यादि। पुनर्विधान्तरेण पूर्वपक्षमुत्थाप्य निराकरोति- **जीवमुख्यप्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्** । स्यादेतत् , माभूदिन्द्र उपास्यः प्रतिपाद्य, तथापि जीवप्राणब्रह्माणि त्रीण्युपास्यानि प्रतिपाद्यानि स्युः; न तु ज्ञेयं ब्रह्मैव प्रतिपाद्यम् , ब्रह्मलिंगवज्जीवमुख्यप्राणलिंगयोरपि सत्त्वादिति पूर्वः पक्षः । राद्धान्तस्तु—उपासात्रैविध्यप्रसंगात् , आश्रितत्वाच्च अन्यत्रापि ब्रह्मलिंगवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेः, इहापि हिततमोपासादिब्रह्मलिंगयोगात् ब्रह्मोपदेशएवायमिति गम्यत इति । परक्षपक्षे मुख्यप्राणपूर्वपक्षीकरणमनुपपन्नम् , " प्राणोऽस्मि प्रज्ञात्मे " ति प्राणस्य विशेषणतयोपादानात् । चतुर्थसूत्रे शब्दोपात्तस्याध्यात्मसम्बन्धभूम्न एव निषेध्यत्वसम्भवे अन्यस्य निषेध्यत्वकल्पनं प्रसक्तपदाध्याहारश्च दोषः ।

इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन
तदेकदेवतेन तच्चरणपरिचरणपरायणेन तत्प्रसादलब्ध
महाचार्यपरनामधेयेन रामानुजदासेन विरचिते

## पाराशर्यविजये

### प्रथमाध्यायस्य प्रथमः पादः ।



मुपा नं युज्यते, " यदा ह्येवैष "इति वाक्येन पूर्वोक्तार्थोपासनानुवादात्, इह तु न तथा दृश्यत इत्यत्राह—इह तद्योगा दिति। इहापि प्रकरणे " आनन्दोजरोमृत " इति स्वेन रूपेणानुसन्धानम्, " प्राणोस्मी " त्यचिद्विशिष्टानुसन्धानम्, " मामुपास्स्वे " ति चिद्विशिष्टानुसन्धानमिति त्रिविधमुपासनं युज्यत एव। " प्राणोस्मी " ति वाक्ये हि " प्राणोस्मि प्रज्ञात्मे " ति प्रथमान्ततया निर्देशः, "अमृत" मितीतिकरण च दृश्यते, तेनायमर्थोऽवगम्यते— आयुरमृत मामित्युपास्स्वेति प्राणेन्द्रप्रकारकमुपास्स्वे पेति। अन्यथा पूर्व प्रथमान्तनिर्देशस्य इतिकरणस्य चास्वारस्यात्। "आयु रमृत " मित्यैहिकामुष्मिकसकलफलप्रदत्व उपास्यत्वोपपादकमुक्तम्। अतो ऽत्रेन्द्रशब्दनिर्दिष्ट प्रसिद्धेन्द्रादन्य इति।

परेतु–प्राणशब्दनिर्दिष्ट पञ्चवृत्तिर्वायु परमात्मा वेति तावत्संशय, तत्र प्रसिद्धयतिक्रमे कारणाभावात् वायुरेव प्राण इति पूर्वपक्षे, राद्धान्त – प्राण परमात्मा, तथा– परमात्मपरत्वे, प्रकरणस्योपक्रमपरामर्शोपसहारै, अनुगमात्- समन्वयात्। एव स्थितेपीन्द्रलिंगाना किंचिद्बलावष्टम्भेन पूर्व पक्षान्तरमुत्थाप्य निराकरोति न वक्तुरात्मोपदेशादिति चेदध्यात्मस- म्बन्धभूमा ह्यस्मिन्। इह प्राणशब्दनिर्दिष्ट इन्द्र इति युक्तम्, प्रसिद्ध- स्येन्द्रस्य " मामेव विजानीहि " ति वचनात् लिंगात्, नह्येद ब्रह्मणि स ऋच्छते, " मामेवे " त्यवधारणेन स्वानुगतब्रह्मपर्यवसानव्यावर्तनात् अन्यथा अवधारणवैयर्थ्यात्, तस्मादिन्द्र एव प्राण इति पूर्व पक्ष। परा त्मेति सिद्धान्त। अस्मिन् खलु प्रकरणे अध्यात्मसम्बन्धाना प्रत्यगा सम्बन्धिना लिंगाना, भूमा बाहुल्य उपलभ्यते। तथाहि " यावद्ध्यस्मि ऽे प्राणो वसति तावदायु " रित्यायु प्रदत्व, " अस्ति कच प्राण म ' गितीन्द्रियनिश्श्रेयसहेतुत्वम्, "इद शरीर परिगृह्योत्थापय ति शरीरोत्थापकत्वमित्यादीनि बहूनि पराचीनायामिन्द्रदेवतायामसम्